श्री श्रीनिवासपरब्रह्मणे नमः

VAIKHANASIYA

# KHILĀDHIKĀRA

(BHRGUSAMHITA)

श्रीवैखानसे - भगवच्छास्त्रे

# ।। खिलाधिकारः ।।

[भृगुसंहिता]


आकुलमन्नाडुग्रामाभिजनैः वैयाकरणपञ्चाननाद्युपाधिसमलङ्कृतैः

**पण्डित रों. भ. पार्थसारथिभट्टाचार्यैः**

**संशोधितः**

वैखान सागम चूडामणि

**माडंबाकं कृष्णस्वामि श्रीनिवास भट्टाचार्यैः**

T.T.D. वैखानसागम आस्थान पंडितैः

परिशीलितः






प्रकाशकाः

तिरुमल-तिरुपति देवस्थानम् तिरुपति

1997

# KHILĀDHIKARA

by

**Maharshi Bhrugu**

TTD Religious Publication Series No. 490
T.T.D. Second Edition 1997
Copies : 1000





Published by :
Sri. M.K.R. Vinayak, I.A.S.
Executive Officer
Tirumala Tirupati Devasthanams
Tirupati.





Printed at
*Prabhala Hi-tech Enterprises Pvt. Ltd.*
5th Line, Nehrunagar, GUNTUR - 522 001
Ph. 356705

# FORWARD

This book "KHILĀDHIKĀRA" was first published by Tirumala Tirupathi Devasthanams during the year 1961 under the guidance of ***Late Sri. R. Parthasarathi Bhattacharya,*** Vaikhanasa Agama Scholar. This is the reprint of that book. In Vaikhanasa Agama Sastra, Sage Bhrugu had written several texts explaining the construction of temples, Nitya Pooja, Visesha Pooja etc., Out of them T.T.D. had already published the books Prakeernadhikara and Yajnaadhikara in Telugu script.

To encourage and propogate the vedic culture and sastras T.T.Devasthanams is publishing several religious books. The publication of Vaikhanasa Agama books is among them. The Khiladhikara is having chapters on construction of temple Vimanas of thirty two varieties and details of several vigrahams and their Lakshanas, which are very useful to pandits and silpis.

I express my thanks to T.T.D. Asthana Pandit Sri. M.K. Sreenivasa Bhattacharya, and also to the Secretary, Sri Vaikhanasa Divya Siddhanta Vivardhini Sabha for their co-operation in bringing out this edition.

I also thank M/s. Prabhala Hi-Tech Enterprises Pvt. Ltd., Guntur for printing the book so neatly and expeditiously.

I hope this book will serve the needs of Archakas and Acharyas in Vaishnava temples and particularly in the temples of T.T. Devasthanams.

*M.K.R. VINAYAK*
Executive Officer
T.T. Devasthanams

Tirupati
Dated 12-10-1997

।।श्रीः।।

।।श्रियै नमः।।

।।श्रीनिवासाय नमः।।

।।श्रीमद्विखनसमहागुरवे नमः।।

# ।।उपोद्घातः।।

नारायणं सकमलं सकलागमेन्द्रं वैखानसं मम गुरूं निगमागमेन्द्रं। भृग्वत्रिकश्यपमरीचिमुखान् मुनीन्द्रान् सर्वानिहं कुलगुरून् प्रणमामि मूर्ध्ना ।।

श्रीवैखानसभगवच्छास्त्रग्रन्थः "खिलाधिकारः" श्री विखनसशिष्येण भृगुणा कृतः। श्रीविष्णुपूजा - आलयप्रतिष्ठा - प्रायश्चित्तादि विषय प्रकाशनार्थं द्वादश ग्रन्थाः भृगुणा लिखिताः। एतेषां ग्रन्थानाम् मध्ये पञ्चैव ग्रन्थाः लभ्यन्ते। तेषां पुनः मुद्रणार्थं तिरुमल तिरुपति देवस्थानेन आज्ञापितम्। ये च ग्रन्थाः लभ्यन्ते ते "प्रकीर्णाधिकारः", यज्ञाधिकारः, खिलाधिकारः, क्रियाधिकारः वासाधिकारश्चेति कथ्यन्ते। अन्ये सप्तग्रन्थाः यत्र कुत्रापि न लभ्यन्ते। परं तु तालपत्रकोशेषु विद्यन्ते वा न जानीमः। परं प्रयत्नः क्रियते। अस्मिन् वत्सरे प्रकीर्णाधिकारः, यज्ञाधिकारः चेति द्वौ ग्रन्थौ प्रकाशं नीतौ। खिलाधिकारेऽस्मिन् कर्षणादि - आलय- प्रतिष्ठा अर्चनादिविषयाः सम्यक् विवेचिताः। 'दुर्गा - ज्येष्ठा नवग्रहादि देवतान्तराणां प्रतिष्ठादिकं प्रतिपादितम्' किञ्च "नलीनकादि-कूटागार" पर्यन्त विमान लक्षणानि (द्वात्रिंशत्) सम्यक् निरूपितानि। तेषु विमानेषु प्रतिमालक्षणं च विशेषेण प्रतिपादयति भृगुः। अत एवायं

ग्रन्थः वैखानस-शिल्पशास्त्र-अन्य-शास्त्र-जिज्ञासूनां पण्डितानां च परमप्रामाणिकतया विराजतेतराम्।

आगमशास्त्रग्रन्थानां समुच्चयः देवालयपूजादिषु परं आवश्यकः इति मनसि निधाय उचितकाले पुनः प्रकाशनार्थं तिरुमल तिरुपति देवस्थान कार्यनिर्वहणाधिकारिणः श्रीमन्तः श्री M.K.R. विनायक् I.A.S. महोदयाः आज्ञां दत्तवन्त इति प्रणामसहितां कृतज्ञतां प्रकटयामः।

किञ्च ग्रन्थमिमं पुनः प्रकाशानार्थं महत् साहाय्यं कृतवतां साहित्यविद्याप्रवीण - भाषाप्रवीण-पण्डित दीवि वेंकट रामाचार्यमहोदयानां श्रीवैखानसदिव्यसिद्धान्त विवर्धिनी सभायाः कार्यदर्शिनां श्रीमतां दीवि विखनसाचार्य महोदयानां कृते महान्तं सेवाभावं आविष्कुर्मः।

एतत्ग्रन्थ प्रकाशान विषये प्रधानपात्रं निर्वहन्तः श्रीमन्तः एन्. श्रीराममूर्तिमहोदयाः (तिरुमल तिरुपति देवस्थान प्रकाशनसंपादकाः), पदे पदे प्रणामार्हाः। तथैव "प्रभला हैटेक् एन्टरप्रैजेस् प्रैवेट् लिमिटेड्", गुण्टूर, महोदयाः धन्यवादार्हाः भवन्ति।

सर्वेषां श्रीनिवासः मङ्गलमातनोतु।

इति

तिरुमल — बुधजनविधेयः

२८.८.९७ — **माडम्पाक्कम्-कृष्णस्वामि श्रीनिवास भट्टाचार्यः**

तिरुमल तिरुपति देवस्थान आस्थानपण्डितः

॥श्रीः॥

॥श्रियै नमः॥

॥श्रीनिवासाय नमः॥

॥श्रीमद्विखनसमाहागुरवे नमः॥

॥श्री वेंकटाद्रिनिलयः कमलाकामुकः पुमान्॥

॥अभंगुरविभूतिर्नः तरङ्गयतु मङ्गलम्॥

भोः भोः महाशयाः।

तापत्रयातुराः जनाः अमृतस्वरूपं प्राप्तुं भगवन्तं श्रीमन्नारायणं आराधयन्ति। तदेवोक्तम् विखनसा "भक्त्या भगवन्तं नारायणमर्चयेत्" – तद्विष्णोः परमं पदं गच्छातीति। तत्र तावत् वेदः प्रमाणम्। वेदमन्त्रैरेव भगवान् संतुष्यति नान्यः तत्तोषकारकः अनुमानादिप्रमाणानां सत्वेऽपि श्रुतिरेव परमं प्रमामामिति वेदविदो वदन्ति। विखनसा वेदराशेः स्वीकृततात् मन्त्राणां वैखानसमिति कथ्यते वैखानसं वैदिकं ब्रह्मप्रतिपादकमिति निष्कर्षः। अत्र -

"वैदिकं वैखानसं प्रोक्तं तान्त्रिकं पाञ्चरात्रकमिति आभाणकमपि अनुसन्दधाति। भगवान् विखनाः भृगु-अत्रि-मरीचि-कश्यपान् प्रति सार्धकोटिपरिमितं वेदसारं प्रत्यबोधयत्। तेन उद्बोधिताः चत्वारः महर्षयः चातुर्लक्षग्रन्थात्मकं आगमस्वरूपं प्रकटीचक्रुः। आगमेषु वैखानसमेव सर्वश्रेष्ठं वैदिकत्वात् तस्य। चतुर्षु ऋषिषु भृगरेव गरीयान् देवांशसंभूतत्वात् तथाचोक्तुम् गीतायां "महर्षीणां भृगुरहमिति" भगवतो अंशांशावतारः भृगुः। "धृतिमान् मतिमान् ज्ञानवान्" इति सर्वयज्ञकर्मसु अस्य प्राथान्यमुपवर्णितम्। भृगोः संकल्पतनया लक्ष्मीः। प्रथमतः भृगुः आलयनिर्माणं शिलापरिशीलनं विमानस्वरूपं प्रतिष्ठाविधिः कलान्यासविधानंच बहुधा निरूपितवान्। तन्निरूपितं वैखानसं अधिकारात्मकम्। यदुक्तं वैखानसं तदेव "भगवच्छास्त्रं" इति मुनयो वदन्तिच अनेन द्वादश अधिकाराः लिखिताः। परं पञ्चैवाद्य मिलन्ति। अन्ये कालगर्भे लीनाः, तालपत्रकोशेषु, स्थिताः वा इति न ज्ञायते। स्थितस्यैव रक्षणमिति न्यायेन पञ्चानामेव मुद्रणावकाशः समजनि तेषु "खिलाधिकारः" विस्तृतः परिशीलनार्हः। अस्यैव "अनुक्ताधिकारः" इति अपरं नाम। इतरेषु अधिकारेषु अनुक्ताः विषयाः सोपपत्तिकं कथिताः।

पूजा त्रिविधा-मानसी-होमपूजा-बेनपूजा इति च मानसी, होमपूजा अमूर्तार्चनम् भवति बेरपूजा समूर्तार्चनं। समूर्तामूर्तार्चनयोः समूर्तस्यैव विशेषः।

सर्वेभ्यः यज्ञेभ्यः बेरपूजा विशिष्यते। यजमाने विनष्टेऽपि बेरपूजा शाश्वतं भुवि तिष्ठति। बेरपूजायां सर्ववेदमन्त्राः कर्मानुरूपतः सौम्याः फलप्रदाः भवन्ति। सौम्यैरेव मन्त्रैः विष्णुः आराध्यमानः सन् सर्वजनेभ्यः तृप्तिं पुष्टिं च ददाति। समूर्तार्चनस्यैव श्रौतत्वं कथ्यते। श्रुतिरेव धर्मस्य मूलम्। धर्मेण जीवराशिः बद्धः धर्मरक्षणाय आलयार्चा शोभना कल्याणदायिनी च।आगमविधानेन प्रवर्तितं आलयार्चनं सुसंपन्नं भवति। कलौ आगमस्यैव प्राधान्यं वर्तते। "कलौ आगम एव केवलम्" आगमविद्यायां भृगुणा प्रोक्ताः अधिकाराः अतीव प्राधान्यं वहन्ति। अधिकारेषु "खिलाधिकारः" प्रथमतः कीर्तनीयः। खिलाधिकारे केचन विषयाः अद्भुततया वर्णिताः। बेरप्रतिष्ठायां "सामृत हारक" इति द्वैविध्यं स्वीकृतवान् तत्र सामृतमेव विशिष्टम्, यजमानस्य इष्टसिद्धिदं इति कथयति भगवान् भृगुः।

तथैव विमानलक्षणानि द्वात्रिंशत् कथितानि तालि नलीनकादि-कूटागारपर्यन्तं वर्तन्ते। तेषां वर्णने भृगोः बुद्धिवैशिष्ट्यं सुस्पष्टं भवति शिलासंग्रहणे गुणदोषविचारः बहुथा प्रशंसनीयः। आलयनिर्माणे परिवारदेवानां आवश्यकता सुष्ठुप्रतिपादिता। अस्मिन् ग्रंथे त्रिचत्वारिंशत् अध्यायाः सन्ति। तत्र चतुरथिक पञ्चशत पुटानि विद्यन्ते। अपिच अनुवन्धरूपेण द्विपञ्चाशत् पुटानि सन्ति। आहत्य द्विपञ्चाश दधिक पंचशतानि पुटानि गन्थेऽस्मिन् विराजन्ते। ज्येष्ठाऽयाः उत्पत्तिः प्रतिष्ठा च सम्यक् प्रतिपादिता। ज्येष्ठायाः कलेश्च विवाहोत्सवः कार्य इति, तेन लोककल्याणं भवतीति प्राह भगवान् भृगुः। आदित्यादिनवग्रहाणां प्रतिष्ठा, तत्परिवाराणांच स्थापनं वैखानसैरेव कर्तव्यमिति प्रत्यपादयत्। दुर्गायाः आराधनं अन्यदेवानां पूजनं च वैखानसानां विहितमिति कथितम्।

किञ्च प्रतिष्ठानन्तरं स्नपनस्य प्राधान्यं वदति महर्षिः। प्रतिमा निर्माणे अंगांगस्वरूपकथनं अद्भुतावहम्। पक्ष्मलक्षणकथने तस्य सूक्ष्मदृष्टिः मनवातीता। एवं आगमशास्त्रस्य आमूलचूडं परिशीलने अस्य ग्रन्थस्य परिगणनं अग्रेतिष्ठतीति निश्चप्रचं। अत एव आगम शास्त्रे भगवान् भृगुः शिरसा वन्द्यः।

तस्य वाक्यं शिरोधार्यमिति सर्वमनवद्यम् इति शम्।

ईश्वर वत्सरे<br>श्रावणापूर्णिमा<br>सोमवासरः<br>१८-८-९७

इत्थं<br>बुधजनविधेयः<br>साहित्यविद्याप्रवीणः-भाषाप्रवीणः<br>विश्रान्त संस्कृत पंडितः<br>**दीवि वेंकट रामाचार्यः**

# INTRODUCTION

The credit for having ushered the first publication of one Vaikhanasa Literature goes to Sriman Raghupati Bhattacarya familiarly famous as Sri Vasudeva Bhattacharya of Konerirajapuram, Tanjore. He had printed and published the Vaikhanasa Smartasutra and the Smarta part of Vaikhanasa Mantra prasna in Granthakshara in Kumbhakonam in the year 1910.

The veteran scholar and Agama pandit Sriman Pandita Vallipuram Raghunatha Chakravarti Bhattacharya and the famous M.M. Vyakarana Setumadhavacharya edited Vimanarcana Kalpa of Marici and published it under T.T. Devasthanams auspices in the regime of Vicaranakartas in 1926. At the same time it was published by the Vaikhanasa Granthamala of Egavaripalem in Telugu Script in 1927. Later the eminent scholar M.M. Sri T. Ganapati Sastri published the works Vaikhanasa Dharma Prasna and Marici Vimanarcana Kalpa in the Sanskrit series edited by the Government of Travancore in 1935. For various reasons Marici alone was imperfectly edited without proper care regarding the readings and that too incompletely. Though some publications are complete in respect of furnishing the mere material they do not give satisfaction with regard to correctness of the readings and proper get up. It has become absolutely necessary to revise it critically after perusing the different sources available and the alternate Samhitas with full commentary and with English translation. A little later two brilliant scholars Sri Vallipuram Raghunatha Chakravarthi Bhattacharya (above mentioned) and Sri M. Ramakrishna Kavi, M.A., author of Bharata Kosa together supervised the publication of Samurtarcanadhikaranam of Atri, another Vaikhanasa Samitha under the auspices of T. T. Devasthanams, Tirupati in 1943 and I had the opportunity of lending my Vidyanilayam manuscripts for the purpose. Subsequently the Travancore Government expressed their intention of publishing the Khiladhikaram of Bhrgu and in pursuance of it had a manuscript copy of the work prepared with the aid of various copies available in their library. It was sent to me for necessary critical revision with standardised readings

where different texts in evidence. To fulfil the task assigned to me at the·time I had consulted the following originals with the help of scholars and proposed the correct texts for publication.

1. The palm leaf manuscript (incomplete) available in S. V. U. O. R. Institute, Tirupati.

2. The palm leaf manuscript with Sri Uttanur Pandita Arcakam Narasimhacharya of Uttanur.

3. The palm leaf and paper manuscripts in the Sri Vaikhanasa Vidyanilayam, Akulamannadu.

4. The palm leaf manuscript with Pandita Sri Konnur Sundara Bhashya Bhattacharya of Villivakkam.

5. The paper manuscript of Sri Árcakam Peddinti Srinivasa Dikshitulu garu, Tirupati.

6. The palm leaf manuscript available with Arcakam Sri Soumya murthi Bhattacharya of Tirukkottiyur.

Under the impression that the said work by them. would be published duly edited the publication of Jnanakandam (Kasyapa Samhita) and Bhrgu Samhita (Kriyadhikaram) was undertaken and brought out by me under the auspices of the T. T. Devasthanams in 1948. Subsequently there was correspondence with the Curator of the Travancore Library regarding the publication of Khiladhikaram with no fruitful result. Finally learning that they had dropped the idea of such a publication altogether, I, with the good offices of the T. T. Devasthanams had taken up that task while I was reader in S. V. U. O. R. Institute. At that time I had the chance of consulting an original and old palm leaf manuscript furnished by the sons of Agama pandita late Sri Arcakam Alagasingara Bhattacharya of Nagamangalam, Mysore State and a transcribed paper copy of palm leaf manuscript from Adyar library got by Sri V. M. Narasimham, B.A., B.E., M.I.E., M.R. San. I.(Lon.) the famous architect of South India, Triplicane. Taking Travancore manuscript collection as the basic text, I had consulted the above two texts for endorsing the readings and other materials of research value and got the edition revised. But due to change over of the Sri Venkateswara Oriental Research Institute to the S. V. University, I had to retire from service under age rules and consequently the work and the publication was delayed. However,

the manuscript prepared by me was handed over to the University with the fond hope of its being published under University auspices. But there the copy lay idle for some time. The T. T. Devasthanams realising that the efforts bestowed on the work should not go in vain without recognition, obtained the permission of the University for the publication of the work under my supervision. The editing was begun in 1959. Due to paucity of different versions the work being a rare one dealing with material of intricate and complex nature, there had been difficulty felt at times regarding the perfection of the readings. The correct readings at certain stages were arrived at by greater mental strain. Yet the matter presented here confirms mostly to the Nagamangalam version with necessary fixation of readings wherever needed bearing in mind the contextual topics. In this venture some project, I had in good measure the advice of my friend Sri Vedantam Jagannathacharyulu Garu, the T. T. D. Asthana Vidwan and erudite scholar in tarka and vedanta. I take this opportunity of expressing my gratitude to him.

In the Vaikhanasa Bhagavachastra which is derived from the entire Vedic tradition (agama), including both the Purva and Uttara portions, the nature of God is interesting. God is allpervasive, full of infinite attributes and is beyond all the faults of the world and transcending all. He is capable of being worshipped both in the amurta or formless manner as well as the formed (murta). God is the supreme personality and has five statuses. They are the Supreme transcendent Vishnu, and the Vyuhas comprising Purusa, Satya, Acyuta and Aniruddha, the Vibhava forms of the innumerable avataras he had taken for the restoration of dharma of which the ten are the most well-known, the Harda form of immanent resident in the hearts of all as their inner ruler immortal, and the Arca form which is in the idols or icons in temples. These icons are all descents of the Supreme Visnu though some of them are Svayamvyakta, self-manifested as Sri Venkateswara on the Tirumala Hill, some of them are Rishi formed, some others by devas and by men. The Vaikhanasa sastra shows that from earliest times iconic worship (the substance of Uttara bhaga) went followed by the Yajna forms of worship (which

form the substance of the teaching of the Vedic Purva bhaga) and therefore it is not a later innovation. All these five statuses of Vishnu are one only and are helpful to the final realisation and attainment of the Highest State of Visnu's world which is the goal of all souls.

'भक्त्या भगवन्तं नारायणमर्चयेत्तद्विष्णोः परमं पदं गच्छतीति विज्ञायते'

(श्रीवैखानस सूत्रे ४ प्रश्नः)

Vaikhanasa Sastra also speaks of the individual souls as seeking God. But due to beginningless ignorance or avidya, some souls are caught up in the bondage and are unable to know God and even lose their own nature. Such souls could attain freedom from avidya by worshipping the Arca form of Vishnu, known as Narayana with devotion as prescribed by the Vaikhanasa Sastra. By worshipping with devotion Narayana, one attains the highest place of Vishnu says the Sastra.

God in the Vaikhanasa Sastra must be considered as the self of the individual devotee and the world-sariri. Thus He is sarvasariri. The individual souls are of atomic size and conscient and subservient to God. The bond souls have to realise this selfhood of God through devotional worship according to the sastra and gain freedom. Thus the liberated ones form a group of souls and there are said to be some souls which have always been free from this bondage known as Nityas. The individual souls through worship attain the highest worlds and attain Salokya, Samipya, Sarupya and Saujya and gain the supreme felicity of serving the Divine (nitya Kainkarya). Of course those who attain this highest abode of Visnu do not return to the world of rebirth and sorrow.

'विश्वतश्चक्षुरुतविश्वतो मुखो विश्वतोहस्त उत विश्वतस्पात्। संबाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः' इति श्रुतिः। तत् सर्वव्याप्यशरीरः परमात्मैव सर्वभूतानां प्रभवरक्षणसंहृतिनिमित्तश्शरीरी भवति'

क्षेत्रज्ञाश्च बहवः। तेऽपि नित्याः। अनाद्यविद्यासञ्चितपुण्यपापफलं भोक्तुं बहुविधं देहं प्रविश्य तत्तदात्माभिमानिनस्तत्र तत्र शुभाशुभकर्माणि कृत्वा तत्तत्फलानुरूपं देहं पुनः पुनः प्राप्य वर्तन्ते'

'इत्येवं संसारसमुद्रोत्तरणाय साधनं ज्ञानयोगञ्च ब्रह्मणा मुरा मम प्रणीतम्। तदेव युष्माकं मया चोक्तम्। ज्ञानोपदेशं गुरुशिष्यमार्गेण ज्ञात्वा परमात्मानं सदा पश्येत्। एवं सदा ध्यातुमशक्यत्वात् प्रतिमादिषु पञ्चमूर्तिनामभेदैः समावाह्याभ्यर्चयेदेतत्समूर्तार्चनं सर्वसिद्धिप्रदम्। तस्मात् गृहे देवायतने वा समूर्तार्चनमेव कारयेदन्यथा न परमं पदमवाप्नोति। तस्मात् श्रुतिचोदितं परमं गुह्यमेतत् ज्ञानयोगञ्च ज्ञात्वा समाचरेदिति विज्ञायते'। (तत्त्वज्ञानोपदेशपटले मरीचिः।)

In general the Vaikhanasa philosophy of God and the souls conforms naturally to the Upanishadic philosophy expounded by Sri Ramanuja. For Ramanuja tried to show how Narayana is the supreme object for our devotion, through whom alone we can attain the Highest purushartha of Vishnu, Brahma sannidhya and kainkarya, Who is spoken of as the Sariri (Self) of whom the universe and the souls are body (sarira), and showed that semusi-bhakti is most important for the worship of the Arca form of God Srinivasa.

To conclude, I feel great pleasure in expressing my heartfelt gratitude to the Tirumala Tirupati Devasthanams Board of Trustees and to the eminent Executive Officer, Sri C. Anna Rao, B.A., for having given me this opportunity of bringing out a rare work attractive in such a manner. I owe much to the owners of manuscripts consulted by me as aforesaid, for placing their originals with me. My gratitude is also in great measure due to the Superintendent and the staff of T. T. D. Press who got the work completed neatly and properly. I crave in indulgence of the scholars if any mistakes have crept into this work.

Tirupati,
1-11-1961.

Akulamannadu
R. PARTHASARATHI BHATTACARYA.
*Agamacharya.*

श्रियै नमः

श्री श्रीनिवासाय नमः

वेदान्तनिलयः श्रीमान् कल्याणगुणसागरः।
भक्तप्रियो जगन्नाथः श्रीनिवासोऽस्तु मे हृदि।।
आदौ कल्पप्रवक्तृभ्यः श्रौतस्मार्तादिकर्मणाम्।
वैखानसमहर्षिभ्यो वंशर्षिभ्यो नमो नमः।।

## ग्रन्थपरिचयः

भो भो महाशयाः।

अथ तापत्रयातुरैरमृतत्वाय श्रीमहाविष्णुरेव समाराध्य इति निखिलप्रमाणराजवीथीप्रतिपन्नोऽयं विषयः- तत्र प्रमाणेषु वेदस्तावत् प्रमाणसार्वभौमः, यतो ह्यलौकिकार्थबोधकस्सः। प्रमाणान्तरै रनधिगतमप्यर्थं प्रबोधयितुमीष्टे। न तथेतराणि प्रमाणानि। अलौकिकत्वं हि प्रमाणान्तरव्यावर्तकत्वमेव। अनुभूयमानात् स्रक्चन्दनादेरिष्टमवगमयति प्रत्यक्षम्। स्वेनानुभविष्यमाणात्पुरुषान्तरगताच्च तस्मात्तदवगमयत्यनुमानम्। खेदात् स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमः गम्यायामगम्यायाञ्च। तत्रेयं गम्या इयमगम्या इति योऽयं नियमः क्रियते स च ते। नैवेति महाभाष्यकारः। अपि च तेन विना केनचिदपि कश्चिदपि यागादेरिष्टप्राप्तिं कलञ्जमक्षणवर्जनादेरनिष्टपरिहारञ्च न विजानाति-तथा प्रमाणान्तर सहस्रेणापि सहस्रं वा न विजानीयादिति वेदभाष्यकारः। अत एव 'तर्काप्रतिष्ठानात्' 'शास्त्रयोनित्वात्' इति सूत्रयति पाराशर्यः। अतीन्द्रियार्थद्रष्टारस्सत्यवचसस्ते महर्षयः' नह्यन्यथा वक्तुमभिप्रयन्ति। अत एव ह्याप्ता भवन्ति यथार्थदर्शिनः। यथार्थवादिनश्चाप्ता भवन्तीति प्रमाणसरणिः।

तथाविधः प्रमाणसार्वभौमो वेदः भगवदाराधनौपयिकः स भाग द्वयात्मना चकास्ति। तत्र प्राधान्येन पूर्वो भागस्तावदमूर्ताराधनौपयिकः, उत्तरो भागस्तावत् समूर्ताराधनौपयिकः। समाराधनञ्च जपहुतार्चनध्यान रूपैश्चतुर्धा अवतिष्टत इति महर्षयः। अत्रैवान्तर्भावस्त्वितरयोरित्यन्ये। तत्रैवान्तर्भावस्तेषामित्यपरे। समीक्षायांसम्पन्नमेव सर्वमिति परे। अस्तु नामैतत्। एतच्च करणत्रयैकप्राधान्येनेति प्राचामाशयः। तथापीतरयो-रत्रान्वयस्सम्भवत्येव। अन्तिमेत्वितरयोरप्रवेशः। अनुभवात्। अतः परिशेषात्तस्यैव प्रधानस्य प्रवेशः। यतो हि तेन विना संसर्ग नोन्मिषति प्रत्ययः। प्रत्ययान्तरन्तु इतरापेक्षमपि भवतु। तावता न हि किं नश्छिन्नम् ? प्रत्ययविशेषरूपञ्चेदं तदेकसाध्यं भवति। प्रत्ययविशेषस्य सजातीय प्रवाहात्मकतायामेव स्वरूपसिद्धिर्भवति। नेतरधा विजातीय प्रत्ययान्तरितत्वे भवति। तच्च प्रधानं प्रतिकलमर्थान्तरस्पर्शनशीलं

नातस्तत्र वाहरूपतायास्सौलभ्यम्। अत एव महर्षयः तार्तीयस्यैव श्रैष्ट्यमज्ञासिषुः। 'सदा ध्यातुमशक्यत्वात्' इत्यादिना। तथाऽवादिषुश्च। अत एव समासव्याससाधारण्येन सर्वमपि समालोच्यैवास्याव्यवहितोपायतां निश्चिनोति भाष्यकारः। एवञ्च तार्तीयमाराधनं नान्तरीयकतया दिव्यमङ्गलविग्रहमन्तरा न सिद्ध्यतीति समूर्तसंसिद्धिः। अन्यथा न सम्भवति पत्रादिप्रदानम्। उपहृतं भक्त्या तदेव भोग्यतायामन्तरङ्गमिति हि भगवद्वचनम्। तथा चात्रालम्बने रम्ये सति दृष्टिर्बद्ध्यते, यदा बन्धस्तस्यास्तदा मनसोऽपीत्यार्थिकः। ततः प्रत्ययान्तरस्यापि। 'ता राघव' मिति न्यायात्। ततस्समुल्लसति प्रीतिरा त्यन्तिकी। ततस्सा चास्पृशन्ती विषयान्तरं तदेकतानतां लभेत। उत्कटतां प्राप्ता चेत्सा सर्वत्रापि कलयेत्सारूप्यम्। 'सा सा सा' सेति न्यायात्। अत एव तां तथाभूतां याचते प्रह्लादोऽपि 'या प्रीति' रिति। अतस्सौलभ्यं चातुर्थिकात्। श्रैष्ठ्यञ्च तत्कार्यकरत्वात्। अत एव तस्याप्यङ्गभावं सञ्जगदिरे ह्यनुभोक्तारो महर्षयः। आचार्यपादास्तु एतत्सर्वमपि समालोच्यैव संसिद्धिसा-धकतामस्यैवानुजगृहुरिति न नापरोक्षं विदुषाम्। न स्यादत्राङ्गाङ्गि-भावपरिकल्पनेऽन्यथा भावः। स चायमार्षः पन्थाः। आर्षमतानुरोधे नार्थपरिकल्पने न कापि विप्रतिपत्तिः।। अपि च भगवानेवात्र प्रमाणम्। अतः को वा न विश्वसेत्। सर्वत्रापि तदनुरोधेनैव खलु सिद्धान्तः कर्तव्यः। भवतु वाऽन्यत्र विप्रतिपत्तिः। नात्र विप्रतिपत्तिं कोऽपि प्रब्रूयात्। तत्र तत्र भगवद्वचनं तदेव प्रबोधयितुमीष्टे। तत्राप्यन्ययोगव्यवच्छेदपरश्चैवकारोऽपि सन्दृश्यते। अन्यस्य व्यवच्छेद अस्यैव खलु प्राधान्यं सम्भवति। तदेवोद्घाटयति गीतान्तिमं भगवद्वचनम्। अन्यथा जागर्ति सिद्धान्तव्याकोपः, भगवद्वचनविरोधश्च। महर्षयस्तदुक्तिमेव प्रमाणयन्तः स्वाभिमतं प्रकाशयन्ति। तच्चाभिमतं तेनाप्यनुमतमित्येव जानन्ति। भगवानपि स्वाभीष्टेषु तत्तदिच्छायाः प्राधान्यमभ्युपगच्छतीत्यतो नार्गलगन्धः।

ततस्तथाविधे चास्मिन् तदाराधनौपयिकाः पूर्वकालीनाः तदौपयिकाश्चोत्तरकालीनाश्च विषया निगमवचोभिरनुज्ञाताः प्रतीक्षमाणा विवृतिमागमवचोभिः सफलीकृताः। तत्राभ्यर्हिततमं शास्त्रं श्रीवैखानस-मित्येव प्रामाणिका। यतो हि वर्णत्रयसमारूढाः महर्षयस्तदेवाभिप्रयन्ति। ताद्रूप्येणाख्यातास्संहिताश्चतुर्भिर्महर्षिभिरुपदिष्टाः चरितक्रियाज्ञा-नयोगरूपविषयप्रबोधनपराश्च भवन्ति। सर्वाश्चेमाः श्रीसूत्रैकदेशवि वरणरूपा इति प्रात्यक्षिकम्। चतुर्विधे निगमे काण्डमण्डलार्चिकादिभेदकप्रवृत्तिरिव चतुर्विधेऽस्मिन्नागमेऽपि काण्डाधि कारतन्त्रादिभेदकप्रवृत्तिरिति प्राचीनाः। नियममेवात्र परिपालयन्ति यमिन इति न हेतुवादः फलायत्तः, अशोकवनिकान्यायग्रस्तत्वात्। किञ्चास्मिन् चतुर्विधेऽप्यागमे श्रौतमार्गसमारूढानि

सप्तविंशतिसङ्ख्याकान्यार्षाण्या चार्यभावानुबन्धीनि प्रवृत्तानीति विद्वांसः। अत्र स्वयूथकलहस्तु निर्निबन्धनः। सर्वत्र विषयाणां षाडिध्येऽपि न पौनरुक्त्यप्रसक्तिः। विषयान्तरविभेदात भवत्येव चारितार्थ्यम्; पौराणिकवत्। अविशेषपुनश्श्रवणादयस्तु प्रतिपत्तृविभेदनिबन्धनास्सन्तोऽलङ्कुर्वन्ति तत्। वस्तुतस्तु वक्तृप्रष्टृकालादि-भेदादेकस्मिन्नपि विषये प्रवृत्तिर्नैयत्येन विशेषविभूषिता सत्याप्नोत्येव साफल्यमिति सुस्थः पन्थाः। एवञ्चैतच्छास्त्रं श्रीवैखानसस्य महर्षेरनुग्रहाल्लब्धात्मोज्जीवनाश्चत्वारोऽपि महर्षयः ऋषीणां स्वाभिमत-परसाधनस्य साधनविषयफलविशेषजिज्ञासया प्रवर्तयामासुरिष्यमाण-सम्पादनेन तस्याः साफल्यं गमयामासुः।

तत्र चेममधिकारमादावुपदिशन्ननुक्ताधिकारतायाऽन्यत्र सम्मानयति भगवान् भृगुः। नहि तथाऽयं सम्मानयतीत्युत्पश्यामः। तदुपदेशानुभवयोरान्तरः काल एव सर्वं सम्पादयतीत्यागमवेदिनः। किञ्चाय मागमश्चतुर्विधोऽपि सङ्ख्यया बद्धः। अवान्तरग्रन्थस्तु न तथा बद्धः। बद्ध इति केचित्। अन्यथा बद्ध इत्यपरे। वैषम्येण बद्ध इत्यन्ये। वैरूप्येण बद्ध इति परे। एवञ्च बहुधाऽत्रान्यत्र च विप्रतिपत्तयस्सन्तिष्ठन्ते। समाधयश्चापि बहुधाऽवतिष्ठन्ते। उपेक्षणीयास्सर्वा इति महान्तः अतस्सर्वत्राप्यत्र महर्षय एव प्रमाणामिति जोषमातिष्ठामहे।

अत्रायं विशेषः। वर्णाश्रमधर्मकर्मणामपि मूर्धन्यतयाऽभिमतेन भगवदाराधनकर्मणा कर्मभूमित्वेन पुलस्त्यवसिष्ठवरप्रदानलब्धपा-रमार्थ्यवेदिभिः पराशरमहर्षिभिः विनिश्चितेऽतिसौलभ्येन मोक्षप्रदान चतुरेऽस्मिन् भारते देशे श्रुत्युपगीयमानवैभवस्य अखिलाण्ड कोटिब्रह्मण्डनायकस्य श्रीवेङ्कटाचलनिवासरसिकस्य श्रियः पत्युरर्चावतार- धारिणे दिव्यमङ्गलविग्रहस्य श्रीनिवासस्य भगवतः समाराधनाय तेनैवानुगृहीतं सदेतच्छास्त्रं विजयते तरामिति। एवञ्च 'विष्णवे चार्यत' इत्यादिवेदप्रमाणविवरणपरेण ब्राह्मणसदृक्षेण वेदोभयभागावलम्बनशीलेन श्रीसूत्रेण अनादिसंसार-प्रवाहसमापतितनिखिलचेतनोज्जिजीविषयाऽनुगृही तस्य चरमपुरुषार्थसाधनस्य भगवतः श्रीमहाविष्णोराराधनस्य पूर्वोत्तराङ्गैस्सह विवरणपरासु षडिधविषय विशेषविभूषितासु आचार्योपदेश पारमार्थ्यपरिकर्मितासु संहितासु श्रीवैखानस शास्त्रत्वेन प्रख्यातासु अनुक्ताधिकारतया सम्प्रतिपन्नं परिपूर्णञ्चेमम धिकारमनुगृह्याज्ञा-ताननश्चरपदप्राप्ति सुलभानमूल्यानंशान् ज्ञापयन्महर्षि कुलतिलको भगवान् भृगुस्तदा मन्दरे ऋषीणामिव इदनीमत्र कं नाम न चकारोपकारम स्माकमित्यधमर्णाः सर्वधा सर्वदा वयं तत्रेति विदांकुर्वन्तु।

इति

१६-१०-६१ सुधीजनविधेयः
प्लव विजयदशमी महाविद्वान्, पण्डित, वेदान्त जगन्नाथाचार्यः
तिरुमल। तिरुमल-तिरुपति देवस्थानं आस्थानपण्डितः

## अध्यायविषयसूची

## विषयसूचिका

## १६. अध्यायः



## १७. अध्यायः

## १८. अध्यायः



## १९. अध्यायः

१०. अध्यायः



२१. अध्यायः



२२. अध्यायः

**२५. अध्यायः**



**२६. अध्यायः**



**२७. अध्यायः**

३०. अध्यायः



३१. अध्यायः



३२. अध्यायः

------------

## श्रीमद्विखनोमुनिपञ्चश्लोकीस्तुतिः

नाहः न क्षणादा न खं न धरणिः न ध्वान्तमासीद्यदा
न ज्योतिः न च वस्तु लभ्यमपरं श्रोत्रादिबुद्ध्या यदा।
यन्निर्विक्रियमच्छमक्षरमन्याधीनमेकाकृति
स्वैरं सत्रिगुणं सपूरुषमभूद्वैखानसाख्यं महः।। १

संज्ञामूर्तिसिसृक्षया स्वविहितस्वानुप्रविष्टात्मक-
स्वस्वाध्यापितवेदजातधनिना येनार्थवान् श्रीपतिः।
निर्माता सपरिच्छदत्रिजगतामाम्नायवक्त्रः स्वराट्
आस्तेऽसौ विखना मुनिः नियमितः स्फाराधिराज्ये पितुः।।२

औत्सुक्यादवधार्य मूर्धनि निजे मालामिवाज्ञां गुरोः
अभ्यार्चीदवतीर्य नैमिशवने यः शास्त्रसिद्धाध्वना।
वेदानां व्यसनादिव स्वविहिते प्राचीनतां शिक्षितुं
सूत्रे वक्त्रविपर्ययान्मुनिवरो दोद्योति वैखानसः।। ३

यो भृग्वत्रिमरीचिकस्यपमुखं शास्त्रप्रतिष्ठापिकां
लक्ष्यीकृत्य परम्परामचकथत् लक्ष्मीशपूजाविधिम्।
प्रणैषीच्च हरेः समूर्तयजनव्याख्यानगर्भाः कृतीः
निर्वाणैकनिकेतनं विजयते योगी स वैखानसः।। ४

सिद्धान्तान्तरनाटकैः सदसदाकल्पावबद्धैः मुहुः
तत्वे बाढमुपप्लुते जगति तत् सन्धुक्षयन् योऽश्वयीत्।
तस्याचार्यवराध्वरीन्द्रनृहरिश्रीवासमुख्यात्मना
वैभ्राजित्रमुपास्महे विखनसो वाल्लभ्यनिघ्नं विभोः।। ५

पार्थसारथिः

श्रियै नमः

श्री श्रीनिवासाय नमः

श्रीमते विखनसे नमः

श्रीमद्भ्यः भृगुमरीच्यत्रिकश्यपेभ्यो नमः

श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तासु संहितासु

# ।। खिलाधिकारः ।।



अथ प्रथमोऽध्यायः



नारायणः पिता यस्य माता चापि हरिप्रिया।
भृग्वादिमुनयः शिष्याः तस्मै विखनसे नमः।।

## ऋषिप्रश्नोत्तरम्

ऋषय : -

ब्रह्मपुत्र मुनिश्रेष्ठ त्वमेव ब्रह्मणः प्रियः।
त्वमेव सर्ववेत्ताऽसि त्वमेव वदतां वरः।। १

श्रुतं श्राव्यञ्च विश्वस्मिन् वेद्यञ्च विदितं त्वया।
कर्तव्यञ्च कृतं कृत्स्नं परमात्मरतात्मना।। २

यमाहुरमितं नित्यं परमात्मानमच्युतम्।
अणीयांसमणोर्नित्यं महीयांसं महत्तरात्।। ३

जगच्छरीरिणं देवं सर्वस्याधारमीश्वरम्।
आविश्य चाखिलं सर्गस्थितिनाशनकारणम्।। ४

वेदेषु वेद्यं सर्वेषु याज्यं यज्ञेषु सर्वदा।
नारायणं त्वं तत्त्वेन वेत्ताऽसि परमार्थवित्।। ५

त्वत्तो लब्धप्रसादा हि विष्णुं सर्वजगद्गुरुम्।
शक्नुवन्ति महात्मानः सम्यक् ज्ञातुं महर्षयः।। ६
तस्मात्त्वां परिपृच्छामः सर्वभूतहितोद्यतम्।
यस्य स्मृतिर्मुमुक्षूणां सर्वकर्माणि नाशयेत्।
बुभुक्षूणां सकामानां सर्वान् कामांश्च साधयेत्।। ७
यत्स्मृतिं निष्कृतिं यज्ञे प्रच्युतेराह वै श्रुतिः।
तं यज्ञपुरुषं नित्यं सर्वदेवमयं हरिम्।। ८
केनोपायेन कैर्मन्त्रैः कथमाराध्यः किं फलम्।
प्राप्नुवन्ति महात्मानः भवार्णवतितीर्षवः।। ९
विष्णवर्चनं विखनसा यत्स्वसूत्रे समीरितम्।
आचक्ष्व सर्वं ब्रह्मर्षे तदेतन्नः सविस्तरम्।। १०

**भृगुरुवाच -**

युष्माभिः परिपृष्टं यत्तत्सर्वमृषिसत्तमाः।
साधूक्तं सर्ववेदानां सारो युष्माभिरर्थितः।। १०
अस्यार्थस्य तु जिज्ञासा सुराणामपि दुर्लभा।
वहुजन्मार्जितैः पुण्यैः तपोभिरपि दुष्करैः।। ११
सदक्षिणैः क्रतुशतैः जपैर्दानैर्व्रतैस्तथा।
नेदृशी भगवद्भक्तिर्लभ्यतेऽव्यभिचारिणी।। १२
तद्युक्तमेव युष्माकं श्रोतुमेतन्मयाऽनघाः।
सावधानेन मनसा शृणुध्वं यत्प्रवक्ष्यते।। १३

## त्रिविधमाराधनम्

नारायणस्य भूतानामात्मनः परमात्मनः।
लीलया जगदुत्पत्तिस्थितिसंहारकारिणः।। १४

देवदेवेशितुर्विष्णोः लक्ष्मीशस्य जगत्पतेः।
उपायस्त्रिविधः प्रोक्तः पूजायाः शृणुत द्विजाः।। १५
मानसी होमपूजा च बेरपूजेति सा त्रिधा।
हृदये हृदयेशानं जगदीशं परात्परम्।। १६
ध्यात्वा तु हृदयान्तस्थं हेमवर्णमजं विभुम्।
कृत्वैकाग्रं मनस्सम्यक् कृतस्नानजपादिकः।। १७
रश्मिमालासहस्राढ्यं मण्डलं विपुलं रवेः।
तदन्तः शीतलाभिस्तु रश्मिभिः सोममण्डलम्।। १८
ततः स्फुलिङ्गकलिलज्वालाभिर्वह्निमण्डलम्।
सस्य मध्ये सुखासीनं तप्तहाटकसन्निभम्।। १९
चतुरङ्गुलमात्राङ्गं शुकपत्रनिभाम्बरम्।
हारकेयूरकटककटिसूत्रोपशोभितम्।। २०
कौस्तुभोद्भासितोरस्कं श्रीवत्साङ्कितवक्षसम्।
उद्दामकाञ्चीविलसन्मुक्तवीरोपशोभितम्।। २१
रक्तनेत्रधरं रक्तपाणिपादनखं शुभम्।
शङ्खचक्रधरं देवं चतुर्बाहुधरं परम्।। २२
तद्गतेनैव मनसा नैरन्तर्येण चिन्तयेत्।
ध्वात्वैवमर्चयेद्देवं सा पूजा मानसी स्मृता।। २३
अग्नीनाधाय विधिवदध्वरेषु द्विजातिभिः।
इज्यते यज्ञपुरुषः सर्वदेवमयो हरिः।। २४
यो यज्ञरूपी तस्यार्चा होमपूजेति कथ्यते।
कृत्वा यत्प्रतिमां विष्णोः यथालक्षणमादरात्।। २५
संस्थाप्य तान्तु विधिना देवागारेऽथ वेश्मनि।
नित्यमाराधनं भक्त्या सा पूजा बेरपूजनम्।। २६

आलये बेरपूजा च ग्राममध्ये प्रकल्पिता।
सा तत्रवासिनां सर्वमग्निहोत्रं द्विजन्मनाम्।। २७
शुष्केन्धनं यथाऽनग्नौ न प्रज्वलति कर्हिचित्।
तद्वन्मोघो द्विजोऽनग्निः इत्याहुर्वेदपारगाः।। २८
अग्निहोत्रमनग्नीनां धाता प्राहालयं हरेः।
अनग्निहोत्री लभते स्वर्गं नेत्याह च श्रुतिः।। २९
सङ्गतिर्देवपूजा च दानं यज्ञ इति स्मृतिः।
यज्ञेष्वेतेषु विधिवद्बेरपूजा विशिष्यते।। ३०
यजमाने मृतेऽप्येषा शाश्वतं भुवि तिष्ठति ।
तस्याग्निहोत्रस्याधानं वक्ष्यामि शृणुत द्विजाः।। ३१
ऋग्यजुस्सामसु वराः तत्तत्कर्मानुरूपतः।
सौम्याः फलकरा मन्त्राः विष्णोराराधने स्मृताः।। ३२
(शान्तिकं पौष्टिकञ्चापि निष्कृतिश्चाभिचारिकम्।
एंव चतुर्धा सम्प्रोक्तं पुरा तु हरिपूजनम्।
पूजनोपायमन्त्रैस्तु मार्गभेदश्चतुर्विधः)।।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां खिलाधिकारे मानसहोमबेरेषुपूजास्वरूपकथनं नाम प्रथमोऽध्यायः।।

-------

**अथ द्वितीयोऽध्यायः**

-------

## समूर्ताराधनस्य श्रौतत्वकथनम्

अतः परं प्रवक्ष्यामि हरेर्विस्तरतोऽर्चनम्।
एतद्भवन्तः शृण्वन्तु सर्वमेकाग्रचेतसा।। १

गृहे पुरुषपूजायाः विधानमृषिसत्तमाः।
सूत्रे सङ्क्षेपतः प्रोक्तमृषिणा ब्रह्मवादिना।। २
वैखानसेन विपुलं नोक्तमालयपूजनम्।
आलयार्चा गृहार्चा चेत्युभयं श्रुतिचोदितम्।। ३
तेनात्र सकलं नोक्तं ग्रन्थविस्तरभीरुणा।
उक्तशेषमनुक्तञ्च सर्वमत्र वदामि वः।
श्रृण्वन्तु मुनयस्सर्वे विष्णोरर्चां जगत्पतेः।। ४
(आलयार्चाविधानानि शान्तिकादीनि वै क्रमात्)

## कर्मभूमिप्रशंसा

भूगोलादिनिदानन्तु वक्ष्ये शृणुत तापसाः।
जम्बूप्लक्षकुशद्वीपाः तथा च क्रौञ्चशाल्मली।। ५
गोमेदपुष्करद्वीपौ सप्तद्वीपा च मेदिनी।
एते द्वीपास्समुद्रैस्तु सप्त सप्तभिरावृताः।। ६
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैस्समम्।
द्वीपाद्द्वीपा द्विगुणिताः समुद्राश्च समुद्रतः।। ७
बाह्ये हिरण्मयी भूमिः द्विगुणा तु समन्ततः।
लोकालोकाचलः शैलो योजनायतमुच्छ्रितः।। ८
उच्छ्रयेणापि च तथा सहस्रेण द्विजोत्तमाः।
ततस्तमः समावृत्य तं शैलं सर्वतस्समम्।। ९
पञ्चाशत्कोटिविस्तारा सेयमुर्वी द्विजोत्तमाः।
सहैवाण्डकपालेन सद्वीपाब्धिमहीधरा।। १०
आधारभूता सर्वेषां भूतानाञ्च मही स्मृता।
भूर्भूवस्स्वर्महर्लोकाः जनोलोकस्तथा महः।। ११

सत्यलोकश्च सप्तैते लोकाः प्रोक्ताः मनीषिभिः।
तलश्च वितलश्चैव प्रतलो धातकीतलः।। १२
विद्रावकतलश्चैव सम्फुल्लाङ्गतलस्तथा।
महातलस्तु पातालाः सप्तैते समुदाहृताः।। १३
लोकालोकाचलेनैते वृता लोकाश्चतुर्दश।
अम्भोग्निमरुदाकाशैः अहङ्कारेण वै बहिः।। १४
वृतं दशगुणैरण्डं भूतादिमहता तथा।
महदव्यक्त संज्ञेन प्रधानेन तथाऽऽवृतम्।। १५
एतद्ब्रह्माण्डमित्युक्तमृषिभिस्तत्त्वदर्शिभिः।
अण्डानान्तु सहस्राणामर्बुदान्ययुतानि च।। १६
एतान्यण्डान्यनन्तानि विष्णोरन्तर्गतानि वै।
तस्य विश्वात्मनो विष्णोः पूजास्थानं निबोधत।। १७
जम्बूद्वीपस्समस्तानामेतेषां मध्यमे स्थितः।
तस्य मध्ये महामेरुरस्ति काञ्चनपर्वतः।। १८
चतुरशीतिसाहस्रयोजनायामसंयुतः।
परिषोडशसाहस्रयुक्त स्तन्मूलविस्तरः।। १९
द्वात्रिंशदूर्ध्वविस्तारः कर्णिकाकारवत् स्थितः।
निषधो हेमकूटश्च हिमवांश्चास्य दक्षिणे।। २०
नीलः श्वेतस्तथा श्रृङ्गी चोत्तरे सीमपर्वताः।
आनीलनिषधाऽऽयामो माल्यवांस्तस्य पूर्वतः।। २१
गन्धमादनसंज्ञश्च तथा तस्यैव पश्चिमे।
पूर्वापरौ वारिनिधी प्रविश्यान्ये व्यवस्थिताः।। २२
मध्ये द्विलक्षसम्मानौ दशहीनास्त्वतः परे।
द्विसहस्रोच्छ्रया एते तावद्विस्तारिणः स्मृताः।। २३

हरिवर्षं किंपुरुषं भारतञ्चेति दक्षिणे।
रम्यं हिरण्मयञ्चैव कुरवश्चोत्तराः स्मृताः।। २४
नवसाहस्रमेकैकमेतेषां प्रमितिर्द्विजाः।
मेरोश्चतुर्दिशं वर्षं नवसाहस्रमेकतः।। २५
इलावृतमिति ज्ञेयं विष्कम्भाचलभूषितम्।
तत्पूर्वपश्चिमे वर्षः भद्राह्वः केतुमालकः।। २६
नवखण्डमिति प्राहुः जम्बूद्वीपं विचक्षणाः।
एतेषु भारतं श्रेष्ठं पुरुषार्थप्रसाधकम्।। २७
इतोऽन्या भूमयः सर्वाः भोगाय परिकल्पिताः।
कर्मभूमिरियं प्रोक्ता स्वर्गं सम्प्राप्तुमिच्छताम्।। २८
क्रियते दानमत्रैव तपश्चात्र प्रतप्यते।
यज्ञेषु यज्ञपुरुषो विष्णुरत्रेज्यते द्विजैः।। २९
अत्रैव विष्णुं ध्यायन्तो मुक्तिं यान्ति मुमुक्षवः।
अत्रैव सकलीकृत्य विष्णुमाराधयन्ति ये।। ३०
ते लब्धसर्वकामाश्च ततो मुक्तिं समाप्नुयुः।
तस्मादत्रैव यत्नेन समाराध्यो जनार्दनः।। ३१
अत्रापि भारते वर्षे नवस्तव्यान् निबोधत।
निर्वातमतिवातञ्च व्याधिभूयिष्ठमेव च।। ३२
सदा धर्मं सदा रूक्षं सशीतं ब्रह्मवर्जितम्।
अमित्रैरावृतं देशं शबरादिभिरर्दितम्।। ३३
नि . . . . . . . . . . . . . . . समाकुलम्।
राक्षसैरसुरैर्भूतैर्यक्षैरपि पिशाचकैः।। ३४
सदाश्रितं निराक्रन्दं इरिणालावनं तथा।
नित्यं युद्धपराक्रान्तं स्वादुतोयविवर्जितम्।। ३५

कृष्णसारैः कपोतैश्च कोकिलैः शुकशारिकैः।
एतैर्हीनञ्च सन्त्यज्य देशं रम्यं समाश्रयेत्।। ३६
वास्तुविन्यासविधिना सुकृतेषु च वास्तुषु।
उक्तेष्वेव प्रदेशेषु कुर्वीतालयकल्पनम्।। ३७

## आचार्यलक्षणम्

आरम्भकाले धर्मात्मा यजमानस्समाहितः।
वैखानसेन सूत्रेण निषेकादिक्रियान्वितान्।। ३८
विप्रान् वेदविदश्शुद्धान् मन्त्रकल्पविचक्षणान्।
विधिज्ञानाहिताग्नींश्च नारायणपरायणान्।। ३९
भूम्याद्येकादशज्ञांश्च भगवत्कर्मतत्परान्।
सुमनस्कान् सुपूर्णाङ्गान् दयाद्यात्मगुणान्वितान्।। ४०
आहूयामन्त्र्य विधिना वरयेत्तु स्वदैववत्।
हीनदीर्घातिरिक्ताङ्गान् कुब्जान्वै वामनानपि।। ४१
उन्मादापस्मृतियुतान् पापरोगनिपीडितान्।
कुनखान् श्यावदन्तांश्च विद्धशेफांश्च षण्डकान्।। ४२
शिपिविष्टान् व्यसनिनः क्रुद्धान् मत्सरिणस्तथा।
गुरुराजद्विजप्राज्ञदेववेदादिनिन्दकान्।। ४३
अयाज्ययाजकांश्चैव कुलाटास्तमितोदितान्।
अनग्नीन् निन्दितानन्यानतिवृद्धातिबालकान्।। ४४
एवंविधान् परित्यज्य पूर्वेक्तानाहरेद्बुधः।
तत्र ज्ञानोत्कटं शुद्धं वैष्णवं शान्तमानसम्।। ४५
उदितोदितं सुपुष्टाङ्गं ज्ञात्वा तं वरयेद्गुरुम्।
सम्पूज्य यजमानस्तं वस्त्राभरणकुण्डलैः।। ४६

निवेद्य तस्मै स्वां शक्तिं तेनोक्तं विधिनाऽऽचरेत्।
यजमानो गुरुञ्चैव सम्प्रणम्य जगत्पतिम्।
देवालयं समुद्दिश्य भूमिं सम्यक् परीक्षयेत्।। ४७

## उक्तभूमिः

ग्रामे वा नगरे वापि पत्तने खर्वटेऽपि वा।
दण्डके कुटिके वापि नदीतीरे मनोरमे।। ४८
तटाकस्याथ तीरे वा वेलायां सागरस्य वा।
शैलाग्रे शैलपार्श्वे वा वनपार्श्वे वनान्तरे।। ४९
स्थानं यत्रैव विस्तीर्णं तत्रापि च मनोरमे।
युक्तं स्थानं समालोक्य गृह्णीयाच्छार्ङ्गधन्वने।। ५०
नारायणस्य देवस्य श्वेता भूमिरुदाहृता।
पीतवर्णेन युक्ता च तुलसीकुशसंयुता।। ५१
ब्राह्मीं रक्तां विजानीयात् कृष्णां रौद्रीञ्च लक्षयेत्।
प्रागुदक्प्रवणां विष्णोः पश्चिमप्रवणां कवेः।। ५२
दक्षिणप्रवणां शम्भोः पृथगेवं समाहरेत्।
ग्राममध्ये हरेः स्थानमुत्तमं समुदाहृतम्।। ५३
पश्चिमे मध्यमं विद्यादधमञ्चैन्द्र उच्यते।
सहस्रादधिके ग्रामे विप्राणां तत्र मध्यमे।। ५४
पञ्चमूर्तिं समुद्दिश्य विमानं परिकल्पयेत्।
द्वितलं त्रितलं वापि विमानं कारयेद्बुधः।। ५५
एवं कर्तुमशक्तश्चेत् पश्चिमे वाऽपि कारयेत्।
एकमूर्तिक्रमेणापि द्वितलोक्तविधानतः।। ५६
आदिभूमिं घनं कुर्याद्द्वितलञ्चासनं भवेत्।
अभ्यन्तरासु वीथीषु ग्रामाधिक्यमखं चरेत।। ५७

पश्चिमे प्राङ्मुखं कुर्यात् प्राच्यां वै पश्चिमामुखम्।
उत्तराभिमुखं कुर्याद्याम्ये ग्रामविवृद्धये।। ५८
अनन्तोत्सङ्ग आसीनं शयानं स्थानकं हरिम्।
आसीनं पश्चिमे कुर्यादुत्तरे शयनं भवेत्।। ५९
सर्वत्र शयनं श्रेष्ठं ग्रामाभिमुखमुच्यते।
विदिशासु च सर्वासु दक्षिणां दृष्टिमाचरेत्।। ६०
पश्चिमे यत्र कुर्वीत मध्यवीथ्यास्तथोत्तरे।
वीर्यार्थी विजयार्थी च मध्यवीथ्यास्तु दक्षिणे।। ६१
पञ्चहस्तं समारभ्य यावच्छक्तिसमन्वितम्।
विहितं संपरिज्ञाय मूलस्थानं प्रकल्पयेत्।। ६२
महाभूतस्य यत्पीठं वीथ्यन्तरगतं भवेत्।
ग्रामवास्तु तथा कुर्यात् विपरीते विनश्यति।। ६३
एवं स्थानं प्रकल्प्यैव विमानं परिकल्पयेत्।
अथ वा कल्पयेद्विद्वान् गृहभागं विसृज्य च।। ६४
पैशाचं संव्यपोह्यैव पश्चिमे सुमनोरमे।
ग्रामं सम्यक् प्रकल्प्यैव यथावित्तानुसारतः।। ६५
ब्रह्मस्थाने तु कुर्याच्च चतुर्भागं विभज्य च।
वायव्ये तु चतुर्भागे किञ्चिद्वायव्यमाश्रिते।। ५६
पञ्चमूर्तिक्रमेणैव विमानं परिकल्पयेत्।
विभज्य राशीन् मेषादीन् ग्रामे तत्र क्रमेण वै।। ५७
स्थिरराशौ प्रकुर्वीत विष्णोरालयमुत्तमम्।
प्राग्द्वारं तु प्रशस्तं स्याद्विष्णुमुद्दिश्य सर्वतः।। ६८
विदिग्द्वारं न कुर्वीत कस्मिंश्चित् देवतालये।
मध्यमं पश्चिमद्वारमधमं दक्षिणोत्तरम्।। ६९

## देवतादृष्टिनियमः

ग्रामप्रेक्षं हरिं कुर्याद्धरं कुर्यात्पराङ्मुखम्।
देवानन्यांश्च सर्वान्वै ग्रामप्रेक्षांस्तु कारयेत्।। ७०
दृष्ट्या तु शुभदो विष्णुः हरो दृष्ट्या विनाशकृत्।
शूद्राणाञ्चैव वासेषु पश्चिमे तु हरेर्विदुः।। ७१
नगरे पश्चिमे प्रोक्तं दक्षिणे चोत्तरेऽपि वा।
खर्वटे पश्चिमे कुर्यात् दण्डकेषु तथैव च।। ७२
कुटिके पश्चिमे कुर्यात् दण्डकेषु तथैव च।
नदीतीरेऽद्रिदेशे वा भूमिर्यत्र मनोहरा।। ७३
द्वारं यत्रैव रम्यं स्यात् आलयं तत्र कारयेत्।
एवं भूमिं प्रकल्प्यैव विमानारम्भमाचरेत्।। ७४

## सामृतहारककल्पकथनम्

सामृतो हारकश्चैव द्विविधो मार्ग उच्यते।
मूलस्थानं समुद्दिश्य स्थानं यत्रैव निश्चितम्।। ७५
तत्स्थानाद्वायुभागे वा सौम्ये वैशानगोचरे।
बालस्थानं प्रकल्प्यैव बिम्बं सम्यक् समाहरेत्।। ७६
विमानस्यानुरूपञ्च ध्रुवं निर्णीय पूर्वतः।
ध्रुवानुरूपमानेन कौतुकं कारयेद्बुधः।। ७७
विमानादिषु सर्वत्र मानं मानाङ्गुलेन वै।
यष्टिर्येन प्रमाणेन ग्राममुद्दिश्य चाहृता।। ७८
तद्यष्टिमानं ज्ञात्वा तु अङ्गुलीभिर्विभज्य च।
द्विशतं वसुभिर्हीनमङ्गुलानान्तु सङ्ख्यया।। ७९
तदङ्गुल्यश्चतुर्विंशत् हस्तमित्यवबुद्ध्यते।
पञ्चहस्तं समारभ्य यावच्छक्तिसमन्वितम्।। ८०

विमानरूपं ज्ञात्वा तु बालस्थानं प्रकल्पयेत्।
तदर्धं मध्यमं प्रोक्तं तस्यार्धमधमं विदुः।। ८१

तदङ्गुल्यश्चतुर्विंशदुत्तमं कौतुकं भवेत्।
बिम्बं सलक्षणं कृत्वा दशतालक्रमेण वै।। ८२

अर्चायामं त्रिधा कृत्वा तत्रैकं पीठमाचरेत्।
एवं बिम्बञ्च कृत्वा तु यजमानयुतो गुरुः।। ८३

ग्रामस्य यजमानस्य चानुकूले शुभे दिने।
अङ्कुरानर्पयित्वा तु स्थापनारम्भमाचरेत्।। ८४

बालालयस्योत्तरतो वास्तुहोमं समाचरेत्।
पर्यग्निञ्चैव कृत्वा तु पुण्याहं वाचयेत्क्रमात्।। ८५

ये ते शतादिभिर्हुत्वा व्याहृत्यन्तं पृथक् पृथक्।
अन्तहोमञ्च कृत्वा तु सूत्रोक्तेन विधानतः।। ८६

बालालयस्य पुरतो यागशालां प्रकल्पयेत्।
मध्ये शयनवेदिश्च प्राच्यामाहवनीयकम्।। ८७

दक्षिणेऽन्वाहार्यकन्तु गार्हपत्यन्तु वारुणे।
उत्तरे चावसत्थ्यञ्च पूर्वादिषु यथाक्रमम्।। ८८

सूत्रोक्तेन विधानेन कुण्डेष्वाघारमाचरेत्।
आघारान्ते तु होतव्यं वैष्णवं तत्र तत्र तु।। ८९

प्राच्यां शयनवेद्यास्तु श्वभ्रं सम्यक् प्रकल्प्य च।
तत्प्राच्यां दण्डवेदिञ्च कुर्याद्वै व्रीहितण्डुलैः।। ९०

क्षीरं घृतं मधु तथा सर्षपञ्चाक्षतोदकम्।
गन्धोदकं कुशोदञ्चेत्युदकानि च संन्यसेत्।। ९१

शन्नोदेवीरग्न आयाह्यग्निमील इति ब्रुवन्।
पूतस्तस्येति चोक्त्वा तु इमा ओषधय इत्यपि।। ९२

'अभित्वा शूर' चत्वारि क्रमान्मंत्रान् समुच्चरन्।
कलशैः स्नापयेद्देवं सोपस्नानैस्तु सप्तभिः।। ९३

पश्चात् प्लोतेन संशोध्य शयनं सम्प्रकल्पयेत्।
शय्यावेद्यां तथा पञ्च अण्डजादीन् समास्तरेत्।। ९४

अलाभे त्वण्डजादीनां प्रत्येकं वस्त्रमास्तरेत्।
कुम्भं संसाध्य तत्काले देवदेवमनुस्मरन्।। ९५

कुम्भञ्चैव सुसन्यस्य प्रणवेन सुसंस्कृतम्।
वेदाहमेतमुच्चार्य शयने शाययेद्धरिम्।। ९६

तत्कुम्भं पूर्वतो न्यस्य सर्वालङ्कारसंयुतम्।
पाद्यादिभिः प्रपूज्यैव पुण्याहं वाचयेत्ततः।। ९७

प्रतिसरबन्धनं कुर्यात् 'स्वस्तिदा' इति मन्त्रतः।
यद्वैष्णवं समुच्चार्य शयने शाययेद्धरिम्।। ९८

हौत्रप्रशंसनं कुर्यादन्वाहार्ये विशेषतः।
चतुर्मूर्तिविधानेन देवानावहयेत्क्रमात्।। ९९

आवाहनक्रमेणैव जुष्टाकारमथाचरेत्।
जुष्टाकारक्रमेणैव आहुतीर्विधिवद्यजेत्।। १००

हुत्वा तु सर्वदैवत्यं देवदेवमनुस्मरन्।
आहवनीये तत्काले पुरुषसूक्तं च होमयेत्। १०१

विष्णुसूक्तञ्च हुत्वा तु गार्हपत्ये विशेषतः।
एकाक्षरादीन् जुहुयात् आवसत्थ्ये यथाक्रमम्।। २०२

एवं कृत्वा तु तद्रात्रौ रात्रिशेषं व्यपोह्य च।
पुनः प्रभाते स्नात्वा तु यजमानयुतो गुरुः।। २०३

बालालयं समासाद्य वह्निं प्रज्वाल्य चादरात्।
वैष्णवं मूलहोमान्ते अन्तहोमञ्च होमयेत्।। २०४

मुहूर्ते समनुप्राप्ते उद्धृत्य शयनाद्धरिम्।
पाद्याद्यर्घ्यान्तमभ्यर्च्य पूजयित्वा यथाक्रमम्।। २०५
सर्वालङ्कारसंयुक्तं सर्ववाद्यसमायुतम्।
देवमादाय यत्नेन बालागारं प्रवेशयेत्।। २०६
जप्त्वा तु वैष्णवं सूक्तं स्थापयित्वा विचक्षणः।
पुण्याहं वाचयित्वा तु प्रोक्षणेन समन्वितम्।। २०७
आराध्य विधिवन्मन्त्रैः हविस्सम्यङ्निवेदयेत्।
पश्चान्नित्यं समभ्यर्च्य विमानं कारयेद्बुधः। २०८
एवं कर्तुमशक्तश्चेत् हारकं मार्गमाचरेत्।
बिम्बं याचितमादाय भूपरीक्षादिकं चरेत्।। २०९
विमानं विधिवत्कृत्वा ध्रुवबिम्बञ्च कारयेत्।
कौतुकञ्चैव कृत्वा तु पश्चात् स्थापनमाचरेत्।। ११०

## पञ्चमूर्तिप्रतिष्ठायां विशेषः

पञ्चमूर्तिप्रतिष्ठा चेत् गर्भागारे पदं चरेत्।
ऊर्ध्वं तलं समुद्दिश्य मानुषे स्थापयेत्क्रमात्।। १११
ब्राह्मे तु विष्णुमूर्तिञ्च स्थापयित्वा विचक्षणः।
अर्धमण्डपमध्ये तु पुरुषमूर्तिं समर्चयेत्।। ११२
सत्यं दक्षिणतः पार्श्वे पश्चिमेऽप्यच्युतं तथा।
उत्तरे चानिरुद्धञ्च स्थापयित्वा समर्चयेत्।। ११३
परितः प्रावरणं कुर्याद्यथायोगं विचक्षणः।
स्थापयित्वा विधानेन नित्यं विधिवदर्चयेत्।। ११४
भूपरीक्षादिनात्पूर्वं शिल्पशास्त्रविशारदम्।
रूपयौवनसम्पन्नं . . . . . . . . . . . . . . ।। ११५

ज्ञात्वा तु हस्तकौशल्यमाहरेच्छिल्पिनं बुधः।
भूपरीक्षादिनात्पूर्वं यजमानयुतो गुरुः।। ११६

शास्त्रं सम्यग्विदित्वा तु ज्ञात्वैव गुरुलाघवम्।
नवधा मार्गमालक्ष्य शक्त्या युक्त्या समाचरेत्।। ११७

यद्दिने भूपरीक्षा स्यात् तत्पूर्वे देवमर्चयेत्।
पूर्वेद्युः पररात्रौ तु देवदेवं समर्चयेत्।। ११८

पश्चाद्देवं प्रणम्यैव यजमानयुतो गुरुः।
निमित्तं सम्यगालोक्य शुभञ्चेत्कार्यमारभेत्।। ११९

अशुभं यदि दृश्येत शान्तिं तत्रैव कारयेत्।
तद्दिनन्तु परित्यज्य दिनेऽन्यस्मिन् समारभेत्।। १२०

ततः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः।
अर्चयित्वा यथान्यायं यजमानयुतो गुरुः।। १२१

देवदेवं प्रणम्यैव 'प्रीयतां भगवा' निति।
देवदेवमनुज्ञाप्य प्रदक्षिणमथाचरेत्।। १२२

सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
ब्रह्मध्वनिस्तोत्रयुतं जयशब्दसमायुतम्।। १२३

शास्त्रोक्तां भूमिमाहृत्य तृणगुल्मं व्यपोह्य च।
गर्भालयं समुद्दिश्य मण्डपेन समायुतम्।। १२४

प्रथमावरणञ्चैव गोपुरेण समन्वितम्।
द्वितीयावरणञ्चैव तृतीयावरणं तथा।। १२५

गोपुरं तत्तदुद्दिश्य यावच्छक्तिसमन्वितम्।
पञ्चहस्तादिभेदेन विमानं तत्र कल्पयेत्।। १२६

पञ्चहस्तप्रमाणं यत्तद्विष्णोरधमाधमम्।
त्रिहस्तमन्यदेवानामधमाधममुच्यते।। १२७

तस्यानुसारिणीं भूमिं विदित्वा यत्नतः क्रमात्।
एवमेव विधानेन वैष्णवीं भूमिमाहरेत्।
देवानन्यान्समुद्दिश्य तत्तदर्हं समाचरेत्।। १२८

इत्यार्षे श्रीवैखनसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे भूपरीक्षाविधानं नाम
द्वितीयोऽध्यायः।

-----

## अथ तृतीयोऽध्यायः

-----

### कर्षणम्

अतः परं प्रवक्ष्यामि परं कर्षणलक्षणम्।
मासे तु वृश्चिके कुर्यात्पूर्वपक्षे विशेषतः।। १
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
तद्दिनान्नवमे पूर्वं सप्तमे पञ्चमेऽह्नि वा।। २
अङ्कुरानर्पयित्वा तु पुण्याहं वाचयेत्क्रमात्।
अङ्कुरार्पणकादूर्ध्वं युगं लाङ्गलमाहरेत्।। ३
ब्राह्मणो यजमानश्चेत् युगं वैणवमाहरेत्।
चम्पकं क्षत्रियस्योक्तं वैश्यः पुन्नागमाहरेत्।। ४
शूद्र उदुम्बरमाहृत्य अवक्रं सम्यगाहरेत्।
ब्राह्मणानां हितार्थाय लाङ्गलं खादिरं हरेत्।। ५
असनं क्षत्रियस्योक्तं वैश्यानां चम्पकं तथा।
शूद्राणाञ्चैव शैरीषं सारयुक्तमनिन्दितम्।। ६
गिरिजं वा वनस्थं वा तीर्थस्थं वा समाहरेत्।
अग्रं पादं विदित्वा तु मुखं पृष्ठं तथैव च।। ७

तद्वृक्षस्यैव मूले तु तृणगुल्मं व्यपोह्य च।
वृक्षस्य दक्षिणे भागे स्थित्वा चैवोत्तरामुखः।। ८
वृक्षाधिपं समभ्यर्च्य पुष्पगन्धादिभिः क्रमात्।
'वृक्षाधिपञ्च तुहणं विष्णुभक्तं गदाधरम्'।। ९
इत्येवमर्चयेद्विद्वान् चतुर्मूर्तिविधानतः।
तस्मिन् वृक्षे स्थितान् देवान् सर्वान् सम्यक् प्रणम्य च।।१०
भुञ्जन्तां बलिमित्युक्त्वा अष्टदिक्षु यथाक्रमम्।
बलिं प्रक्षिप्य मन्त्रज्ञः पश्चात्तांश्च विसृज्य च।। ११
आदाय परशुं काले वैष्णवं मन्त्रमुच्चरन्।
स्वयं छित्वा चतुर्दिक्षु पूर्वादिषु यथाक्रमम्।। १२
पश्चात्तक्षकमाहूय छेदयित्वा शनैः शनैः।
मोचयित्वा त्वगादीनि सारभूतं समाहरेत्।। १३
पश्चाद्धारकमाहूय शिरसा धारयेद्बुधः।
बालागारं शनैर्नीत्वा प्रमुखे चोत्तरेऽपि वा।। १४
मण्डलान्युमलिप्यैव तत्ताद्दारु न्यसेद्बुधः।
हलायामं पञ्चतालं क्षिणिर्द्वादशतालयुक्।। १५
युगं द्वादशतालञ्च नाहं वै विंशदङ्गुलम्।
चतुस्तालमृषिं गृह्य प्रादेशमपवीरकम्।। २६
षट्प्रादेशं प्रतोदं स्याद्धनं युक्त्या प्रगृह्य च।
द्विप्रादेशञ्च हुलिकं मुकुलाकृतिमाचरेत्।। २७
अष्टाश्रं तस्य मूलञ्च शेषं युक्त्यैव कारयेत्।
श्वेतवर्णावपि वृषौ ब्राह्मणस्य विशेषतः।। १८
रक्तवर्णौ क्षत्रियस्य पीतौ वैश्यस्य कीर्तितौ।
शूद्रस्य कृष्णवर्णौ तु मिश्रवर्णावथापि वा।। १९

एवं सङ्गृह्य चैवात्र पूर्वेद्युरधिवासयेत्।
स्वर्णशृङ्गौ रौप्यखुरौ वस्त्रेणाबध्यच यत्नतः।। २०
ब्राह्मणो यजमानश्चेत् पाशं मौञ्जीमयं हरेत्।
क्षत्रियो धातकीवाल्कं वैश्यः कैतकमाहरेत्।। २१
शूढो मौञ्चीमयं गृह्य त्रिवृतं सम्यगाहरेत्।
वैष्णवीं याष्टिमाहृत्य आयसीं वा समाहरेत्।। २२
पादौ प्रक्षाल्य चाचम्य देवेशं मनसा स्मरन्।
युगलाङ्गलमाहृत्य वृषभौ तु समानयेत्।। २३
पश्चिमे भूमिभागे तु प्राङ्मुखः प्रयतात्मवान्।
कलशे तोयमादाय वारुणं मन्त्रमुच्चरन्।। २४
स्रावयेत्कलशात्तोयं पाणिभ्यामुद्धृतात्तदा।
नैरृत्यादिक्रमेणैव प्रादक्षिण्यवशेन तु।। २५
सीमां विनिर्णयेत्तत्र 'धारा' स्विति च मन्त्रतः।
पश्चिमे भूमिभागे तु वृषभौ च समर्चयेत्।। २६
युगपाशं समादाय प्राङ्मुखः प्रयतात्मवान्।
रुद्रमन्त्यं समुच्चार्य वृषभौ बन्धयेद्युगे।। २७
'युगं युगेति' च जपन् युगे लाङ्गलमर्पयेत्।
'तत्पुरुषाये' च ऋषिं वामहस्तेन चाहरेत्।। २८
दक्षिणे यष्टिमादाय प्रणवं मनसा स्मरन्।
आत्मरक्षां ततः कृत्वा 'विष्णुर्मां रक्ष' तूच्चरन्।। २९
'हलकृष्टा दिव' मिति जपमंत्रं समाहितः।
पश्चिमादि समारभ्य कर्षयेन्मेदिनीं शनैः।। ३०
प्रदक्षिणवशेनैव कर्षयित्वा तु सर्वशः।
द्वितीयं कर्षणं कृत्वा दक्षिणोत्तरयोः क्रमात्।। ३१

तृतीयं कर्षणं कुर्यात् प्राक्पश्चिममशेषतः।
चतुर्थं कर्षयेद्विद्वान् दक्षिणोत्तरयोः क्रमात्।
एवं कृष्टेऽत्र गाः नित्यं वासयेत् फाल्गुनादधः।। ३२

## द्वितीयं कर्षणम्

अत उर्ध्वं प्रवक्ष्यामि द्वितीयं कर्षणं क्रमात्।
फाल्गुने मासि सम्प्राप्ते पूर्वपक्षे विशेषतः।। ३३
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
पूर्वोक्तगुणसम्पन्नानुक्तदोषविवर्जितान्।। ३४
वैखानसान् समाहूय यजमानस्समर्चयेत्।
'श्वः कर्तास्मी' ति गुरुणा पूर्वेद्युः स्वगृहे तथा।। ३५
अङ्कणे च प्रपां कृत्वा पिष्टैः कुर्यादलङ्कृतिम्।
धान्यराशिं प्रपूर्यैव त्रिवेदिसहितां क्रमात्।। ३६
पुष्पाक्षतसमायुक्तं दर्भानुपरि संस्तरेत्।
दारुजं लोहजं वापि बिम्बं कृत्वा सलक्षणम्।। ३७
अथवा याचितं बिम्बं तस्मिन् देवं समर्चयेत्।
तस्याः प्रपाया मध्ये तु देवदेवं समर्चयेत्।। ३८
वीशञ्चाभिमुखेऽभ्यर्च्य दक्षिणे चक्रमर्चयेत्।
अमितञ्चोत्तरे स्थाप्य अर्चयित्वा विधानतः।। ३९
'आयातु भगवा' नुक्त्वा देवस्यावाहनं चरेत्।
सप्तविंशतिभेदेन अर्चयित्वा निवेदयेत्।। ४०
'सर्वजित्सर्व' उच्चार्य चक्रमावाह्य यत्नतः।
'वैनतेयो महावीर्यः काश्यपोऽग्निसमप्रभः'।। ४१
एवमुच्चार्य वीशन्तु अर्चयित्वा निवेदयेत्।
'आयातु भगवान् दिव्यो दान्तश्शान्तो जनप्रियः'।। ४२

एवमुक्त्वा तथा शान्तमर्चयित्वा निवेदयेत्।
पुण्याहं वाचायित्वा तु देवमुद्दिश्य चादरात्।। ४३
कृत्वा शय्याधिवासञ्च रात्रिशेषं व्यपोह्य च।
पुनः प्रभाते स्नात्वा तु देवदेवं समर्चयेत्।। ४४
चक्रादीनर्चयित्वा तु यजमानयुतो गुरुः।
भुक्त्वा तु पायसान्नं वै बान्धवैस्सह धर्मवित्।। ४५
रूपयौवनसम्पन्नां योषितं चारुदर्शनाम्।
एकां विशुद्धामानीय वस्त्रादिभिरलङ्कृताम्।। ४६
पद्मं दक्षिणहस्तेऽस्याः वामे दीपञ्च दापयेत्।
ध्वजतूर्यादिकान् सर्वान् पुरस्कृत्य विधानतः।। ४७
अष्टमङ्गलसंयुक्तं धूपदीपसमन्वितम्।
भक्तैः परिवृतो गच्छेच्चक्रमग्रे तु सन्नयेत्।। ४८
वीशं पश्चात्समादाय अमितञ्च ततः परम्।
यानैर्वा रथरङ्गैर्वा ब्रह्मचारिभिरेव वा।। ४९
वाहयित्वाऽथ तत्काले स्वस्तिसूक्त समन्वितम्।
भूमिं सम्यक् प्रविश्यैव यजमानयुतो गुरुः।। ५०
स्थाने तु नैरृते स्थित्वा देवदेवमनुस्मरन्।
भामिनीमग्रतः कृत्वा सर्वालङ्कारसंयुताम्।। ५१
आचार्यः कुम्भमादाय पुष्पाक्षतविभूषितम्।
'प्रीयतां मेदिनी' त्युक्त्वा स्रावयेतु प्रदक्षिणम्।। ५२
चक्रादिभिस्ततो गच्छेत्कुर्वन्नेव प्रदक्षिणम्।
स्थानस्य पश्चिमे कुम्भं धान्यपीठे निवेश्य च।। ५३
अर्चयित्वा विधानेन हविस्सम्यङ्निवेदयेत्।
अण्डजादीनि चास्तीर्य कृत्वा कौतुकबन्धनम्।। ५४



पुण्याहं वाचायित्वा तु वृषभौ तु सुबन्धयेत्।
दद्यात् तृणानि बहुलं रात्रिशेषं व्यपोहयेत्।। ५५
ततः प्रभाते स्नात्वा तु यजमानयुतो गुरुः।
कर्षकं पूजयित्वा तु वस्त्राभरणकुण्डलैः।। ५६
'नमो वरुणे' ति मन्त्रेण अमितं सम्प्रणम्य च।
पूर्वोक्तेन विधानेन कर्षणं सम्यगाचरेत्।। ५७
तां भूमिं प्रोक्षणैः प्रोक्ष्य पश्चाद्बीजानि चाहरेत्।
शालिव्रीहियवान् मुद्गान् तिलान् माषान् प्रियङ्गुकान्।। ५८
गोधूमांश्चणकांस्तिल्वान् मसूरान् सर्षपांस्तथा।
निष्पावांश्च कुलुत्थांश्च षष्टिकांश्च यवांस्तथा।। ५९
श्वेतसर्षपसंयुक्तान् सारभूतान् समाहरेत्।
वेणुपात्रे तु सन्न्यस्य सोमं तत्रैव पूजयेत्।। ६०
'इमे बीजे' ति मन्त्रेण बीजानि त्वभिमन्त्रयेत्।
'प्ररोह बीजा' नित्युक्त्वा वापनं सर्वतश्चरेत्।। ६१
पश्चात्कर्षकमाहूय कर्षयित्वा शनैश्शनैः।
'दुहतां दिव' मित्युक्त्वा जलं सम्यक् प्रदापयेत्।। ६२
प्रदक्षिणं ततः कृत्वा रक्षां सर्वत्र कारयेत्।
चक्रामितौ समादाय तूर्यघोषसमायुतम्।। ६३
स्वगृहं सम्प्रविश्यैव गुरवे दक्षिणां ददेत्।
सस्यं पक्वं समालोक्य अनुकूलदिनं भजेत्।। ६४
तद्दिनादेव पूर्वेद्युः चक्रादींस्तत्र सन्नयेत्।
सन्न्यस्य पूर्ववत् स्थाप्य पूर्ववत्सम्यगर्चयेत्।। ६५
रात्रौ गवामनेकेषामधिवासनमाचरेत्।
पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।। ६६

स्नात्वा स्नानविधानेन गाः सर्वाः सम्प्रणम्य च।
पश्चिमे न्यस्तचक्रादिदेवान् सम्यक् प्रणम्य च।। ६७
गोदानसूक्तमुच्चार्य गोभ्यः सम्यक् निवेदयेत्।
'गावो ही' ति जपन्मन्त्रं शुद्धादीनां जपं चरेत्।। ६८
गोगणैरभिसङ्कान्तां भूमिं सम्यक् प्रविश्य च।
'इमां सिञ्चामि' मन्त्रेण प्रोक्षयित्वा तु सर्वतः।। ६९
तद्दिने चैव सायन्तु चरुमाहृत्य यत्नतः।
पूर्वं देवं समभ्यर्च्य बालस्थानगतं हरिम्।। ७०
तां भूमिं समनुप्राप्य नवतन्तून् प्रसार्य च।
प्रागग्रानुत्तराग्रांश्च चतुष्षष्टिपदं चरेत्।। ७१
ईशञ्चैव तु पर्जन्यं जयन्तञ्च विशेषतः।
अर्चयेत्तु क्रमेणैव महेन्द्रादित्यसत्यकान्।। ७२
भृशान्तरिक्षावग्निञ्च प्राच्यां वै बाह्यसन्धिषु।
पूजयित्वा विधानेन बलिं तत्र समर्पयेत्।। ७३
उष्णांशुपूषवितथान् गृहक्षतमतः परम्।
यमं तथैव गन्धर्वं भृङ्गराजमृषिं तथा।। ७४
निर्ऋतिं दौवारिकं सुग्रीवं पुष्पदन्तं सरित्पतिम्।
असुरं शोषणं रोगं जवनञ्च विशेषतः।। ७५
नागं मुख्यञ्च भल्लाटं सोममर्गलमेव च।
अदितिं सूरिदेवञ्च विधिनैव विचक्षणः।। ७६
आग्नेयादि तथैशान्तं बाह्ये सन्धिषु चार्चयेत्।
क्रमेण तु बलिं दद्यात् स्वनामपदपूर्वकम्।। ७७
ब्रह्माऽर्यमा दण्डधरः पाशभृद्धनदस्तथा।
मध्ये पदे चतुर्दिक्षु पञ्चैतान् पूजयेत् क्रमात्।। ७८

सवितारञ्च सावित्रमाग्नेयं कोणमाश्रितौ।
इन्द्रञ्चेन्द्रजयञ्चैव नैऋतं कौणमाश्रितौ।। ७९
रुद्रं रुद्रजयञ्चैव वायव्यं कौणमाश्रितौ।
आपञ्चैवापवत्सञ्च ऐशान्यं कोणमाश्रितौ।
एते चाष्टौ तु कोणेषु द्वौ द्वौ पूज्यौ पृथक् पृथक्।। ८०
ब्रह्मा नवपदं भुक्ते मध्ये तत्परितश्च वै।
अर्यमाद्याश्च चत्वारः पृथक् षट्पदभोजिनः।। ८१
सवित्राद्यास्तथैवाष्टौ भुञ्जते द्वे पृथक् पृथक्।
देवा द्वात्रिंशदीशाद्याः एकैकपदभोजिनः।। ८२
चतुष्षष्टिपदे पञ्चचत्वारिंशच्च देवताः।
अन्तः सूत्राधिदेवांस्तान् स्थापयित्वा बलिं ददेत्।। ८३
सन्धौ सन्धौ बलिभुजः सन्धिष्वेतान् प्रकल्पयेत्।
चरकी देवतारिश्च पूतना पापराक्षसी।। ८४
प्रागादि चोत्तरान्तस्थाः बाह्ये तासां बलिं ददेत्।
गर्भालयं समुद्दिश्य पञ्च सूत्राणि कल्पयेत्।। ८५
प्रागन्तञ्चोत्तरान्तञ्च सूत्रयुक्तं पदं चरेत्।
नागं भूतञ्च यक्षञ्च दुर्गा घोटमुखीं तथा। ८६
धात्रीञ्च बपुषञ्चैव राक्षसञ्च ततः परम्।
जयं कक्षं सुरुण्डञ्च शिवं प्राणं कविं तथा।। ८७
चक्रञ्च पुरुहूतञ्च विद्याञ्च यशसं तथा।
भद्रां वेदभृतञ्चैव तापसं सिन्धुषामपि।। ८८
विद्याञ्चैव ततोऽभ्यर्चेदनन्तं पाञ्चभौतिकम्।
प्रागुदक्सूत्रसन्धिस्थान् पञ्च पञ्च पदार्थिनः।। ८९

शिवं विश्वं तथा मित्रमत्रिञ्चैवार्चयेत्क्रमात्।
बिम्बस्य पृष्ठतश्चापि प्रादक्षिण्यक्रमेण तु।। ९०
कुस्तुरुण्डाय गर्भाय वरुणाय धनाय च।
कालायेति च मन्त्रज्ञो दक्षिणे सम्यगर्चयेत्।। ९१
दहनाय च विघण्टाय पवनाय मुदाय च।
गोलकाय च मन्त्रेण पश्चिमे सम्यगर्चयेत्।। ९२
महिषघ्नाय वेत्राय वेत्रसाराय चेत्यपि।
कपोतकाय वै तुल्यवादिने चेति चोत्तरे।। ९३
फुल्लाय फुल्लरूपाय विघ्नायविघ्नकारिणे।
सर्वोद्वहायेति मन्त्री प्राच्यां सम्यक् प्रपूजयेत्।। ८४
किष्किन्धाय च तीर्थाय मोहनायाथ दण्डिने।
यूथकायेति मन्त्रेण अङ्कणेऽतोऽन्तकाय च।। ९५
स्पर्धघ्नाय च निघ्नाय सुखदाय हिताय च।
अङ्गणस्य च मध्ये तु अर्चयित्वा बलिं ददेत्।। ९६
'योजः पुरे' ति शिष्टानां सर्वेषाञ्च बलिं ददेत्।
पिशाचेभ्यश्च भूतेभ्यः गणेभ्यश्च बलिं ददेत्।। ९७
'सर्वं व्यपैतु' जप्त्वा तु जलैः सर्वत्र सेचयेत्।
'पूर्वं स्थिते' ति मन्त्रेण सर्वान् देवान् प्रणम्य च।। ९८
पुष्पाञ्जलिसमायुक्तं तिललाजसमायुतम्।
पृक्तं कृत्वा विशेषेण भक्ष्ययुक्तञ्च संहरेत्।। ९९
'चरमं चरे' ति चोक्त्वा तु बलिं बाह्ये च कारयेत्।
'अस्तु स्वस्ती' च जपन् जलैरास्राव्य सर्वतः।। १००
शान्तं पश्चात्प्रणम्यैव गत्वा तु स्वगृहं तथा।
वीशं चक्रञ्च तत्काले प्रणम्यैवानुमान्य च।। १०१

यजमानो गुरुश्चैव भुञ्जीत सह बान्धवैः।
भगवच्चरितं पुण्यं श्रुत्वा रात्रिं व्यपोह्य च।। १०२
पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन गत्वा तां भूमिमादरात्।। १०३
सूत्रोक्ते न विधानेन भूमियज्ञं समाचरेत्।
पर्यग्निञ्चैव कृत्वा तु प्रोक्षणैः प्रोक्ष्य सर्वतः।। १०४
गर्भालयप्रदेशे तु पौण्डरीकन्तु कारयेत्।
आघारं विधिवत्कृत्वा अदितेन्वादिभिः क्रमात्।। १०५
परिषेकन्तु कृत्वा तु कूर्चयुक्तेन वारिणा।
जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतः परम्।। १०६
एकाक्षरादिसूक्तञ्च गोसूक्तं तदनन्तरम्।
वैष्णवञ्च स्विष्टकृतं सर्वशान्तिर्भविष्यति।। १०७
अग्निं विसर्जयित्वा तु देवदेवं प्रणम्य च।
अर्चयेद्वास्तुपुरुषं विधिनैव समाहितः।। १०८
द्वात्रिंशत्प्रस्थसम्पूर्णं नवं कुम्भं प्रगृह्य च।
सूत्रेण वेष्टयित्वालङ्कृत्य चाङ्कुरपल्लवैः।। १०९
नादेयं जलमादाय पूरयित्वा विधानतः।
वरुणं पाशभृतं वीरमुदकपमिति ब्रुवन्।। ११०
अर्चयेद्वरुणं कुम्भे चतुर्मूर्तिविधानतः।
अधिवासं ततः कृत्वा रात्रिशेषं व्यपोह्य च।। १११
पुनः प्रभाते धर्मात्वा यजमानयुतो गुरुः।
गर्भालयोद्दिष्टभूमिं समासाद्य प्रयत्नतः।। ११२
तत्रैव ब्रह्मणो भागे अवटञ्चैव खानयेत्।
एकहस्तप्रमाणेन विस्तारञ्च चतुर्दिशम्।। ११३

हस्तप्रमाणेन निम्नं खानयेत्तु विचक्षणः।
'त्वां खना' मीति मन्त्रेण प्राङ्मुखस्त्वेव खानयेत्।।११४
अवटाद्बहिरुत्क्षिप्य मृदं तामभिमन्त्रयेत्।
'पांसून् प्रेष्यामि' मन्त्रेण मृदं खातां पुनः क्षिपेत्।।११५
अधिकेऽभ्युदयः प्रोक्तः हीने चाशुभमुच्यते।
परीक्ष्य तु ततः पश्चात् कुम्भं तत्रैव सन्नयेत्।। ११६
उत्फुल्लं पद्ममादाय तत्काले गुरुरत्वरः।
'यस्सखा' इति मन्त्रेण विष्वक्सेनं समर्चयेत्।। ११७
'त्वं सर्वे' ति जपन्मन्त्रं विष्वक्सेनं प्रणम्य च।
'सुक्रमा' इति च तत्काले कुम्भं स्पृष्टाऽभिमन्त्रयेत्।।११८
'सर्वा वरुण' मन्त्रेण कुम्भमादाय वै बुधः।
'पातु मां वरुणो रक्त' इति खातं प्रपूरयेत्।। ११९
पद्ममादाय हस्ताभ्या 'मायातु भगवा' निति।
अवटस्थे जले क्षिप्त्वा निमित्तञ्चैव लक्षयेत्।। १२०
दक्षिणावर्तकं स्याच्चेत्सर्वसम्पत्करं भवेत्।
वामावर्तं यदि भवेत् प्रायश्चित्तं हुनेत्क्रमात्।। १२१
जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
जयाद्यैरपि हुत्वा तु यद्देवाद्यैस्ततः परम्।। १२२
व्याहृतीभिश्च हुत्वा तु अन्तहोमञ्च कारयेत्।
सर्वदोषोपशमनं सर्वकर्मसमृद्धिदम्।
तस्मात्सर्वप्रयत्नेन अम्भस्यब्जञ्च शोधयेत्।। १२३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे कर्षणविधिर्नाम तृतीयोऽध्यायः।।

## अथ चतुर्थोऽध्यायः

-----------

### आद्येष्टकान्यासः

अतः परं प्रवक्ष्यामि वास्तुनः प्रथमेष्टकाम्।
अयनञ्चोत्तरं श्रेष्ठं दक्षिणन्त्वापदि स्मृतम्।। १
मासानां फाल्गुनं श्रेष्ठं चैत्रं वैशाखमेव च।
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।। २
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।। ३
नहि प्रतीक्षते मृत्युः कर्तव्यो धर्मसङ्ग्रहः।
तस्मात्सर्वप्रयत्नेन देवकार्यं समाचरेत्।। ४
त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ।
श्रवणे वारुणे चैव मैत्रे सौम्ये तथैव च।। ५
शुभर्क्षे देवकार्याणि समारभ्य समापयेत्।
तथा युग्माश्च तिथयः प्रशस्ता विष्टिवर्जिताः।। ६
गुरुशुक्रबुधेन्दूनां वाराश्चैव सुशोभनाः।
चरराशिं वर्जयित्वा स्थिरराशौ तु कारयेत्।। ७
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे।। ८
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।
अङ्कुरार्पणकादूर्ध्वं द्रव्याणामत्र सङ्ग्रहः।। ९
पूर्वं भूमिं खनित्वा तु यावत्तोयस्य दर्शनम्।
शिलान्तं वा जलान्तं वा शोधयित्वा समन्ततः।। १०

वालुकैः पूरयित्वा तु जलेन सहितं शनैः।
समां भूमिं तथा कुर्याद्यावत्सीमान्तनिर्णयः।। ११
चतस्र इष्टकाः ग्राह्याः शिला वाथ विशेषतः।
वक्ष्यमाणेन विधिना शिलासङ्ग्रहणं चरेत्।। १२
जर्जरीश्च ? समाहृत्य इष्टका वाथ सम्भरेत्।
हस्तं हस्तद्वयं वापि त्रिहस्तं वा यथार्हतः।। १३
आयतं चतुरश्रं वा घनं युक्त्या तु कारयेत्।
तालं तालद्वयं वापि त्रितालं वा समाहरेत्।। १४
उन्नतं भागमुद्दिष्टमिष्टकानामितीरितम्।
मुखं पृष्ठं तथा ज्ञात्वा अग्रं पादं तथैव च।। १५
विधिं विदित्वा धर्मात्मा शिल्पिभिः कृतनिश्चयः।
जलाधिवासं कुर्वीत पञ्चाहं त्रियहन्तु वा।। १६
एकाहं वापि कुर्वीत वारुणं मन्त्रमुच्चरन्।
(अथवा नाडिकाः पञ्च वासयित्वा समुद्धरेत्)।
प्रपाञ्च तत्रा कुर्वीत पूर्वस्मिन् दक्षिणेऽथवा।। १७
प्राच्यामाहवनीयन्तु अन्वाहार्यन्तु दक्षिणे।
गार्हपत्यं प्रतीच्यान्तु आवसत्थ्यमथोत्तरे।। १८
मध्ये सभ्यञ्च कुर्यात्तु किञ्चित्पूर्वसमाश्रिते।
नादेयैः सर्वयत्नेन शीतैः क्लिन्नैश्च वालुकैः।। १९
औपासनविधानेन कुर्यादाहवनीयकम्।
धनूरूपञ्च याम्ये तु कुण्डं स्याद्वारुणे तथा।। २०
त्रिकोणञ्चोत्तरे कुर्यादग्निकुण्डं सलक्षणम्।
सभ्यस्थानीयमथ वा मध्ये श्रामणकं चरेत्।। २१

वास्तुकल्पोक्त विधिना वास्त्वग्निं परिकल्पयेत्।
सूत्रोक्तेन विधानेन आघारं सम्यगाचरेत्।। २२
आघारान्ते च जुहुयात्सूक्तं सर्वत्र वैष्णवम्।
होतव्यं पौरुषं सूक्तमैन्द्रमाहवनीयके।। २३
आग्नेयं वैष्णवं सूक्तं याम्यं नैर्ऋतसंयुतम्।
दक्षिणाग्नौ तु जुहुयात्तत्तद्दैवमनुस्मरन्।। २४
वारुणे वैष्णवं हुत्वा वारुणं वायुदैवतम्।
सौम्ये तु सर्वदेवत्यं? सौम्यमैशान्यसंयुतम्।। २५
मध्ये तु सर्वदेवत्यं जुहुयात्तु विधानतः।
सभ्यस्य दक्षिणे पार्श्वे पृथिव्यामुपलिप्य च।। २६
यथालाभायतं कुर्याच्चतुरश्रन्तु मण्डलम्।
पञ्चवर्णैरलङ्कृत्य धान्यान्यत्र समास्तरेत्।। २७
तण्डुलानुपरि न्यस्य चतुरश्रं समन्ततः।
तस्योपरि विधानेन वासांसि च समास्तरेत्।। २८
शिलाश्चतस्त्र आहृत्य वारुणं मन्त्रमुच्चरन्।
तोयेनाप्लुत्य यत्नेन वैष्णवं मन्त्रमुच्चरन्।। २९
इष्टकास्सम्प्रगृह्यैव वस्त्राणामुपरि न्यसेत्।
पूर्वस्यामुत्तराग्रं स्यात्प्रागग्रं दक्षिणे न्यसेत्।। ३०
पश्चिमस्यामुत्तराग्रं प्रागग्रञ्चोत्तरे न्यसेत्।
ऐन्द्रादि पुरुषादीन्वै अर्घ्यान्तन्तु समर्चयेत्।। ३१
मध्ये रत्नं सुससंन्यस्य ब्रह्माणमपि पूजयेत्।
वस्त्रेणाच्छाद्य यत्नेन प्रत्येकं वै नवेन तु।। ३२
दर्भानुपरि विन्यस्य पुष्पाक्षतसमन्वितान्।
पश्चात्तु परिषिच्याग्निं अदितेन्वादिभिः क्रमात्।। ३३

पूर्वोक्तेनैव मन्त्रेण प्रत्येकञ्चैकविंशतिम्।
जुहुयात्तु विधानेन तं तं देवमनुस्मरन्।। ३४
एंव कृत्वा प्रभाते तु यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।। ३५
शालां प्रदक्षिणीकृत्य यजमानस्समाहितः।
आचार्यं पूजयित्वा तु वस्त्राभरणकुण्डलैः।। ३६
स्थापनार्थञ्च चतुरः उक्तलक्षणसंयुतान्।
स्थापकान् पूजयित्वा तु वस्त्रमाल्यानुलेपनैः।। ३७
इष्टका धारयित्वा तु कुर्याद् ग्रामप्रदक्षिणम्।
सर्वालङ्कारसंयुक्तं सर्ववाद्यसमन्वितम्।। ३८
ग्रामं प्रदक्षिणीकृत्य पश्चात् स्थानं समाविशेत्।
आचार्यः शिल्पिभिस्सार्धं सूत्रं सम्यक् प्रसार्य च।। ३९
द्वारं सम्यग्विदित्वा तु प्राग्द्वारादि यथाक्रमम्।
द्वारस्य दक्षिणे भागे इष्टकास्ताः समर्पयेत्।। ४०
दक्षिणस्य कवाटस्य मूलं ज्ञात्वा तु युक्तितः।
द्वारस्य दक्षिणे भागे केषाञ्चित्पक्ष उच्यते।। ४१
'इषेत्वोर्जे' त्वेति जपन् ऐन्द्रे चैवोत्तराग्रकम्।
'अग्निमीले' इति मन्त्रेण प्रागग्रञ्चैव दक्षिणे।। ४२
'अग्न आयाहि' मन्त्रेण वारुणे चोत्तराग्रकम्।
'शन्नो देवी' ति मन्त्रेण प्रागग्रञ्चोत्तरे न्यसेत्।। ४३
वैष्णवं मन्त्रमुच्चार्य मध्ये रत्नानि संन्यसेत्।
पश्चाच्छिल्पिनमाहूय पूजयित्वा विशेषतः।। ४४
शिल्पशास्त्रोक्तविधिना शिल्पिना सम्यगाचरेत्।
नलिनकादिविमानेषु यजमानेच्छया गुरुः।। ४५

पञ्चहस्तं समारभ्य यथाशक्ति समाचरेत्।
द्वितलं त्रितलं वापि कारयेत्तु विधानतः।। ४६
एवं विदित्वा त्वाचार्यः शिल्पिना कारयेत् क्रमात्।
शास्त्रं शास्त्रविदाचार्यः चक्षुषी जगतो मते।। ४७
तस्मात्सर्वप्रयत्नेन आचार्यः शिल्पिना सह।
कारयेच्च विमानं वै सर्वालङ्कारसंयुतम्।। ४८
विष्णोरालयमुद्दिश्य यः कुर्यात्प्रथमेष्टकाम्।
कार्ये सिद्धेऽप्यसिद्धे वा साकल्येन फलं लभेत्।। ४९
सर्वजन्मकृतं पापं स्वल्पं वा यदि वा बहु।
विष्णोरालयविन्यासप्रारम्भादेव नश्यति।। ५०

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे आद्येष्टकाविधिर्नाम
चतुर्थोऽध्यायः ।

-----------

अथ पञ्चमोऽध्यायः

-----------

## गर्भप्रक्षेपणम्

अतः परं प्रवक्ष्यामि गर्भप्रक्षेपणं परम्।
राष्ट्रं ग्रामञ्च नगरं पत्तनञ्चैव खर्वटम्।। १
कुटिका दण्डकञ्चैव सेनामुखमतः परम्।
सभास्थानं सेतुबन्धः शाला चाराम एव च।। २
सस्यक्षेत्रं तटाकश्च नद्यास्तीरं तथैव च।
एतेषु स्थानमुद्दिष्टमिति होवाच पूर्वजः।। ३

गर्भस्थानानि वै सप्त देवागारप्रकल्पने।
भूमौ च पट्टिकायाञ्च मस्तके च विशेषतः।। ४
कूटकोष्ठान्तरे चैव प्राकारे गोपुरे तथा।
पाकालये विधातव्यमथवा स्नपनालये।। ५
नलिनकादिविमानेषु स्थानेष्वेषु निधापयेत्।
राष्ट्रमुद्दिश्य यत्नेन अग्रहारेषु संन्यसेत्।। ६
ग्राममुद्दिश्य तद्ग्रामे ब्रह्मस्थाने समर्पयेत्।
नगरे पश्चिमे प्रोक्तं पत्तने चैव मध्यतः।। ७
खर्वटे पश्चिमे प्रोक्तं कुटिके चैव मध्यतः।
दण्डके मध्यमे प्रोक्तं मध्ये सेनामुखे न्यसेत्।। ८
सभास्थाने तथा मध्ये सेतुबन्धे च मध्यतः।
शालायां मध्यमे प्रोक्तमारामे चापि मध्यतः।। ९
सस्यक्षेत्रे मनोरम्ये तटाके चापि मध्यतः।
नद्यास्तीरे प्रकुर्वीत यथायोग्यं यथाविधि।। १०
विमाने चैव यत्नेन गर्भं सम्यङ्निधापयेत्।
भूमिभागे विधातव्यं भूमेः सम्बन्धमिच्छता।। ११
ऋद्ध्यर्थं पट्टिकायान्तु स्थित्यर्थं मस्तके न्यसेत्।
द्वारे च दक्षिणे भागे भित्तिभागे तु भाजिते।। १२
भागे चोत्तरतो गर्भभित्तिमध्ये निधापयेत्।
प्राकारे चैव चैन्द्रे तु गोपुरे दक्षिणे तले।। १३
पाकालये तु मध्ये तु मध्ये वै स्नपनालये।
आरम्भकालात्पूर्वस्मिन् फेलां ताम्रमयीं हरेत्।। १४
षण्णवतियवायामविस्तृता चोत्तमा भवेत्।
चतुष्षष्टियवायामविस्तृता मध्यमा स्मृता।। १५

चत्वारिंशद्यवायामविस्तृता चाधमा मता।
तदर्धमुन्नतां कुर्यात्पादहीनोत्तरच्छदाम्।। १६
श्लक्ष्णामेवंविधाकारां भेदच्छिद्रविवर्जिताम्।
पञ्चविंशत्पदैर्युक्तामथवा नवभिः पदैः।। १७
त्रिषूत्तरेषु रोहिण्यां स्वात्याञ्चैव पुनर्वसौ।
चित्रायां मृगशीर्षे च अनूराधे तथैव च।। १८
नक्षत्रेष्वेषु हस्ते च गर्भप्रक्षेपणञ्चरेत्।
तेषां शुभांशगे चन्द्रे स्थिरराशौ तु कारयेत्।। १९
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे।। २०
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।
अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत्।। २१
जले तु निक्षिपेत्फेलां पञ्चगव्येन शोधिताम्।
लिखित्वा चैव दिग्भागं फेलायाञ्च चतुर्दिशम्।। २२
ब्रह्मस्थाने ब्रह्ममणिञ्चैन्द्रे वज्रमणिं न्यसेत्।
अग्नौ मौक्तिकमुद्दिष्टं याम्ये वैदूर्यमुच्यते।। २३
नैरृते शङ्खजं दद्याद्वारुणे स्फटिकं न्यसेत्।
वायौ पुष्यमणिञ्चैव चन्द्रकान्तं तथोत्तरे।। २४
ऐशान्यां विन्यसेन्नीलमेवं नवपदे न्यसेत्।
बाह्ये तु षोडशपदेष्वैन्द्रे सौवर्णमेव च।। २५
अग्नीन्द्रयोस्तथा मध्ये हरितालमुदाहृतम्।
आग्नेये वै तथा स्थाने शुक्तिजं प्रक्षिपेद्बुधः।। २६
यमाग्न्योर्मध्यमे स्थाने न्यसेच्चैव मनशिशलाम्।
विन्यसेत्तु यमस्थाने आयसन्तु विशेषतः।। २७

यमनैरृतयोर्मध्ये प्रक्षिपेत्पारदं परम्।
नैरृते तु तथा स्थाने अमृताश्मकमुच्यते।। २८

नीलवारुणयोर्मध्ये प्रक्षिपेच्छ्यामकं तथा।
वरुणस्य तथा स्थाने रजतं तत्र विन्यसेत्।। २९

वरुणोदानयोर्मध्ये प्रक्षिपेदञ्जनं तथा।
उदानस्य तथा स्थाने पुष्यकान्तञ्च विन्यसेत्।। ३०

उदानसोमयोर्मध्ये कुरुविन्दं विशेषतः ।
सोमस्य तु तथा स्थाने प्रक्षिपेत्ताम्रकं बुधः ।। ३१

ईशानसोमयोर्मध्ये सौराष्ट्रञ्चैव विन्यसेत् ।
ईशाने विमलं तत्र विन्यसेत्तत्पदक्रमात् ।। ३२

तथेन्द्रेशानयोर्मध्ये गोरोचनमुदाहृतम् ।
एंव तु विन्यसेद्विद्वान् पञ्चविंशत्पदेषु वै ।। ३३

शालिव्रीहियवा मुद्गतिलमाषप्रियङ्गवः ।
गोधूमाश्चणकास्तिल्वा मसूराश्चातसी तथा ।। ३४

कुलुत्थसर्षपाद्यास्तु षष्टिर्निष्पाव एव च।
बाह्ये षोडशबीजानि क्रमादैन्द्रादि विन्यसेत्।। ३५

मध्ये वै सर्वबीजानि निक्षिपेत्क्रमविद्बुधः।
समुद्रे चैव वल्मीके नदीतीरे च पर्वते।। ३६

सस्यक्षेत्रे गजदन्ते गोविषाणे कुलीरके।
स्थानेष्वष्टमृदश्चैव ऐशान्यादिषु विन्यसेत्।। ३७

नीलोत्पलञ्च कल्हारमुत्पलं पद्ममेव च।
एतेषाञ्चैव मूलानि चतुर्दिक्षु निधापयेत्।। ३८

यज्ञोपवीतं मौञ्जीञ्च दण्डं वै कुण्डिकां तथा।
वेदं कूर्चं स्रुवञ्चैव आज्यस्थालीं तथैव च।। ३९

अन्यानि यज्ञपात्राणि विप्रो गर्भे निधापयेत्।
हारञ्च मकुटञ्चैव कुण्डले चाङ्गदे तथा।। ४०
वलयं हस्तबन्धञ्च क्षौमं वै मेखलायुतम्।
धनुश्चर्मासिखड्गांश्च प्रासं सवलयं तथा।। ४१
शङ्खचक्रगदापाशान् रथं तुरगसंयुतम्।
भेरीञ्चाङ्कुशसंयुक्तं प्रतोदं योक्तमेव च ।। ४२
छत्रं पताकासंयुक्तमष्टमङ्गलसंयुतम्।
सौवर्णं कूर्मरूपञ्च वज्रञ्चाशनिमेव च।। ४३
क्षत्रियाणां जयार्थं वै सर्वनितान् सुससंन्यसेत्।
तुलां कृत्वा यथान्यायं वैश्यानां स्थापयेद्धिताम्।। ४४
हलं हैरण्मयं कृत्वा युगं वै बीजभाजनम्।
पशूंश्चैव तथा कृत्वा शूद्राणां स्थापयेत्क्रमात्।। ४५
ग्रामगर्भं यदि स्याच्चेत्तप्तचामीकरं चरेत्।
श्रीरूपं कूर्मरूपञ्च मेघरूपं तथैव च।। ४६
गजञ्च गरुडञ्चैव बृषभं हंसमेव च।
शङ्खचक्रासिशार्ङ्गांश्च शरं खेटकमेव च।। ४७
पञ्चवर्णैरलङ्कृत्य धान्यराशिं प्रपूर्य च।
तण्डुलानुपरि न्यस्य दर्भानुपरि विन्यसेत्।। ४८
फेलां तत्रैव विन्यस्य वस्त्रयुग्मेन वेष्टयेत्।
तस्य दक्षिणदिग्भागे वेदिं कृत्वोपलिप्य च।। ४९
वर्णानुद्दिश्य विहितद्रव्याणाञ्च विशेषतः।
ब्रह्मस्थाने निधातव्यद्रव्याणाञ्चोपकुर्वताम्।। ५०
उपवीतादिकानान्तु पूर्वेद्युर्ग्रहणं चरेत्।
विलिख्य नाम प्रत्येकं लक्ष्मीकृत्याप्रमादतः।। ५१

असाङ्कर्येण द्रव्याणि प्रत्येकं निक्षिपेद्बुधः।
पूर्वस्मिन्नेव दिवसे रात्रौ होमं समाचरेत्।। ५२
यत्रैव स्थापयेद्गर्भं तत उत्तरपार्श्वतः।
सूत्रोक्तेनैव मार्गेण भूमियज्ञं समाचरेत्।। ५३
पुण्याहं वाचयित्वा तु गर्भस्थाने विशेषतः।
कुण्डमौपासनं कृत्वा गर्भस्थानस्य दक्षिणे।। ५४
आघारं विधिवत्कृत्वा अदितेन्वादिभिः क्रमात्।
समिधां क्षेपणं कृत्वा पालाशीनां विशेषतः।। ५५
गव्यं घृतं समादाय विष्णुसूक्तेन होमयेत्।
हुत्वा तु पौरुषं सूक्त 'मतो देवादि' वैष्णवम्।। ५६
ब्राह्मं रौद्रञ्च हुत्वा तु यद्देवाद्यैः समन्वितम्।
जयाद्यैरपि हुत्वा तु ऐन्द्रमाग्नेयसंयुतम्।। ५७
याम्यं नैर्ऋतसंयुक्तं वारुणं वायुदैवतम्।
सौम्यमीशानदैवत्यं हुत्वा तत्र यथाक्रमम्।। ५८
जुहुयाद्भूमिदैवत्यं पाञ्चभौतिकसंयुतम्।
व्याहृत्यन्तं तु हुत्वा तु तद्दैवत्यं पृथक् पृथक्।। ५९
अग्निकुण्डस्य पूर्वे तु मण्डलान्युपलिप्य च।
पीठं धान्येन कृत्वा तु तण्डुलैश्च समास्तरेत्।। ६०
सौवर्णं राजतं ताम्रं पात्रं कांस्यमयं तथा।
रत्नधातुसमायुक्तं बीजमूलसमायुतम्।। ६१
उपवीतादिसंयुक्तं मृद्भिश्चैव समायुतम्।
प्रतिद्रव्यं विशेषेण पृथक्पात्रं समाहरेत्।। ६२
वस्त्रेण वेष्टयित्वा तु पुष्पाक्षतसमायुतम्।
अधिवासञ्च कृत्वा तु रात्रिशेषं व्यपोहयेत्।। ६३

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन तर्पयित्वा च देवताः।। ६४
जप्त्वा द्वादश सूक्तानि देवदेवं प्रणम्य च।
ततस्त्वग्निं समासाद्य परिस्तीर्य च पावकम्।। ६५
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
इन्द्रादिलोकपालानां हुत्वा तत्र यथाक्रमम्।। ६६
यजमानो गुरुञ्चैव वस्त्राभरणकुण्डलैः।
हैमपुष्पैश्च माल्यैश्च अर्घ्यपाद्यादिभिस्तथा।। ६७
पूजयित्वा विशेषेण नमस्कुर्यात्ततो गुरुः।
कुण्डस्य दक्षिणे भागे मण्डलान्युपलिप्य च।। ६८
दर्भानुपरि संन्यस्य पुष्पाक्षतसमायुतान्।
आसनं ब्राह्ममास्थाय फेलां तां प्राङ्मुखीं न्यसेत्।। ६९
हरिणीञ्च समाराध्य फेलायामुपरि क्रमात्।
'नमो वरुण' इत्युक्त्वा स्पृशन् रत्नादिकं जपेत्।। ७०
'ब्रह्म प्रतिष्ठे' त्युक्त्वा तु ब्रह्माणं मनसा स्मरन्।
ब्रह्मस्थानं समुद्दिश्य उक्तान् सर्वान् सुसंन्यसेत्।। ७१
उपवीतादिसर्वाणि वर्णानुद्दिश्य यानि वै।

ब्राह्मं मन्त्रं समुच्चार्य ब्रह्मस्थाने निधापयेत्।

'इन्द्रं प्रणवन्तमि' त्युक्त्वा इन्द्रस्थाने सुसंन्यसेत्।। ७२
ऐन्द्राद्यैशान्यपर्यन्तं तत्तन्मन्त्रमुदीरयन्।
रत्नं धातुसमायुक्तं बीजं मृच्चाष्टमङ्गलान्।। ७३
एकैकं मन्त्रमुच्चार्य संन्यसेच्च यथाक्रमम्।
वेदानाञ्चाप्यध्ययनं तत्तद्दिक्षु समाचरेत्।। ६४

ऋग्वेदं पूर्वतो जप्त्वा यजुर्वेदन्तु दक्षिणे।
पश्चिमे सामवेदञ्चाथर्ववेदं तथोत्तरे।। ७५
एवं दिवा प्रकुर्वीत कृच्छ्रान्नं भोजयेत्ततः।
अन्नादींश्चैव कृत्वा तु ब्राह्मणादींश्च तर्पयेत्।। ७६
सायं सन्ध्यामुपास्यैव यजमानयुतो गुरुः।
ततस्त्वग्निं समासाद्य पूर्ववद्धोममाचरेत्।। ७७
रात्रौ निधापयेद्गर्भं मुहूर्ते तु विचक्षणः।
शिरसा धारयेत्फेलां स्थानं सम्यक् प्रवेशयेत्।। ७८
उभाभ्याञ्चैव हस्ताभ्यामादाय प्रयतः क्रमात्।
ध्रुवसूक्तं जपित्वा तु विष्णुसूक्तमतः परम्।। ७९
देवेशं मनसा ध्यात्वा स्थापयेद्गर्भभाजनम्।
ग्रामगर्भं यदि स्याच्चेत् ब्राह्ममन्त्रपुरस्सरम्।। ८०
अन्येषु चैव स्थानेषु विष्णुसूक्तं समुच्चरेत्।
सुधया पूरयित्वा तु शिल्पिना सुदृढं चरेत्।। ८१
पश्चादग्निं समासाद्य महाशांतिं हुनेत्क्रमात्।
स्विष्टाकारञ्च हुत्वा तु अन्तहोमं ततश्चरेत्।। ८२
यत्रैव स्थापयेद्गर्भं तत्र सम्पत्करं भवेत्।
ग्रामशान्तिकरञ्चैव वेदानामपि बृंहणम्।। ८३
क्षेत्राभिवृद्धिरधिका धनधान्याभिवर्धनम्।
(सन्ततीनां कुलस्यापि यानवाहनसम्पदाम्
पत्नीभृत्यमनुष्याणां पशूनामृद्धिमादिशेत्)
तस्मात्सर्वप्रयत्नेन स्थापयेद्गर्भभाजनम्।। ८४
स्थानगर्भं विना यत्र क्षेत्रं तत्तु विनश्यति।
ग्रामे वा नगरे वापि पत्तने खर्वटेऽपि वा।। ८५

देवालये सभास्थाने मण्डपेऽन्यत्र वार्चने।
शून्ये तु द्वादशाब्दान्ते गर्भशक्तिर्विनश्यति।। ८६
सदोषन्तु विमानञ्चेत् पुनस्संस्कारमर्हति।
कर्षणादिक्रमं सर्वं पूर्वोक्तेन विधानतः।। ८७
कृत्वा तु स्थापयेद्गर्भं बिम्बं कृत्वा सलक्षणम्।
पूर्वोक्तेन विधानेन स्थापयेद्देवमव्ययम्।। ८८
स्नपनं विधिवत्कृत्वा अन्नाद्यञ्च स्वशक्तितः।
दत्वा तु वेदविद्भ्यश्च दक्षिणां शक्तितो ददेत्।। ८९
ग्रामं शून्यं यदि भवेत्तद्ग्रामे सर्वमाचरेत्।
तृणगुल्मादि संशोध्य अस्थिपाषाणसञ्चयम्।। ९०
कर्षणं पूर्ववत्कृत्वा पदं पूर्ववदाचरेत्।
वास्तुहोमञ्च कृत्वा तु ग्रहशान्तिञ्च कारयेत्।। ९१
ग्राममध्ये प्रपां कृत्वा पञ्चाग्नीन् साधयेत् क्रमात्।
प्राच्यामाहवनीयन्तु अन्वाहार्यन्तु दक्षिणे।। ९२
गार्हपत्यं प्रतीच्यान्तु आवसत्थ्यं तथोत्तरे।
मध्ये सभ्यञ्च कृत्वा तु सितैः क्लिन्नैश्च वालुकैः।। ९३
सूत्रोक्तेन विधानेन कुण्डेष्वाघारमाचरेत्।
जुहुयात् पौरुषं सूक्तं प्राच्यामाहवनीयके।। ९४
अन्वाहार्ये सुहोतव्यं विष्णुसूक्तं विशेषतः।
गार्हपत्ये सुहोतव्यं ब्राह्मं वारुणसंयुतम्।। ९५
रुद्रसूक्तञ्च जुहुयादावसत्थ्ये विशेषतः।
अष्टविंशतिकं हुत्वा व्याहृत्यन्तं पृथक् पृथक्।। ९६
सभ्ये तु सर्वदैवत्यं जुहुयान्मन्त्रविद्वरः।
पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।। ९७

अन्नाद्यञ्चैव दद्यात्तु ब्राह्मणेभ्यः स्वशक्तितः।
पूर्वोक्तेन विधानेन स्थापयेद्गर्भमुत्तमम्।। ९८
अन्तहोमञ्च हुत्वा तु गुरवे दक्षिणां ददेत्।
एवमेव विधानेन नगरादिषु कारयेत्।। ९९
अन्यथा तु महान् दोषो भविष्यति न संशयः।
तस्मात्सर्वप्रयत्नेन गर्भयुक्तं समाचरेत्।। १००
धनधान्यसमृद्धिस्स्याद्वेदानामपि बृंहणम्।
सन्ततीनां कुलस्यापि यानवाहनभूमिभिः।। १०१
पत्नीभृत्यमनुष्याणां पशूनामृद्धिमादिशेत्।
पुत्राभिवृद्धिञ्चैव सस्यानामभिवृद्धिदम्।। १०२
क्षेत्रवृद्धिप्रदञ्चैव सस्यानामभिवृद्धिदम्।
राष्ट्राभिवृद्धिदञ्चापि राज्ञाञ्च बलवर्धनम्।
यत्रैव स्थापितं गर्भं तत्स्थानस्य समृद्धिदम्।। १०३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे गर्भप्रक्षेपणविधिर्नाम
पञ्चमोऽध्यायः।।

----------

अथ षष्ठोऽध्यायः

----------

**विमानभेदाः**

अतः परं प्रवक्ष्यामि विमानानि विशिष्य वै।
संस्थानानि च यान्यत्र प्रोक्तानि ब्रह्मणा पुरा।। १
तानि चात्र समासेन शृणुद्ध्वं ब्रह्मवित्तमाः।
द्वात्रिंशतिस्तु विज्ञेयाः प्रकाराः परिकीर्तिताः।। २

नलीनकन्तु प्रथमं प्रलीनकमतः परम्।
स्वस्तिकञ्च पृथङ्मानं दिशास्वस्तिकमेव च।। ३
नन्द्यावर्तञ्च श्रीवृतं पर्वताकृतिकं तथा।
अष्टौ महापद्ममिति देवानां परिकीर्तिताः।। ४
नन्दीविशालं विज्ञेयं स्वस्तिकञ्च ततः परम्।
पूर्वरङ्गविशालञ्च एकपादं तथैव च।। ५
विमानं गणिकाशालं कुबेरच्छन्दमेव च।
वापीप्रसादकञ्चैव ततः प्रकृतिरुच्यते।। ६
तोयं विमानं विज्ञेयमुत्पलाकारमेव च।
सिंहच्छन्दविमानञ्च सोमच्छन्दमतः परम्।। ७
मेनाकारन्तु विज्ञेयं शालीकरणमेव च।
कर्णिकाकारमेवात्र श्रियोऽलङ्कारमेव च।। ८
कुम्भाकारं ततश्चापि गोधामुखमतः परम्।
पिञ्छावतंसकञ्चैव चतुः स्फुटमिति स्मृतम्।। ९
हस्तिपृष्ठविमानञ्च नागच्छन्दमतः परम्।
देवानुद्दिश्य वर्णानां विमानान्युदितानि वै।। १०

## (१.) विमानानां लक्षणम्। - नलीनकविमानलक्षणम्

अतः परं प्रवक्ष्यामि विमानानान्तु लक्षणम्।
प्रथमं नलीनकस्योक्तमलङ्कारं प्रवक्ष्यते।। ११
मूलक्रिया सुविज्ञेया चतुरश्रा प्रलीनके।
तस्मात्तयाणां भागानां मध्ये गर्भगृहं विदुः।। १२
कर्तव्याऽलङ्कृतिस्तत्र वृत्तञ्च परिकीर्तितम्।
अर्धं गर्भगृहस्यापि करपिण्डीत्रिपादके।। १३

खण्डहर्म्यस्य विस्तारो गर्भविस्तार एव च।
अर्धं सोपानविस्तारो गर्भार्धं परकीर्तितम्।। १४
अधस्तादूर्ध्वतः स्तम्भाः संस्थानानि पृथक् पृथक्।
पूर्वाग्रं शैलचतुरमर्धस्तम्भं समाचरेत्।। १५
तस्यैव पादबन्धन्तु द्विविधं परिकीर्तितम्।
उत्तरं तस्य कर्तव्यं पार्श्वे खण्डोत्तरं तथा।। १६
अधस्तादूर्ध्वतस्तस्य सोपनानि पृथक् पृथक्।
ज्ञेयन्तु भित्तिसोपानं सखण्डार्धं ततस्ततः।। १७
पार्श्वे च तस्य कर्तव्यौ भित्तिखण्डेन संयुतौ।
सोपानानि षडेव स्युः तत्र हर्म्यं समाचरेत्।। १८
दर्शनं पिण्डिपादञ्च ऊर्ध्वं तस्य समाचरेत्।
द्विकर्णिकायाः कर्तव्या धराश्चाकारवत्तथा ?।। १९
शिरसस्तस्य संस्थानमायामं वृत्तमिष्यते।
शिरसोऽपि मुखे नासी गर्भार्धन्तु प्रमाणतः।। २०
निर्गमं तावदेवास्य मुखे तस्य विभूषितम्।
विचित्रं हस्तिमुण्डञ्च धराग्रं परिकीर्तितम्।। २१
वेदिका द्विविधा ज्ञेया जालका त्रिविधा भवेत्।
पुष्टिका अपि सप्त स्युरष्टौ तु मुखपिण्डकाः।। २२
नासी मृणालिका चैव मुष्टिबन्धं तथैव च।
वेदिका जालका चापि मल्लबन्धं पृथक् पृथक्।। २३
अधस्तादूर्ध्वतश्चापि स्वे स्थाने सन्निवेशयेत्।
व्यालभूमिश्च कर्तव्या स्वस्थानेषु समन्ततः।
धरास्तत्र तु कर्तव्या एका वा बहुशोऽपि वा।। १४



## (२.) प्रलीनकविमानलक्षणम्

द्वितीयं प्रलीनकं ज्ञेयं संस्थानं तस्य वक्ष्यते।
मूलकर्म तु विज्ञेयं चतुरश्रं प्रलीनके।। २५
अष्टानान्तु विभागानां मध्ये गर्भगृहं भवेत्।
तस्यापि चैव संस्थानं चतुरश्रन्तु पूजितम्।। २६
गर्भार्धं करपिण्डी स्यात् गर्भस्य परिवेष्टनम्।
करपिण्डीप्रमाणेन जालपादं द्विपार्श्वयोः।। २७
द्विपादं खण्डहर्म्यादिविस्तारात् परिकीर्तितम्।
तस्य गर्भस्य विस्तारं हीनं वा परिकीर्तितम्।। २८
प्रमाणशाला कर्तव्या एतदुक्तप्रमाणतः।
भित्तिशाला तयोस्तावत् गर्भार्धन्तु प्रकीर्तितम्।। २९
तत्र सोपानविस्तारं तावन्मानं समाचरेत्।
तस्यायामन्तु विज्ञेयं तस्यैव द्विगुणं भवेत्।। ३०
. . . . . . . . . . . चतुरश्रमग्रभूतलमिष्यते।
पूर्वाग्रैश्चैव विज्ञेयमधस्तम्भः प्रकीर्तितः।। ३१
उत्तरास्त्रिविधाः प्रोक्ताः तस्यैव तु समन्ततः।
तस्यैव बन्धसोपानं सर्वतः परिक्रीर्तितम्।। ३२
प्रियदर्शनकर्णञ्च वृद्धिस्तम्भश्च ऊर्ध्वतः।
पवित्रफलकामूलं हस्तिमण्डं तथैव च।। ३३
धरास्तस्य तु कर्तव्यास्सर्वतः सुमनोरमाः।
वेदिका द्विविधा ज्ञेया जालका हस्तिचक्षुषा।। ३४
हर्म्यमेकन्तु कर्तव्यं सोपाने द्वे समाचरेत्।
शिरसोऽपि मुखे नासीविस्तारः परिकीर्तितः।। ३५

गर्भस्य तु चतुर्भागस्तेषु चैको भवेत्ततः।
पृष्ठमेकमपीडञ्च नासी तस्य प्रकीर्तिता।। ३६
हस्तिहस्तन्तु कर्तव्यं नासीष्वेषु समन्ततः।
वेदिका जालकाश्चापि स्वस्थानेषु निवेशयेत्।
एका वा बहुशो वापि धरास्तस्य प्रकीर्तिताः।। ३७

## (३.) श्रियः स्थानविमानलक्षणम्

तृतीयं तु श्रियः स्थानमलङ्कारस्तु वक्ष्यते।
श्रियः स्थानस्य मूलन्तु चतुरश्रायतं भवेत्।। ३८
अष्टानामपि भागानां मध्ये गर्भगृहं भवेत्।
अर्धं गर्भगृहस्यापि करपिण्डी त्रिपार्श्वतः।। ३९
तत्रैव जालपादन्तु त्रिपादं कारयेत्ततः।
ज्ञेयन्तु गर्भसंस्थानं चतुरश्रं सुपूजितम्।। ४०
तस्यैव खण्डहर्म्याणि वेष्टितानि समन्ततः।
खण्डहर्म्यस्य विस्तारमर्धं गर्भगृहस्य तु।। ४१
प्रमाणं हर्म्यसोपानं विस्तारस्तावदेव तु।
तस्यैव शिरसो ज्ञेयं चतुरश्रं सुपूजितम्।। ४२
गर्भस्यापि मुखे नासीविस्तारः परिकीर्तितः।
गर्भस्य चाष्टभागस्तु निर्गमस्तावदेव तु।। ४३
भद्रस्तम्भं प्रवक्ष्यामि तच्छध्वं पृथक् पृथक्।
अष्टाश्रञ्चतुरश्रञ्च ऋजुतालमिहोच्यते।। ४४
चतुष्पादमिति ज्ञेयमधस्तस्य प्रमाणतः।
तत्रैव त्रिविधाः प्रोक्ता उद्धाराः परिकीर्तिताः।। ४५
एवन्तु बालसोपानं तस्य पृष्ठे समाचरेत्।
प्रियदर्शनं स्निग्धवृत्तं हस्तिहस्तञ्च ऊर्ध्वतः।। ४६

धरागृहं तत्कर्तव्यं हस्तिमुण्डं समन्ततः।
तस्यैव वेदिका ज्ञेया पुष्पखण्डमिहोच्यते।। ४७
तस्यैव जालकं ज्ञेयं हस्तिचक्षुस्समन्ततः।
अभितः करपिण्ड्यास्तु नासी द्वे तु समाचरेत्।। ४८
जालकास्तत्र कर्तव्याः स्वस्थानेषु पृथक् पृथक्।
अधस्तादूर्ध्वतस्तस्य नास्य एकोनविंशतिः।। ४९
नासी कपोतशालास्तु वेदिका जालकं तथा।
. . . . . . . . . . . . . . . . . . . . . . . ।।
मृणालिकाश्च कर्तव्या अत ऊर्ध्वं समन्ततः।
भूमिस्तु तत्र कर्तव्या एका वा बहुशोऽपि वा।। ५०

## (४.) दिशाश्र (स्वस्तिक) विमानलक्षणम्

दिशाश्रस्य च संस्थानमलङ्कारश्चवक्ष्यते।
दिशाश्रमूलकरणं चतुरश्रं प्रकीर्तितम्।। ५१
स्वभागेष्वष्टभागेषु मध्ये गर्भगृहं ततः।
तस्य गर्भस्य संस्थानं वृत्तं तु परिकीर्तितम्।। ५२
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।
अर्धस्यार्धन्तु कर्तव्यं जालपादं द्विपार्श्वयोः।। ५३
एतेनैव प्रमाणेन खण्डहर्म्याणि कारयेत्।
अथ पृष्ठे च मूले च जालपादं प्रकीर्तितम्।। ५४
विस्तारस्तस्य विज्ञेयः गर्भार्धन्तु प्रमाणतः।
तत्र द्विपार्श्वजालन्तु तावदेव प्रमाणतः।। ५५
सोपानं हर्म्यसोपानं विस्तारस्तावदेव तु।
अत ऊर्ध्वं ततस्तस्य संस्थानानि पृथक् पृथक्।। ५६

अष्टांश्रं चतुरश्रञ्च ऋजुतालमिति स्थितिः।
प्रियदर्शनं पिण्डपादं स्निग्धं वृत्तञ्च ऊर्ध्वतः।। ५७
उत्तरास्त्रिविधास्तत्र समस्ताः परिकीर्तिताः।
तस्य चैव तु कर्तव्यं वृत्तसोपानमेव च।। ५८
चतुर्विधाश्च कर्तव्या धराग्राश्च समन्ततः।
वेदिका द्विविधा ज्ञेया जालकं त्रिविधं भवेत्।। ५९
शिरस्तस्य तु विज्ञेयं वृत्तन्तु परिकीर्तितम्।
तस्योपरि तु कर्तव्या नास्यश्चात्र चतुर्दश।। ६०
विस्तारस्तस्य कर्तव्यो गर्भार्धन्तु प्रमाणतः।
खण्डहर्म्यान्तरे तत्र सभां कोणेषु सर्वतः।। ६१
अथ वा तत्र कर्तव्या नास्य एकादश स्मृताः।
.......................।।
नास्यः कपोतशालाश्च स्वस्थाने सन्निवेशयेत्।
एका वा बहुशो वापि धरास्तस्य प्रकीर्तिताः।। ६३

## (५.) नन्द्यावर्तविमानलक्षणम्

शृणुद्ध्वं पञ्चमस्यात्र नन्द्यावर्तस्य लक्षणम्।
चतुरश्रं मूलकरणं नन्द्यावर्तस्य वक्ष्यते।। ६४
अष्टानामपि भागानामेको गर्भगृहस्य तु।
तस्य गर्भस्य संस्थानं वृत्तं स्यात्परिकीर्तितम्।। ६५
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।
एतेनैव प्रमाणेन जालपादं भवेत्ततः।। ६६
चतुर्दिशन्तु कर्तव्यं खण्डहर्म्यं ततस्तथा।
विस्ताराद्गर्भविस्तारं भवेत्तस्य समन्ततः।। ६७

प्रमाणहर्म्याश्चत्वारः कर्तव्याः पार्श्वतस्ततः।
तस्य पूर्वञ्च पृष्ठञ्च खण्डहर्म्यं महद्भवेत्।। ६८
विस्तारस्तस्य विज्ञेयो गर्भविस्तार एव च।
विस्तारस्तस्य सोपानमेतस्यार्धप्रमाणतः।। ६९
धरास्सोपानयोग्यास्तु अन्तरन्तु प्रमाणतः।
सोपानार्धन्तु कर्तव्यं समन्तात्परिकीर्तितम्।। ७०
तत्र प्रमाणहर्म्यस्य निर्गमं तावदेव तु।
तत्र शेषाश्च कर्तव्या खण्डहर्म्याश्च सर्वतः।। ७१
तस्य पूर्वञ्च पृष्ठञ्च खण्डहर्म्यं महद्भवेत्।
सोपानं हर्म्यसोपानं द्वे द्वे तस्य समन्ततः।। ७२
अधस्तादूर्ध्वतस्तस्य स्तम्भास्ते च पृथक् पृथक्।
अष्टाश्रं चतुरश्रं वा पूर्वाश्चत्वार एव च।। ७३
उत्तरे तत्र कर्तव्यौ पार्श्वे खण्डोत्तरौ तथा।
तत्र सोपानसंस्थानं हस्तिसोपानमुच्यते।। ७४
प्रियदर्शनं षोडशाश्रं शलाकापिण्डिरूर्ध्वतः।
विचित्रमत्र खण्डञ्च हस्तितुण्डधरस्तथा।। ७५
वेदिका द्विविधा ज्ञेया जालकं त्रिविधं भवेत्।
वृत्तञ्च तस्य कर्तव्यं शिरसश्च समन्ततः।। ७६
तत्र गर्भचतुर्भागं तेषु चैकप्रमाणतः।
चतुर्दिशं तु कर्तव्या नास्यस्तस्योपरि स्मृताः।। ७७
करपिण्डी खण्डहर्म्यस्यान्तरे तु समन्ततः।
गर्भविस्तारतः कुर्यादर्धाकारं चतुर्विधम्।। ७८
तत्र प्रदक्षिणं कुर्यात् तुण्डहर्म्याणि सर्वतः।
कोणेषु तत्र कर्तव्यास्सभा बाह्यान्तरेषु च।। ७९

जालपादास्तु कर्तव्या स्वस्थानेषु समन्ततः।
षट्पञ्चाशद्भवेन्नास्यः सर्वतः परिकीर्तिताः।। ८०

मृणाली मुष्टिबन्धश्च मल्लबन्धस्तथैव च।
. . . . . . . . . . . . . . . . . . . . . . . . ।। ८१

अधस्तादूर्ध्वतस्तस्य स्वे स्थाने सन्निवेशयेत्।
धरास्तस्य तु कर्तव्या एका वा बहुशोऽपि वा।। ८२

## (६.) श्रीवृत्तविमानलक्षणम्

श्रीवृत्तमूलकरणं मण्डलन्तु प्रशस्यते।
अष्टभागेषु मध्ये द्वौ कुर्याद्गर्भगृहं ततः।। ८३

तस्य गर्भगृहस्यापि संस्थानं वृत्तमेव च।
करपिण्डी च कर्तव्या अर्धं गर्भगृहस्य तु।। ८४

हीनन्तु गर्भविस्तारं खण्डहर्म्यं समन्ततः।
चूडाहर्म्यस्य विस्तारो गर्भविस्तार एव च।। ८५

गर्भस्यैवाष्टभागे तु एकभागाधिकं भवेत्।
आयामाच्चूडहर्म्याणि कोणाश्च परिकीर्तिताः।। ८६

सोपानं हर्म्यसोपानं शेषं तस्य समाचरेत्।
अधस्तादूर्ध्वतस्तस्य स्तम्भाश्च परिकीर्तिताः।। ८७

एकान्तं हस्तिहस्तञ्च ऋजुतालमिति स्मृतम्।
उद्धारास्त्रिविधाः प्रोक्ताः तस्यैव तु समन्ततः।। ८८

प्रियदर्शनं पिण्डपादं स्निग्धवृत्तञ्च ऊर्ध्वतः।
सोपानं तत्र विज्ञेयं समखण्डमिति स्मृतम्।। ८९

विचित्रं मत्तखण्डञ्च हस्तितुण्डं कराग्रतः।
जालकं हस्तिचक्षुश्च पुष्पखण्डन्तु वेदिका।। ९०

शिरसश्चापि विज्ञेयं वृत्तं तस्य प्रशस्यते।
कपोतं तस्य कर्तव्यं गर्भस्य परिवेष्टनम्।। ९१
अधः कोणेषु कर्तव्याश्चत्वारो मण्डलाकराः।
. . . . . . . . . . . . . . . . . . . . . . ।। ९२
अर्धाकाराश्चतुर्धाराः कपोतवृत्तैस्तथोत्तरे ?।
अष्टौ खरमुखाश्चात्र समन्तात्परिकीर्तिताः।। ९३

### (७.) पर्वताकृतिविमानलक्षणम्

सप्तमं पर्वताकारः विभागस्तु प्रकीर्त्यते।
पर्वताकृतिमूलन्तु आयामं वृत्तमिष्यते।। ९४
अष्टानामपि भागानां मध्ये गर्भगृहं विदुः।
तस्य गर्भगृहस्यापि संस्थानं वृत्तमेव च।। ९५
करपिण्ड्यास्तु विस्तारो हीनगर्भगृहं भवेत्।
विस्ताराच्चूडहर्म्यन्तु करपिण्ड्याधिकं भवेत्।। ९६
प्रमाणं हर्म्यसोपानं शेषं तत्र समाचरेत्।
अथ स्तम्भस्य संस्थानं शैलमष्टाश्रमेव च।। ९७
ज्ञेयन्तु वृत्तसोपानं तस्यैव परिकीर्तितम्।
धरास्तत्र तु कर्तव्याः त्रिविधाश्च भवन्ति ताः।। ९८
अत ऊर्ध्वं पिण्डिपादं हस्तिहस्तमिति स्मृतम्।
. . . . . . . . . . . . . . . . . . . . . . ।। ९९
चतुर्विधन्तु कर्तव्यं धराग्रं तत्र सर्वतः।
तत्रैव चायतं वृत्तं शिरसः परिकीर्तितम्।। १००
चतुर्दिशन्तु कर्तव्या नास्यस्तत्रोपरि स्थिताः।
सोपानं हर्म्यशिरसस्तथा तत्र प्रकीर्तितम्।। १०१

अष्टधा तत्र कर्तव्याः स्वस्थानेषु समन्ततः।
नासीमृणालिका चैव मुष्टिगण्डं तथैव च।। १०२
वेदिका जालकास्तत्र मल्लबन्धं पृथक् पृथक्।
कपोतं सगलञ्चास्य पथेपारस्ततस्ततः ?।। १०३
अधस्तादूर्ध्वतस्तस्य स्वस्थाने सन्निवेशयेत्।
धरास्तस्य तु कर्तव्या एका वा बहुशोऽपि वा।। १०४

## (८.) महापद्मविमानलक्षणम्

अष्टमं तत्र विज्ञेयं महापद्ममिहोच्यते।
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।। १०५
तत्र वा गर्भसंस्थानं समवृत्तं विशिष्यते।
करपिण्डी च कर्तव्या अर्धं गर्भगृहस्य तु।। १०६
सोपानं चूडहर्म्यञ्च शेषांस्तत्र समाचरेत्।
एकान्तं शैलचतुरश्रमृजुं तलमिहोच्यते ?।। १०७
अथ स्तम्भस्य संस्थानमुत्तरं त्रिविधं भवेत्।
समखण्डञ्च कर्तव्यं सोपानं तत्र कर्मतः।। १०८
स्निग्धेन कोणवृत्तञ्च हस्तिहस्तञ्च ऊर्ध्वतः।
विचित्रमत्तखण्डञ्च धराग्रं परिकीर्तितम्।। १०९
वेदिका तत्र विज्ञेया पुष्पखण्डमिति स्मृता।
जालका हस्तिचक्षुश्च शङ्खमण्डनमेव च।। ११०
तस्यैव शिरसो ज्ञेयमष्टांशं परिकीर्तितम्।
तस्योपरि च कर्तव्या नास्यः षट् परिकीर्तिताः।। १११
करपिण्ड्याश्च परितः नास्यो द्वादश कीर्तिताः।
दक्षिणे पार्श्वतः कुर्यात् अर्धाकारन्तु पूजितम्।। ११२



तस्य नास्यश्चतुर्विंशत्तत्रैव परिकीर्तिताः।
नासी कपोतशाला च वेदिका जालकं तथा।। ११३
स्वेषु स्थानेषु कर्तव्या अधस्तादूर्ध्वतस्ततः।
जालरूपाश्चकर्तव्याः स्वस्थानेषु समन्ततः।। ११४
न कुर्याद्वास्तुबाह्ये च अप्पातञ्चास्य सर्वतः।
. . . . . . . . . . . . . . . . . . . . . . . . . ।। ११५
भूमिरेतस्य कर्तव्या एका वा बहुशोऽपि वा।
देवतानान्तु सर्वेषां पूजितं तद्विशेषतः।। ११६

## (९.) नन्दीविशालविमानलक्षणम्

नन्दीविशालं नवमं तच्छृणुध्वं समाहिताः।
नन्दीविशालमूलन्तु चतुरश्रायतं भवेत्।। ११७
द्वौ भागावष्टभागेषु मध्ये गर्भगृहं ततः।
संस्थानं तत्र कर्तव्यमायतं वृत्तमिष्यते।। ११८
तस्य गर्भस्य विस्तारं जालपादं समन्ततः।
तस्य गर्भस्य विस्तारात् पश्चिमागारमुच्यते।। ११९
एतस्य चाष्टभागेन दक्षिणागारमुच्यते।
तस्यैव चाष्टभागेन मुखबन्धं च इष्यते।। १२०
एतत्तु चाष्टभागेन वेश्म प्राक् परिकीर्तितम्।
समं प्रदक्षिणं कुर्याच्चतुर्थे च समन्ततः।। १२१
बाह्यञ्चाभ्यन्तरञ्चैव सोपानं तस्य सञ्चरेत्।
तस्यैव चोत्तरं वेश्म वृत्तं सम्परिकीर्तितम्।। १२२
अधस्तस्य धराः प्रोक्ताः एकां द्वे वा समाचरेत्।
. . . . . . . . . . . . . . . . . . . . . . . . . ।। १२३

द्विजानां क्षत्रियाणाञ्च विट्छूद्राणाञ्च सर्वशः।
नन्दीविशालं विज्ञेयं पूजितन्तु विशेषतः।। १२४

## (१०.) स्वस्तिकविमानलक्षणम्

दशमं स्वस्तिकं प्रोक्तं तस्य लक्षणमुच्यते।
स्वस्तिके मूलकारणं चतुरश्रायतं भवेत्।। १२५
अष्टानामपि भागानां मध्ये गर्भगृहं विदुः।
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।। १२६
अर्धहर्म्यस्य विस्तारो गर्भस्य द्विगुणो भवेत्।
कूटागारमपि द्वौ तु आयामात्परिकीर्तितौ।। १२७
गर्भस्य द्विगुणौ ज्ञेयौ विस्तारात्तावदेव तु।
तस्यैव भुक्तिलेखास्तु ? एको द्वौ वा त्रयस्तथा।। १२८
पश्चिमागारविस्तारो गर्भादध्यर्धमिष्यते।
भूमिः पादस्य कर्तव्या एका वा बहुशोऽपि वा।। १२९
स्वस्तिकन्तु तथा ज्ञेयं विभागात्परिकीर्तितम्।
एतदुक्तं भवेत्तत्र विशालं शूद्रपूजितम्।। १३०

## (११.) पूर्वरङ्गविशालविमानलक्षणम्

एकादशं प्रवक्ष्यामि पूर्वरङ्गं विशालतः।
पूर्वरङ्गविशालञ्च चतुरश्रं भवेत्ततः।। २३१
अष्टभागेषु मध्ये तु कुर्याद्गर्भगृहं ततः।
तस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।। १३२
शेषाश्च तत्र कर्तव्याः सभाष्टौ द्विस्समन्ततः ?।
अष्टाश्रं तत्र कर्तव्यं शिरसः परिकीर्तितम्।। १३३

अधस्तादूर्ध्वतस्तस्य अष्टसोपानमिष्यते।
तत्र द्विसप्ततिं कुर्यान्नासीः क्षुद्राश्च सर्वशः।। १३४
धरास्सप्त तु कर्तव्या एका वा बहुशोऽपि वा।
द्विजानां क्षत्रियाणाञ्च पूजनीयं विशेषतः।। १३५

## (१२.) एकपादविमानलक्षणम्

द्वादशं तत्र वक्ष्यामि एकपादन्तु सर्वतः।
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।। १३६
तस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।
खण्डहर्म्याश्च आकाराः ? शेषास्तत्र समाचरेत्।। १३७
तस्यैव शिरसो ज्ञेयं मण्डपन्तु प्रशस्यते।
तस्य षोडशनास्यस्तु सर्वत्र परिकीर्तयेत्।। १३८
तस्यैव वेष्टसोपानं हस्तमेकन्तु तस्य वै।
अधस्तात्तस्य विस्तारो द्वादशाङ्गुलमिष्यते।। १३९
अधस्तत्र धराः प्रोक्ता एका वा द्वे समाचरेत्।
............................।। १४०
एकपादमिति प्रोक्तं विभागात्परिकीर्तितम्।
द्विजानां क्षत्रियाणाञ्च पूजनीयं विशेषतः।। १४१

## (१३.) गणिकाशालविमानलक्षणम्

त्रयोदशं तत्शृणुध्वम् गणिकाशाललक्षणम्।
गणिकाशालमूलन्तु चतुरश्रायतं भवेत्।। १४२
अष्टानामपि भागानां मध्ये गर्भगृहं ततः।
तस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।। २४३

अपि वा आयतं तत्र गर्भस्य द्विगुणं भवेत्।
कर्तव्यं तस्य विस्तारं खण्डहर्म्यं समन्ततः।। १४४
सोपानमुखशालाञ्च चूडाहर्म्याणि सर्वशः।
एतानि तत्र कर्तव्यं शेषस्थानेषु सर्वतः।। १४५
तस्य गर्भस्य शिरसः शालास्तत्र प्रकीर्तिताः।
तस्यैव मुखनासी च गर्भञ्च परिकीर्तितम्।। १४६
करपिण्डीमुखनासीनां प्रमाणं परिकीर्तितम्।
गर्भस्य तु चतुर्भागं त्रिभागं तत्र चेष्यते।। १४७
हारञ्च मुखपट्टीञ्च स्वे स्थाने सन्निवेशयेत्।
एका वा बहुशो वापि धरास्तत्र प्रकीर्तिताः।। १४८
एकेनैव विभागेन कर्तव्यं प्रयतेन हि।
एतच्चतुर्णां वर्णानां पूजनीयं विशेषतः।। १४९

## (१४.) कुबेरच्छन्दविमानलक्षणम्

चतुर्दशं भवेत्तत्र कुबेरच्छन्दसंज्ञितम्।
कुबेरच्छन्दमूलन्तु अधस्तादायतं भवेत्।। १५०
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।। १५१
चूलीहर्म्यञ्च हारञ्च शेषं तत्र समाचरेत्।
अभ्यन्तरं वा सोपानमधस्ताद्विनिवेशयेत्।। १५२
ततस्तस्यैव शिरसः शालकाद्याः प्रकीर्तिताः।
कोणाश्च तत्र कर्तव्याः समास्तत्र समन्ततः।। १५३
तस्य नास्यश्चतुर्विंशत् ज्ञातव्यास्तु पृथक् पृथक्।
.......................... ।। २५४

धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
द्विजानां क्षत्रियाणाञ्च पूजनीयं विशेषतः।। १५५

## (१५.) वापीविमानलक्षणम्

पञ्चदशं भवेत्तत्र वापी नाम ततः परम्।
वापीप्रसादमूलन्तु मण्डलं वै समन्ततः।। १५६
त्रयाणामपि भागानां मध्ये गर्भगृहं भवेत्।
तस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।। १५७
सोपानं खण्डहर्म्यञ्च शेषांस्तत्र समाचरेत्।
शिरसस्तत्र कर्तव्यं कर्म वः परिकीर्तितम्।। १५८
तत्रैव मुखपट्टीस्तु अष्टौ कुर्यात्समन्ततः।
अल्पपट्टीस्तु कर्तव्याः कीर्तितास्तत्र षोडश।। १५९
ततस्तस्य तु कार्याणि सोपानानि चतुर्दिशम्।
चतुर्दिशन्तु कर्तव्यञ्चार्धाकारं विशेषतः।। १६०
भूमिरतेस्य कर्तव्या एका वा बहुशोऽपि वा।
द्विजानां क्षत्रियाणाञ्च पूजितं तद्विशेषतः।। १६१

## (१६.) प्रकृतिविमानलक्षणम्

षोडशः प्रकृतिस्तत्र तच्छृणुध्वं समाहिताः।
प्रकृतेर्मूलकरणं चतुरश्रायतं भवेत्।। १६२
द्वौ भागावष्टभागेषु मध्ये गर्भगृहं विदुः।
खण्डहर्म्यस्य विस्तारः गर्भार्धन्तु प्रमाणतः।। १६३
खण्डहर्म्यस्य गर्भस्य अन्तरन्तु समन्ततः।
सोपानं हर्म्यसोपानं तत्र शेषं [illegible]।। [illegible]

शिरसश्च भवेत्तस्य शालाः पञ्च प्रकीर्तिताः।
तस्य मध्ये तु नासी स्याद्गर्भार्धन्तु प्रमाणतः।। १६५
तस्य नास्यश्चतुर्विंशत्कुर्यात्तत्र पृथक् पृथक्।
. . . . . . . . . . . . . . . . . . . . . . . . . . ।। १६६
भूमिरेतस्य कर्तव्या एका वा बहुशोऽपि वा।
क्षत्रियस्य द्विजस्यापि पूजितं तद्विवेषतः।। १६७

## (१७.) तोयविमानलक्षणम्

तोयं विमानं विज्ञेयं सप्तदशमिहोच्यते।
तोयविमानमूलन्तु मण्डलं वै समन्ततः।। १६८
द्वौ भागावष्टभागेषु मध्ये गर्भगृहं विदुः।
अर्धं गर्भगृहस्यापि कुरपिण्डी समन्ततः।। १६९
तस्य बाह्ये तु कर्तव्यं जालपादं समन्ततः।
सोपानं हर्म्यसोपानं तत्र शेषं समाचरेत्।। १७०
शिरसस्तस्य विज्ञेयं मण्डलन्तु प्रशस्यते।
तत्रैव कर्णनास्यौ द्वे पताकासदृशे ततः।। १७१
अन्तरेषु च कर्तव्याः
क्षुद्रनास्यस्समन्ततः।
पार्श्वयोः करपिण्डी च
नास्यौ द्वौ तु समुन्नते।। १७२
अष्टौ तथाऽल्पनास्यस्तु अधस्तादूर्ध्वतस्ततः।
हाराः कपोतशालाश्च नास्यौ तस्योपरि स्थिते।। १७३
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
प्रशस्ताः क्षत्रियाणाञ्च भावबन्धविशेषतः।। १७४

## (१८.) उत्पलपत्रविमानलक्षणम्

ज्ञेयमुत्पलपत्रन्तु अष्टादशमतः परम्।
उत्पलपत्रमूलन्तु चतुरश्रं भवेत्ततः।। १७५

अत ऊर्ध्वन्तु वृत्तं स्यात्सर्वतः परिकीर्तितम्।
अष्टानामपि भागानां मध्ये गर्भगृहं विदुः।। १७६

अस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।
तस्य बाह्ये तु कर्तव्यं जालपातं समन्ततः।। १७७

अर्धहारञ्च हर्म्यञ्च सभागर्भसमं भवेत्।
शैलान्तरेषु कर्तव्या हारास्तत्र समन्ततः।। १७८

सोपानहर्म्ये द्वे स्यातां सोपानं तत्समं भवेत्।
शिरसस्तस्य कर्तव्यं मण्डलन्तु प्रशस्यते।। १७९

कर्तव्या विंशतिर्नास्यः अधस्तादूर्ध्वतस्ततः।
भूमिस्तु तत्र कर्तव्या एका वा बहुशोऽपि वा।। १८०

एवमुत्पलपत्रं तद्विभागाः परिकीर्तिताः।
उत्पलन्तु द्विजातीनां पूजितं तद्विशेषतः।। १८१

## (१९.) सिंहच्छन्दविमानलक्षणम्

एकोनविंशतिकञ्चैव सिंहच्छन्दमिति स्मृतम्।
सिंहच्छन्दस्य मूलन्तु अन्तराश्रं ? भवेत्ततः।। १८२

तस्योपरि च कर्तव्यं चतुरश्रायतं भवेत्।
अष्टभागस्य मध्ये द्वौ कुर्याद्गर्भगृहं ततः।। १८३

अथ गर्भगृहस्यापि करपिण्डी तु पार्श्वतः।
करपिण्ड्यास्तु विस्तारो गर्भविस्तार एव च।। १८४

पश्चिमाज्जलपातन्तु अर्धं गर्भगृहस्य च।
तस्य हर्म्यं भवेद्द्वे वा सोपानञ्च समाचरेत्।। १८५
शिरसस्तस्य विज्ञेयाः सभास्तत्र प्रकीर्तिताः।
निर्गमं तत्र तावत्स्यात्समन्ताच्च विभूषितम्।। १८६
द्वौ कर्णौ तत्र कर्तव्यौ सभास्तत्र विशेषतः।
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।। १८७
उपाङ्गाद्द्वादशज्ञेया .... .... तत्र प्रकीर्तिताः।
एका वा बहुशो वापि धरास्तत्र प्रकीर्तिताः।। १८८
एवमुक्तप्रकारेण कर्तव्यं तद्विशेषतः।
उत्तमन्तु द्विजातीनां पूजनीयं विशेषतः।। १८९

## (२०.) सोमच्छन्दविमानलक्षणम्

सोमच्छन्दस्य मूलन्तु चतुरश्रं भवेत्ततः।
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।। १९०
खण्डहर्म्यस्य सोपानं शेषं तत्र समाचरेत्।
शिरसस्तस्य विज्ञेयं मण्डलन्तु प्रशस्यते।। १९१
तस्य मध्ये तु नासी
स्याद्गर्भार्धन्तु प्रमाणतः।
निर्गमं तत्र तावत्स्यात्
कर्तव्यं सर्वतः समम्।। १९२
तदर्धं कर्णनास्यौ द्वे विस्तारात्परिकीर्तिते।
नास्यौ द्वे पूर्वतस्ते च पूर्वोक्तेन प्रमाणतः।। १९३
भूमिरेतस्य विज्ञेया एका वा बहुशोऽपि वा।
देवतानां द्विजातीनां राज्ञाञ्चैव सुपूजितम्।। १९४

## (२१.) मेनाकारविमानलक्षणम्

एकविंशतिकञ्चैव मेनाकारं पृथक् स्मृतम्।
मेनाकारस्य मूलन्तु चतुरश्रायतं भवेत्।। १६५
विस्ताराद्द्विगुणस्तस्य त्वायामः परिकीर्तितः।
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।। १६६
तस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।
समानं हर्म्यसोपानं शेषं पार्श्वं समाचरेत्।। १६७
मूले द्वे खण्डहर्म्ये तु पिण्ड्यश्चार्धप्रमाणतः।
तेन चैव प्रमाणेन निर्गमं तत्समं चरेत्।। १६८
पिण्ड्या अर्धन्तु कर्तव्या नासी पूर्वोक्तमानतः।
. . . . . . . . . . . . . . . . . . . . . . . . ।। १६६
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
क्षत्रियस्य द्विजस्यापि पूजनीयं विशेषतः।। २००

## (२२.) शालीकरणविमानलक्षणम्

द्वाविंशकन्तु विज्ञेयं शालीकरणमन्दिरम्।
शालीकरणमूलन्तु चतुरश्रं सुपूजितम्।। २०१
द्वौ भागावष्टभागेषु मध्ये गर्भगृहं भवेत्।
गर्भस्यार्धन्तु विज्ञेया करपिण्डी समन्ततः।। २०२
एकदण्डप्रमाणेन पूर्वदण्डप्रमाणतः।
सोपानं जालपादञ्च खण्डहर्म्याणि कारयेत्।। २०३
शिरसस्तस्य विज्ञेयाः सभास्तत्र प्रकीर्तिताः।
. . . . . . . . . . . . . . . . . . . . . . . . ।। २०४

एका वा बहुशो वापि धरास्तत्र प्रकीर्तिताः।
उत्तमं तद्द्विजातीनां पूजितं तद्विशेषतः।। २०५

## (२३.) कर्णिकाकारविमानलक्षणम्

त्रयोविंशतिकञ्चात्र कर्णिकाकारमुच्यते।
कर्णिकाकारमूलन्तु चतुरश्रं भवेत्ततः।। २०६
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।
ज्ञेयानि तत्र चत्वारि सोपानानि समन्ततः।। २०७
एकन्तु बंन्धन कुर्यात्तस्यैव तु मुखे ततः।
.......................... ।। २०८
भूमिरस्य तु विज्ञेया एका वा बहुशोऽपि वा।
द्विजानां क्षत्रियाणाञ्च विशेषात्पूजितं भवेत्।। २०९

## (२४.) श्रियोऽलङ्कारविमानलक्षणम्

चतुर्विंशतिकं तत्र श्रियोऽलङ्कारमुच्यते।
श्रियोऽलङ्कारमूलन्तु चन्द्राकृतिरिति स्मृतम्।। २१०
अष्टभागेषु मध्ये तु एकं गर्भगृहं विदुः।
अर्धं गर्भगृहस्यापि करपिण्डीं समाचरेत्।। २११
तत्रैवं कम्पदेशस्तु गर्भस्य द्विगुणो भवेत्।
सोपानं खण्डहर्म्यञ्च शेषं तत्र समाचरेत्।। २१२
सभास्तस्य तु विज्ञेयाः शिरसः परिकीर्तिताः।
चतस्रो बन्धनाशाला अर्धागारं तथैव च।। २१३
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
द्विजानां क्षत्रियाणाञ्च विशेषात्पूजितं भवेत्।। २१४

## (२५.) कुम्भाकृतिविमानलक्षणम्

पञ्चविंशतिकं विस्तारं तत्समन्तु समाचरेत्।। २१५
अभ्यन्तरन्तु कर्तव्यं सोपानं तस्य सर्वतः।
तत्र सर्वस्य शिरसो वृत्तन्तु परिकीर्तितम्।। २१६
चतुर्दिशन्तु कर्तव्या नास्यस्तस्य स्वलङ्कृताः।
ज्ञेयस्तु नासीविस्तारो गर्भविस्तारभागशः।। २१७
चतुर्भागस्य भागन्तु सर्वतः परिमाणतः।
निर्गमं तावदेव स्यात्समानं वा विधीयते।। २१८
संस्थानं तस्य विज्ञेयं पूर्णकुम्भाकृतिस्ततः।
.......................।। २२६
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
चातुर्वर्ण्यस्य सामान्यमेतत्तु परिकीर्तितम्।। २२०

## (२६.) गोधामुखविमानलक्षणम्

षड्विंशकन्तु विज्ञेयं गोधामुखनिकेतनम्।
गोधामुखस्य मूलन्तु चतुरश्रायतं भवेत्।। २२१
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।
तस्य गर्भगृहस्यार्धं करपिण्डी तु पार्श्वतः।। २२२
सोपानं हर्म्यसोपानं शेषं तत्र समाचरेत्।
तस्य पृष्ठस्य शाला च गर्भस्य द्विगुणं भवेत्।। २२३
आयामार्धन्तु विस्तारः तस्यैव परिकीर्तितः।
गर्भशालान्तरं तत्र अर्धागारं सुपूजितम्।। २२४

शिरसस्तु भवेच्छाला सर्वतः परिकीर्तिता।
तस्य मध्ये तु नासी स्याद्गर्भार्धन्तु प्रमीयते।। २२५
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
एतद्द्विजानां विज्ञेयं सर्वतस्तु सुपूजितम्।। २२६

## (२७.) पिञ्छावतंसकविमानलक्षणम्

पिञ्छावतंसकं गेहं सप्तविंशतिकं भवेत्।
पिञ्छावतंसमूलन्तु चतुरश्रं भवेत्ततः।। २२७
द्वौ भागावष्टभागे तु मध्ये गर्भगृहं विदुः।
तस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।। २२८
तस्य गर्भस्य विस्तारं जालपादं समन्ततः।
खण्डहर्म्यस्य विस्तारं तत्र शेषं समाचरेत्।। २२९
चतुर्भागन्तु कर्तव्यं सोपानं वै विशेषतः।
खण्डहर्म्यान्तरे तत्र सभाः कोणेषु योजयेत्।। २३०
तस्यैव चान्तरे ज्ञेयाः हाराः सर्वत्र शोभनाः।
अष्टौ खरमुखाः पट्टी कुर्यात्तत्र पृथक् पृथक्।। २३१
एका वा बहुशो वापि धरास्तत्र प्रकीर्तिताः।
उत्तरत्र द्विजातीनां पूजितं तद्विशेषतः।। २३२

## (२८.) चतुः स्फुटविमानलक्षणम्

अष्टाविंशतिकं तत्र चतुः स्फुटमिति स्मृतम्।
चतुरश्रं मूलकरणं चतुःस्फुटमिहोच्यते।। २३३
अष्टानामपि भागानां मध्ये गर्भगृहं विदुः।
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।। २३४

करपिण्ड्यास्तु विस्तारः .......... ।
.......................... ।। २३६
.......................... ।
.......................... ।। २३६
.......................... ।
.......................... ।। २३७

## (२६.) हस्त्याकारविमानलक्षणम्

हस्त्याकारविमानन्तु एकोनत्रिंशकं भवेत्।
हस्त्याकारविमानन्तु चतुरश्रं समन्ततः।। २६८
अष्टभागेषु मध्ये द्वौ कुर्याद्गर्भगृहं ततः।
ऊनं तु गर्भविस्तारात्करपिण्डी तु पार्श्वतः।। २३६
सोपानं जालपादञ्च शेषं तत्र समाचरेत्।
विस्ताराद्गर्भविस्तारं शाला च पुरतस्ततः।। २४०
गर्भपृष्ठन्तु विज्ञेयं वृत्तं तस्य समाचरेत्।
शिरसस्तस्य विज्ञेयास्सभास्तत्र समन्ततः।। २३१
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
नेतरत्र द्विजातीनां पूजितन्तु विशेषतः।। २४२

## (३०.) नागच्छन्दविमानलक्षणम्

त्रिंशकन्तु भवेत्तत्र नागच्छन्दमतः परम्।
नागच्छन्दस्य मूलन्तु चतुरश्रं भवेत्ततः।। २४३
तदर्धं गर्भविस्तारं मध्ये कुर्यात्समन्ततः।
गर्भस्य तु चतुर्भागं तेषु चैकेन योजयेत्।। २४४

विस्तारात्करपिण्डी स्याद्विशेषेण विधीयते।
शेषास्तत्र तु कर्तव्या जालपादः प्रमाणतः।। २४५
प्रमाणं हर्म्यशिरसो विज्ञेयञ्चापि तत्त्वतः।
. . . . . . . . . . . . . . . . . . . . . . . . ।। २४६
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
देवतानां द्विजातीनां क्षत्रियाणाञ्च पूजितम्।। २४७

## (३१.) वृषभच्छन्दविमानलक्षणम्

एकत्रिंशकमप्याहुः बृषभच्छन्दमुत्तमम्।
वृषभच्छन्दमूलन्तु चतुरश्रायतं भवेत्।। २४८
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।
अर्धं गर्भगृहस्यापि करपिण्डी समन्ततः।। २४९
गर्भस्य युक्त्या कुर्याद्वै बन्धशाला महागुणाः।
प्रमाणं तस्य विज्ञेयं गर्भमात्रं प्रशस्यते।। २५०
विज्ञेयौ समहर्म्यौ द्वौ सोपानं तस्य पार्श्वयोः।
शिरसस्तस्य विज्ञेयं मण्डनं परिकीर्तितम्।। २५१
धरास्तस्य तु विज्ञेया एका वा बहुशोऽपि वा।
उत्तरत्र द्विजातीनां पूजितं तु विशेषतः।। २५२

## (३२.) कूटाकारविमानलक्षणम्

द्वात्रिंशकन्तु विज्ञेयं कूटाकारमिति स्मृतम्।
कूटाकारस्य मूलन्तु चतुरश्रायतं भवेत्।। २५३
त्रयाणामपि भागानां मध्ये गर्भगृहं विदुः।
अस्य गर्भगृहस्यार्धं करपिण्डी समन्ततः।। २५४

सोपानं खण्डहर्म्यञ्च शेषेषु विहिते स्मृते।
शिरसस्तस्य विज्ञेयाः समाः कूटसमन्विताः।। २५५
भूमिरस्य तु विज्ञेया एका वा बहुशोऽपि वा।
उत्तरत्र द्विजातीनां पूजितं तद्विशेषतः।। २५६

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे द्वात्रिंशद्विमानानांलक्षणं नाम
षष्ठोऽध्यायः।

-------

अथ सप्तमोऽध्यायः

----------

## आवरणलक्षणम्-प्रथमावरणम्

ऋषय ऊचुः-

अतः परं ब्रूह्यस्माकं प्रथमावरणे विधिम्।
आयामं विस्तृतिञ्चैव गोपुराणां विशेषतः।। १
इन्द्रादिदेवानुद्दिश्य आलयस्य च लक्षणम्।
विष्वक्सेनालयस्यापि वैनतेयालयस्य च।। २
सूर्यालयस्य विघ्नेशमन्दिरस्य च लक्षणम्।
स्नपनालयं समुद्दिश्य स्थापनं लक्षणं तथा।। ३
चक्रादिदेवानुद्दिश्य स्थानं यूथाधिपस्य च।
एतेषां लक्षणञ्चैव क्रियामार्गञ्च विस्तरात्।
त्वत्प्रसादादशेषेण श्रोतुमिच्छामहे वयम्।। ४

भृगुरुवाच-

युष्माभिश्चोदितं सर्वं प्रवक्ष्याम्यनुपूर्वशः।
आलयं मण्डपञ्चैव प्राकारं गोपुरं तथा।। ५

यावत्प्रमाणमुत्सेधः तावद्भूमौ तु खानयेत्।
शोधयित्वा तु विधिना समीकृत्य विचक्षणः।। ६
तदर्धं वालुकैः पूर्य जलेन सहितं शनैः।
तदर्धं वापि कुर्वीत यथाविभवमादरात्।। ७
उत्सोधात्तु चतुर्भागं भित्तिमूलघनं विदुः।
उत्सेधाध्यर्धमुद्दिष्टा भूमेर्भित्तिरुदाहृता।। ८
भूमेरूर्ध्वं चतुर्भित्तिरेकहस्तप्रमाणतः।
द्विहस्तं वा त्रिहस्तं वा भित्तिं सम्यक्समाचरेत्।। ९
तस्योपरि विधानेन उपानादि क्रमात् चरेत्।
मानाधिकारे यत्प्रोक्तमलङ्कारञ्च सर्वशः।। १०
तेन मार्गेण कर्तव्यं समाप्तेष्टकया सह।
विपरीतं न कुर्वीत यदि कुर्यान्न सिद्ध्यति।। ११
प्रासादस्य तु विष्कम्भं चतुर्भागं विभज्य च।
एकमाद्यस्य विस्तारः दक्षिणे पश्चिमेऽपि च।। १२
उत्तरे च तथा कुर्यादुपानसममुच्यते।
उपानस्यैव विस्तारं चतुर्भागं विभज्य च।। १३
एकभागं व्यपोह्यैव त्रिभागञ्चोत्तमं भवेत्।
मध्यमन्तु द्विभागं स्यादधमञ्चैकभागकम्।। १४
उत्सेधात्तु चतुर्भागमथवा चाष्टभागकम्।
एवं स्थलं प्रकुर्वीत दक्षिणे पश्चिमेऽपि वा।। १५
उत्तरे चाथवा कुर्यात्पादं पङ्क्तिञ्च कारयेत्।
पादं युक्त्या प्रकुर्वीत भित्तिपादेन संयुतम्।। १६
उत्तमा शैलजा भित्तिर्मध्यमा त्विष्टकामयी।
मृण्मयी त्वधमा प्रोक्ता इति शास्त्रस्य निश्चयः।। १७

उत्तमं शैलजं प्रोक्तं मध्यमं दारुसारजम्।
अधमञ्च मृदा कुर्यात्तृणजन्यैरथापि वा।। १८
पादास्ते चतुरश्रास्स्युः सर्वे वृत्ता अथापि वा।
त्रिहस्तं नाहमुद्दिष्टं द्विहस्तं वापि कारयेत्।। १९
एवं कर्तुमशक्तश्चेदेकहस्तमथापि वा।
एवं नाहं प्रकुर्वीत युक्त्या बोधिकया युतम्।। २०
हस्तद्वयं तथाऽऽयामं बोधिकानां विधीयते।
अध्यर्धं वापि कुर्वीत एकहस्तमथापि वा।। २१
तालद्वयन्तु विस्तारमध्यर्धं वापि कारयेत्।
तालं वापि च कुर्वीत विस्तारस्य समं घनम्।। २२
शेषं युक्त्या प्रकुर्वीत बोधिकानां विशेषतः।
बोधिकानां समं कुर्याद्विस्तारञ्चोत्तरासु च।। २३
तन्मानञ्च समं प्रोक्तं पादहीनमथापि वा।
उत्तरोपरिपार्श्वे तु अनुमार्गञ्च कारयेत्।। २४
विस्तरञ्च घनञ्चैव भागमात्रं प्रचक्षते।
तस्योपरि तुलाधारबोधिकाः परिकल्पयेत्।। २५
तुलां पश्चात्प्रकुर्वीत तालमात्रप्रमाणतः।
यथालाभघनं कुर्याद्यथावित्तानुसारतः।। २६
एवमेव प्रकुर्वीत शेषं युक्त्या समाचरेत्।
एवं दक्षिणतः कुर्यात्पश्चिमे चोत्तरेऽपि च।। २७
अत ऊर्ध्वं प्रवक्ष्यामि देवस्याभिमुखं प्रति ?।
पुरस्ताद्द्विगुणं प्रोक्तं पादं युक्त्या प्रकल्पयेत्।। २८
पूर्वोक्तेन विधानेन बोधिकादि क्रमाच्चरेत्।
पादमर्धं त्रिपादं वा समं वा मुखमण्डपम्।। २९

मुखमण्डपपूर्वे तु सोपानानि च कारयेत्।
आयामं पुरतश्चैव चतुर्भागं विभज्य च।। ३०
एकभागन्तु सोपानमुन्नतं हस्तमुच्यते।
पादांश्च चतुरः कुर्याद्दक्षिणोत्तरयोः क्रमात्।। ३१
पञ्चभिर्वा चतुर्भिर्वा त्रिभिर्वापि पदञ्चरेत्।
सिंहपादेन संयुक्तं सोपानं सम्यगाचरेत्।। ३२

## परिवारदेवताकल्पनम्

मण्डपस्य तु मध्ये तु गरुडं सम्प्रकल्पयेत्।
तस्य पश्चिमपङ्क्तेस्तु उत्तरे शैषिकं चरेत्।। ३३
द्वारस्य दक्षिणे पार्श्वे इन्द्रस्थानं प्रकाल्पयेत्।
आग्नेय्यां स्थानमग्नेश्च यमं याम्ये प्रकल्पयेत्।। ३४
नैर्ऋत्यां निर्ऋतेः स्थानं वारुण्यां वरुणालयम्।
वायुस्थानञ्च वायव्यां सौम्ये सोमं प्रकल्पयेत्।। ३५
ईशानञ्च तथैशान्ये स्थापयेच्च विधानतः।
ईशानमिन्द्रमग्निञ्च स्थापयेत्पश्चिमामुखान्।। ३६
उत्तराभिमुखं कुर्याद्यमं याम्ये समर्चयेत्।
निर्ऋतिं वरुणञ्चैव वायुं वै प्राङ्मुखांश्चरेत्।। ३७
दक्षिणाभिमुखं सौम्ये सोमं संस्थाप्य चार्चयेत्।
दक्षिणाभिमुखं शान्तमासीनं सम्यगाचरेत्।। ३८
इन्द्रादीनाञ्च सर्वेषां विष्वक्सेनेन चैव हि।
आलयं सम्प्रकुर्वीत प्रथमावरणेऽपि वा।। ३९
प्रासादार्धसमुत्सेधः परिवारालयो भवेत्।
प्राकारस्य कपोतस्य मण्डपस्याथवोन्नतिः।। ४०

गोपुरेशानयोर्मध्ये भास्करं सम्यगर्चयेत्।

## परिवारनिर्माणद्रव्यव्यवस्था

शिलया निर्मिते देवे शिलया परिवारकान्।। ४१
मृद्भिः मृदा च कुर्वीत दारुणा दारुभिस्तु वा।
भास्करं गरुडञ्चैव रौद्रीं विकटमेव च।। ४२
स्कन्दञ्च कलिपत्नीञ्च शैलजञ्चेन्न दोषकृत्।

## परिवाराणां अवस्थानियतिः

स्थानकं दैवतं यत्र परिवारांस्तथा चरेत्।। ४३
आसीने च तथाऽऽसीनान् शयाने शयितान् न च।
आसनं नतु कुर्वीत कुर्यात् स्थानकमार्गतः।। ४४
स्थानके चासने वापि शयने वा विशेषतः।
शैषिकस्य तु सर्वत्र आसनञ्च न दोषकृत्।। ४५
सर्वानालयपालांस्तु द्वारपालान् विशेषतः।
तत्तद्रूपान् प्रकुर्वीत चित्रमार्गेण तत्र वै।। ४६
चित्रार्धं वा प्रकुर्वीत चित्राभासमथापि वा।
प्रासादात्पादहीनस्तु गोपुरोच्छ्राय उच्यते।। ४७
गोपुरात्तु बहिः पार्श्वे दक्षिणे विघ्नमर्चयेत्।
वामे तु नागराजञ्च आलयस्थं समर्चयेत्।। ४८
एवमेव प्रकारेण प्रथमावरणे चरेत्।

## द्वितीयावरणकल्पनम्

द्वितीयावरणं कुर्यात्पूर्वोक्तेन विधानतः।। ४९

खननं पूरणञ्चैव भूमेर्भित्त्यादि पूर्ववत्।
प्रथमावरणं यावत्तावन्मानं द्वितीयकम्।। ५०
पुरस्ताद्द्विगुणं प्रोक्तं तन्मध्ये स्नपनालयम्।
पादाधिकं वा कुर्वीत अध्यर्धं वापि कारयेत्।। ५१
द्विगुणं वापि कुर्वीत यथाविभवविस्तरम्।
प्रासादस्यार्धमुद्दिष्टं प्राकारस्योन्नतं बुधैः।। ५२
प्राकारे पट्टिकां कुर्यात्कपोतं वापि कारयेत्।
गोपुरं तु द्वितीये तु प्रासादसममुन्नतम्।। ५३
त्रिपादं वापि कुर्वीत तदर्धं वापि कारयेत्।
मानाधिकारोक्तपथा गोपुरं सम्यगाचरेत्।। ५४
द्वितीयावरणे कुर्यात्कपोतं वापि कारयेत्।
गोपुरं . . . . . . गृहान् सर्वान् विधानतः।। ५५
द्वितीयावरणे कुर्यात्पूर्वोक्तेन विधानतः।
भौममैन्द्रे प्रकुर्वित आग्नेय्यान्तु शनैश्चरम्।। ५६
याम्ये बृहस्पतिं कुर्यान्नैर्ऋत्यान्तु बुधं चरेत्।
वारुण्यां शुक्र उद्दिष्टः जाह्नवी वायुगोचरे।। ५७
सौम्ये सोमं प्रकुर्वीत ऐशान्यां सूर्यमेव च।
यमाग्न्योर्मध्यमे स्थाने श्रीदेवीं सम्यगर्चयेत्।। ५८
यमनैर्ऋतयोर्मध्ये रोहिणीमपि पूजयेत्।
नीलवारुणयोर्मध्ये धात्रीञ्चैव समर्चयेत्।। ५९
वरुणोदानयोर्मध्ये ज्येष्ठां सम्यक्सुपूजयेत्।
धनदोदानयोर्मध्ये ऋषीनपि सुपूजयेत्।। ६०
धनदेशानयोर्मध्ये भूम्यादीन् स्थापयेत्क्रमात्।
महेन्द्रेशानयोर्मध्ये धिषणां सम्यगर्चयेत्।। ६१

किञ्चिद्दक्षिणमाश्रित्य ऐन्द्रद्वारस्य दक्षिणे।
सुब्रह्मण्यं समुद्दिश्य आलयं परिकल्पयेत्।। ६२
यमाग्न्योरन्तरे चैव दुर्गाञ्चैव समर्चयेत्।
त्रिहस्तमालयं कुर्यात्सर्वालङ्कारसंयुतम्।। ६३

## स्नानालयः

स्नानालयं प्रकुर्वित द्वितीयावरणे तथा।
गोपुरस्य प्राग्दिशि तु चतुर्हस्तं व्यपोह्य च।
पञ्चषट्सप्तहस्तान् वा अष्टहस्तानथापि वा।। ६४

## त्रिविधानि मण्डपानि

मण्डपञ्च त्रिधा प्रोक्तं सर्वालङ्कारसंयुतम्।
उत्तमं मध्यमञ्चैव कनिष्ठं त्रिविधं भवेत्।। ६५
श्रीवत्सं स्वस्तिकञ्चैव पद्मकञ्च प्रकीर्तितम्।
श्रीवत्समुत्तमं प्रोक्तं मध्यमं स्वस्तिकं भवेत्।
अधमं पद्मकञ्चैव शान्तिकादिक्रमाच्चरेत्।। ६६

## श्रीवत्समण्डपलक्षणम्

श्रीवत्सस्य क्रमं पूर्वं वक्ष्यामि शृणुतर्षयः।
षट्त्रिशद्धस्तमुद्दिष्टं चतुरश्रं समन्ततः।। ६७
पादानान्तु शतं प्रोक्तमुत्तमं स्नपनालये।
पादान्तरं चतुर्हस्तं स्तम्भमानेन संयुतम्।। ६८
मध्ये कूटञ्च कृत्वा तु षोडशस्तम्भसंयुतम्।
हस्तद्वयं तलोत्सेधमेकहस्तमथापि वा।। ६९

तन्मध्ये श्वभ्रमुद्दिष्टं तोयमार्गसमायुतम्।
पादायामं घनञ्चैव पादाधारसमायुतम्।। ७०
बोधिका चोत्तरा चैव अनुमार्गसमायुता।
इष्टकाधारकञ्चैव अन्यद्वा दारुसंस्क्रियाम्।। ७१
आचार्यः शिल्पिभिः सार्धं युक्तियुक्तञ्च कारयेत्।
यथासौन्दर्यकं कुर्यान्मतिमान् शिल्पिसम्मतम्।। ७२
बाह्यपादं विवर्ज्यैव मध्यपादञ्च सर्वशः।
पादानाञ्च चतुष्षष्टिमुन्नतानां समारभेत्।। ७३
पादानाञ्च चतुर्भागं हीनं बाह्ये च पादयोः।
बाह्यपादञ्च षट्त्रिंशद्भित्तिमाश्रित्य कारयेत्।। ७४
भितिं विना कारयेद्वा युक्त्या परमया युतः।
एवमेव प्रकारेण शेषं सर्वं समाचरेत्।। ७५
कूटं विनापि वा कुर्यान्मण्डपं वा समाचरेत्।
पादानाञ्चैव सर्वेषामुन्नतं सममेव च।। ७६
मण्डपं वा प्रपां वापि कारयित्वा विचक्षणः।
देवस्याभिमुखे कुर्यात् श्रीवत्सं मण्डपोत्तमम्।
ऐशान्ये वा प्रकुर्वीत पूर्वोक्तेनैव वर्त्मना।। ७७

**स्वस्तिकमण्डपलक्षणम्**

अत ऊर्ध्वं प्रवक्ष्यामि लक्षणं स्वस्तिकस्य तु।
पूर्वोक्तेन विधानेन कर्षणादीनि कारयेत्।। ७८
उपानादिक्रमं सर्वं पूर्ववच्च समाचरेत्।
हस्तमेकाधिकञ्चैव चतुरश्रं तथैव च।। ७९
पादानाञ्च चतुष्षष्टिं स्वस्तिके च निवेशयेत्।
पादान्तरं त्रिहस्तन्तु पादभागेन संयुतम्।। ८०

स्नानालयन्तु प्राग्द्वारं आदिगोपुरमानतः।
पादाधिकं वा कुर्वीत पादयोरन्तरं तथा।। ८१
पादयोरन्तरं कुर्यादुत्तरद्वारमुन्नतम्।
तदर्धं वा प्रकुर्वीत शालालङ्कारसंयुतम्।। ८२
ऐन्द्रे द्वारं विवर्ज्यैव भित्तिं सर्वत्र कारयेत्।
भित्तिबाह्ये तु पादांश्च यथायुक्ति समाचरेत्।। ८३
दक्षिणे च तथा कृत्वा मध्ये भित्तिं न कारयेत्।
अथवा कारयेद्विद्वान् त्रिपङ्क्त्या सममेव च।। ८४
भित्तिं विवर्ज्य यत्नेन स्तम्भञ्चैव यथार्हतः।
पश्चिमे च तथा कुर्यादुत्तरे भित्तिमाचरेत्।। ८५
भित्तिहीने तु कुर्वीत पादं सम्यग्यथार्हतः।
पादोपरि च कुर्वीत उत्तराश्च सलक्षणाः।। ८६
मध्ये पादेषु सर्वत्र बोधिकास्सम्यगर्पयेत्।
बोधिकादीनि सर्वाणि पूर्वोक्तेनैव वर्त्मना।। ८७
कारयित्वा यथान्यायं सर्वालङ्कारसंयुतम्।
मध्ये कूटसमायुक्तं षोडशस्तम्भसंयुतम्।। ८८
यथायुक्तिं प्रकुर्वीत शिल्पिभिश्शास्त्रवित्तमैः।
कूटं विना वापि कुर्यान्मण्डपक्रमतः कमात्।
मानाधिकारे यत्प्रोक्तमलङ्कारन्तु कारयेत्।। ८९

## पद्मकमण्डपलक्षणम्

अत ऊर्ध्वं प्रवक्ष्यामि पद्मकस्य च लक्षणम्।
पञ्चाधिकशतं हस्तं चतुरश्रं समन्ततः।। ९०
पादाः षट्त्रिंशदुद्दिष्टाः प्रत्येकन्तु विशेषतः।
पादान्तरं त्रिहस्तन्तु पादभागेन संयुतम्।। ९१

चतुर्द्वारसमायुक्तं द्वारमानेन संयुतम्।
अथवा दक्षिणे चैव उत्तरे च विशेषतः।। ९२

शालाद्वारं प्रकुर्वीत शालालङ्कारसंयुतम्।
प्राग्द्वारं कारयेत्तद्वत्पश्चिमद्वारमेव च।। ९३

द्वारमानेन वै कुर्याद्द्वारालङ्कारसंयुतम्।
तन्मध्ये तु चतुःस्तम्भस्थलं कृत्वाऽतिसुन्दरम्।। ९४

हस्तोत्सेधं तथा कुर्यान्मध्ये श्वभ्रञ्च कारयेत्।
श्वभ्रादुत्तरतो गच्छेज्जलं संस्रावमार्गतः।। ९५

द्वारं भित्तेस्तु कुर्वीत जलस्थानन्तु कारयेत्।
एवं पद्मकमुद्दिष्टं सर्वालङ्कारसंयुतम्।। ९६

## मण्डपे वैलक्षणकल्पनम्

भित्तौ स्तम्भे तले चैव बोधिकासूत्तरासु च।
क्वचित्क्वचित्प्रदेशे तु कुर्याच्छ्रीवत्सलाञ्छनम्।। ९७

स्वस्तिके पूर्णकुम्भञ्च पद्मके पद्मकं तथा।
आलयस्य तलस्यैव मण्डपस्य तलस्य च।। ९८

कुर्याद्गोलकमानेन त्रियङ्गुलमथापि वा।
भागप्रमाणं वा कुर्याद्यथाविभवविस्तरम्।। ९९

एवमेव विधानेन प्रथमावरणे भवेत्।
द्वितीयावरणे कुर्यात्स्नपनालयमण्डपम्।। १००

## प्रथमावरणे द्रव्यसञ्चयस्थानानि

अत ऊर्ध्वं प्रवक्ष्यामि द्रव्यसञ्चयमण्डपम्।
रत्नजातञ्च यत्सर्वं मकुटादिपरिच्छदम्।। १०१

सौवर्णञ्चापि यत्सर्वं राजतं बहुमूल्यकम्।
स्थापयेद्गर्भगेहे तु मण्डपे वा सुरक्षिते।। १०२
अर्चनार्हाणि सर्वाणि लोहजानि तु सर्वतः।
शङ्खशुक्त्यादिवस्तूनि मण्डपे तु तथा न्यसेत्।। १०३
यमपावकयोर्मध्ये प्रथमावरणे ततः।
शय्यास्थानं प्रकुर्वीत सर्वालङ्कारसंयुतम्।। १०४
यमस्य पश्चिमे भागे पानीयस्थानमुच्यते।
आलयस्य तु याम्ये च मूर्तिहोमं समाचरेत्।। १०५
तोयेशनीलयोर्मध्ये प्रतिमां लौकिकीं न्यसेत्।
तोयेशवायुमध्ये तु पुष्पसञ्चयमन्दिरम्।। १०६
उदानसोमयोर्मध्ये अङ्कुरार्पणशालिका।
आलयस्योत्तरे पार्श्वे श्वभ्रं स्नानाय कारयेत्।। १०७
सोमस्य पश्चिमे भागे वितानादिपरिच्छदम्।
मध्ये च सोमामितयोर्न्यसेदन्यान् परिच्छदान्।। १०८
प्रक्षालनञ्च कृत्वा तु स्थापयेत्तान् यथार्हकम्।
ईशानसोमयोर्मध्ये वस्त्रादीनि विनिक्षिपेत्।। १०९
शचीशेशानयोर्मध्ये भास्करस्योत्तरेऽपि च।
दुन्दुभीनपि सन्न्यस्येत् शङ्खादीन् वाद्यसाधनान्।। ११०
एवमाद्यावृतौ कुर्यात् द्रव्यन्यासार्थमालयान्।

## द्वितीयावरणे द्रव्यसञ्चयस्थानानि

अत ऊर्ध्वं प्रवक्ष्यामि द्वितीयावरणे विधिम्।। १११
नित्यं नृत्तं प्रकुर्वीत सन्निधौ स्नपनालये।
स्नपनोक्तं दिनं हित्वा सर्वकालेषु यत्नतः।। ११२

स्नपनालये तु पङ्क्तीशपश्चिमे चक्रमर्चयेत्।
चक्रस्य पूर्वभागे तु ध्वजदेवं समर्चयेत्।। ११३
ध्वजस्य पूर्वभागे तु शङ्खञ्चैव समर्चयेत्।
स्नानालयस्य च प्राच्यां भूतपीठं प्रकल्पयेत्।। ११४
इन्द्राग्न्योर्मध्यमे स्थाने पचनालय उच्यते।
कूपं कुर्यात्तथैशान्ये किञ्चित्सौम्यसमाश्रिते।। ११५
द्वितीयावृतिमाश्रित्य पारिषद्यालयं चरेत्।

## तृतीयावणे पारिषद्यस्थानम्

द्वितीयावृतिविष्कम्भात् तृतीयं पादतोऽधिकम्।। ११६
अध्यर्धं द्विगुणं वापि कारयेदधिकं बुधः।
पादाधिकसमुत्सेधः प्राकारः सर्वथोच्यते।। ११७
गोपुराद्गोपुरं कुर्यादध्यर्धं द्विगुणाधिकम्।
पादाधिकं वा कुर्वीत सर्वालङ्कारसंयुतम्।। ११८
कर्म नैमित्तिकं कुर्यादाग्नेय्यान्तु विशेषतः।
विप्राणां भोजनस्थानं आग्नेय्यां पश्चिमे भवेत्।। ११९
ऐशान्यां वा प्रकुर्वीत भोजनस्थानमुत्तमम्।
यमाग्न्योरन्तरे कुर्याद्गोष्ठागारं प्रयत्नतः।। १२०
तस्य पश्चिमभागे तु धान्यागारं प्रकल्पयेत्।
याम्यादि सौम्यपर्यन्तमारामं परितश्चरेत्।। १२१
सौम्यादीशानपर्यन्तं तटाकं परिकल्पयेत्।

## द्वारनियमः

प्रथमावरणे द्वारं यथोक्तं परिकल्पयेत्।। १२२

द्वितीये च तृतीये च व्यत्यये नास्ति दूषणम्।
प्राच्यां दक्षिणतो वापि पश्चिमे चोत्तरेपि वा।। १२३
पर्वते शैलशृङ्गे वा नद्याश्चैव समीपतः।
स्थानं पौराणिकं यत्र तत्समीपे च वर्जयेत्।। १२४
स्थाने यथोक्ते चालब्धे व्यत्ययेऽपि न दोषकृत्।
स्थानं यत्रासङ्कुचितं तत्रैव परिकल्पयेत्।। १२५
कर्तुर्यत्र हितं स्थानं रोचते तद्विशिष्यते।
पौराणिके चार्षके वा क्षेत्रे पर्वतमूर्धनि।। १२६
नदीतीरेऽपि वा कुर्यात् सुस्थानं यत्र लभ्यते।
अयुक्तञ्चाप्यविधिकमप्रमाणञ्च यद्भवेत्।। १२७
न दोषाय भवेत्तद्वै साधु चापि भविष्यति।
यथा स्याज्जनसञ्चारः तथा द्वारं प्रकल्पयेत्।। १२८
यत्रैव स्थानविस्तारः तत्र स्यात् स्नपनालयः।
सर्वालङ्कारसंयुक्तं मण्डपञ्चात्र कारयेत्।
वापीकूपतटाकांश्च आरामाद्यांश्च कारयेत्।। १२९

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां खिलाधिकारे मण्डपादीनां लक्षणकथनं नाम सप्तमोऽध्यायः।।

---------

अथ अष्टमोऽध्यायः

---------

## शिलासङ्ग्रहणविधिः

अत ऊर्ध्वं प्रवक्ष्यामि शिलासङ्ग्रहणे विधिम्।
अयने चोत्तरे कुर्याद्दक्षिणे वा त्वरान्वितः।। १

मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।। २
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
यजमानोऽथ तत्काले गुरुमाहूय पूजयेत्।। ३
यजमानो गुरुश्चैव निमित्तानि च लक्षयेत्।
श्वः कर्ताऽस्मीति सङ्कल्प्य यजमानयुतो गुरुः।। ४
शुद्धं बहुज्ञं शास्त्रज्ञमरोगं मुक्तसंशयम्।
बलवन्तमुपायज्ञमानयेच्छिल्पिनं तदा।। ५
सम्पूज्य वस्त्राभरणैः तेन कर्माणि कारयेत्।
आहृत्य सर्वान् सम्भारान् व्रजेच्छिल्पिजनैः सह।। ६
प्राङ्मुखोदङ्मुखो वापि मार्गेण सह साधनैः।
गमने च तथा धीमान् निमित्तान्युपलक्षयेत्।। ७

## निमित्तदर्शनम्

'गच्छाहर भरेक्षस्व गृहाणे' मेद्यशोभनाः।
'जीवस्व रम मोदस्व जय शाधि प्रभो कुरु'।। ८
इत्याद्यर्थयुता वाचो यास्ताः सर्वाः शुभप्रदाः।
राजानं वृषभं कन्यां गजं रथतुरङ्गमौ।। ९
पूर्णकुम्भं सुरां वेश्यां भामिनीं शोभनं विदुः।
वायसो वामगः श्रेष्ठः कुर्वन् वै सुस्वरं भृशम्।। १०
कार्यसिद्धिकरं विद्धि दक्षिणे विघ्नकारणम्।
गौली दक्षिणतः श्रेष्ठा पश्चाद्वामे श्रुता यदि।। ११
प्रातः पैङ्गलिकं श्रेयः वामस्रोतो भवेद्यदि।
एवमादीनि चान्यानि निमित्तानि च लक्षयेत्।। १२

## शिलासंग्रहणप्रकारः

हेमकूटश्च निषधो हिमवान् नीलपर्वतः।
मन्दरो माल्यवांश्चैव त्रिकूटो मलयाचलः।। १३
गन्धमादनमेरू च दशैते पर्वताः स्मृताः।
एतेषु प्रतिमाः शस्ताः निर्मिताः परिकीर्तिताः।। १४
सह्यविन्ध्यमहेन्द्राश्च कैलासश्च तथैव च।
किष्किन्धश्च तथा पञ्च प्रशस्ता गिरयः स्मृताः।। १५
शेषाः शैला इति प्रोक्ताः प्रतिमास्तेषु कारयेत्।
विशेषेण तु कर्तव्याः प्रतिमा भूगताश्मना।। १६
गिरिजा भूमिजाश्चैव वारिजाश्च तथा शिलाः।
भूमिजानान्तु सर्वासामधस्तान्मुखमुच्यते।। १७
पर्वतोपरि जातानां मुखमूर्ध्वमुदाहृतम्।
तत्पार्श्वे तु प्रजातानां तन्मुखं मुखमुच्यते।। १८
पादेषु तस्य जातानां पर्वतप्रेक्षणं मुखम्।
समुद्रान्तर्निविष्टानां मुखमूर्ध्वमुदाहृतम्।। १९
पाषाणानां नदीजानां जलागमनतो मुखम्।
यतोऽस्ति गौरवं तस्य ततश्शिर उदाहृतम्।। २०
साकृतीनां शिलानान्तु तदाकृतिशिरः ? शिरः।
पूर्वग्रीवा तु जयदा शान्तिदा दक्षिणानना।। २१
श्रीकरा पश्चिमग्रीवा शुभदा चोत्तरानना।
कोणन्तु वर्जयेत्तत्र शिलासङ्ग्रहणे सदा।। २२
उत्तमा भूमिजा प्रोक्ता मध्यमा गिरिजा भवेत्।
अधमा वारिजा प्रोक्ता इति शास्त्रस्य निश्चयः।। २३

## शिलासु लिङ्गभेदः

स्त्रीपुंनपुंसकत्वेन त्रिविधा तु शिला भवेत्।
विशालां वर्णबहुलां स्त्रियं विद्याच्च तां शिलाम्।। २४
एकवर्णां गुरुं स्निग्धां विवरैः ग्रन्थिभिर्विना।
व्यक्तशब्दां घनाञ्चैव तां विद्यात्पुंशिलामिति।
शरावोदकसंरावां ? कर्कशां क्लीबजातिकाम्।। २५

## वर्ज्यशिलाः

नदीतीरे ह्रदतटे लवणोदाप्लुते स्थले।। २६
ग्राममध्ये श्मशाने च शिला याश्च चतुष्पथे।
अमेध्यभूमौ जाताश्च वर्जनीयाः स्मृताः सदा।। २७
प्रायशो विषवृक्षाश्च यत्र व्याघ्राहिसूकराः।
सन्ति यस्मिन् वने तत्र न ग्राह्यास्तु शिलाः स्मृताः।। २८
वल्मीकसङ्कटे देशे वर्जनीयास्तथोषरे।
पतङ्गकृमिकीटानामावासस्थाश्च गर्हिताः।। २९
वायुसूर्याग्निभिर्दग्धा किरातगणदूषिताः।
एताः शिला वर्जनीयाः ग्राह्याश्च शृणुत द्विजाः।। ३०

## शिलाभेदविस्तरः-ग्राह्यशिलाश्च

सुपुष्टजलसङ्कीर्णजलाशयसमावृता।
वारुणी सा शिला ज्ञेया प्रतिमा वारुणी तथा।। ३१
निर्मिता शान्तिदा चापि भवेत् शुभविधायिनी।
उत्तरे तोयसंवीता पश्चिमे क्षीरवृक्षयुक्।। ३२

व्रीहिपाकवृतावाच्या सतृणा पूर्वभागतः।
तादृशी तु शिला ग्रह्या प्रतिमाकरणे शुभा।। ३३
माहेन्द्री प्रतिमा सा तु पुष्टिदा राज्यभोगदा।
पलाशाः खदिरा आम्रा यस्या आग्नेयदिक्स्थिताः।। ३४
तित्तिर्यश्च कपोताश्च गृध्राश्चैव घनाघनाः।
भ्रमराश्च मयूराश्च दृश्यन्ते यत्र सन्ततम्।। ३५
तोयमन्तर्गतं स्तोकं तामाग्नेयीं विनिर्दिशेत्।
आग्नेयी प्रतिमा प्रोक्ता आयुरारोग्यपुष्टिदा।। ३६
पीलुश्लेष्मातकाकीर्णा विभीतकवृता च भूः।
महावृक्षाश्च परितः पक्षिणो मृगतृष्णकाः।। ३७
भारुण्डाश्चैव दृश्यन्ते पांसुकूलकमाश्रिताः।
सृगाला यत्र दृश्यन्ते तथैव मृगपक्षिणः।। ३८
अन्यैश्च बहुभिर्वृक्षैः जीमूतादिभिरावृता।
भूमिस्सा वायवी प्रोक्ता हेया तत्र शिला मता।। ३९
गृह्यते यदि सा तत्र कर्तुः स्यादाभिचारिकम्।
भयदा द्वेषदा चैव तस्मात्तां परिवर्जयेत्।। ४०
ब्राह्मणादिजातिभेदेन वर्णभेदः, शैलप्रतिमासु
ब्राह्मणस्य भवेच्छुक्ला रक्ता भूः क्षत्रियस्य च।
वैश्यस्य पीता भूमिस्तु कृष्णा शूद्रस्य कीर्त्यते।। ४१
तद्भूमिजा च तद्वर्णा वर्णानां प्रतिमा स्मृता।
कुन्देन्दुक्षीरसदृशी शङ्खमुक्तानिभा तथा।। ४२
मुक्ताभा स्फटिकाभा च श्वेतपद्मदलप्रभा।
कुमुदाभा च या तत्र मृणालीसदृशप्रभा।। ४३

ब्राह्मणस्य समाख्याता प्रतिमा वर्णतः शुभा।
वारुणी प्रतिमा नाम सर्वकामशुभप्रदा।। ४४
एतेषु वर्णेषूक्तेषु शुक्लो विप्रस्य चोत्तमः।
मध्यमौ मध्यमः प्रोक्तः कृष्णस्त्वधम उच्यते।। ४५
फलञ्च तद्वदेव स्यादुत्तमे मध्यमेऽधमे।
येन वर्णेन देवेशः कृतो यत्र भवेत्ततः।। ४६
जनस्तद्वर्णयुक्तस्तु वर्धते नात्र संशयः।
वैदूर्यपद्मरागाभा पद्मोत्पलदलप्रभा।। ४७
चची ? कुन्दुरुसङ्काशा सिन्दूरसदृशी तथा।
दाडिमीपुष्पसदृशी कुसुम्भसदृशप्रभा।। ४८
एषा रक्ता च रक्ताभा क्षत्रिया वर्णतः स्मृता।
माहेन्द्री नाम विज्ञेया नृपाणां प्रतिमोत्तमा।। ४९
पुष्परागप्रभा चैव तथा मरकतप्रभा।
हरिद्रापीतवर्णाभा रोचनाभा तथैव च।। ५०
एषा पीता च पीताभा वैश्यानां वर्णतः स्मृता।
आग्नेयी सा समुद्दिष्टा वैश्यानाञ्च सुखप्रदा।। ५१
कृष्णा माषाञ्जननिभा नीलश्यामा तथैव च।
कृष्णा ? रूक्षप्रभा चैव वारुणीं तां विदुर्बुधाः।। ५२
कृष्णाभा कृष्णवर्णा च विज्ञेया शूद्रसौख्यदा।
लक्षणेन सुसम्पूर्णा भिन्नाञ्जनचयोपमा।। ५३

## प्रतिमाकरणे शिलादोषाः

रक्तैश्च बिन्दुभिः कीर्णा विष्फुलिङ्गावृता तथा।
बिन्दुभिर्व्यतिकीर्णा च शुक्लपीतप्रभा तथा ।। ५४

एवंभूता तु प्रतिमा सर्वलोकाशुभप्रदा।
(विष्फुलिङ्गैश्च रक्तैश्च क्षत्रियाणां जयावहा)
. . . . . . . . . . . . . . . . . . . . . . . . . . . ।। ५५
. . . . . . . . . . . . . . . . . . . . . . . . . . . ।
स्फोटाश्च बिन्दवो निम्नाः सर्वे दोषा विगर्हिताः।। ५६

## शिलादोषस्वरूपम्

सिरायान्तु स्वयं नश्येत् विवरे पुत्रनाशनम्।
स्वजनो वर्तुले नश्येत् स्थापको ग्रन्थिभिस्तथा।। ५७
स्फोटा हन्यात्तु कर्तारं निम्नो हन्यान्नराधिपम्।
तस्मात्सर्वप्रयत्नेन दोषानेतान् विवर्जयेत्।। ५८
अशक्यं कर्म शास्त्रोक्तं कर्तुं तदमरैरपि।
का वा तत्रा मनुष्याणां करणे शक्तिराप्यते।। ५९

## युगभेदेन शिलासु वर्णभेदः

हेमकूटाद्यलाभे तु भूमिजां वा समाहरेत्।
कृतत्रेताद्वापरेषु कलौ चैव यथाक्रमम्।। ६०
शुक्लादयस्समुद्दिष्टा वर्णा वर्णक्रमेण वै।
शैलजप्रतिमानाञ्च मृद्बिम्बानां तथाऽत्र तु।। ६१
युगवर्णो हि भगवान् भवेद्विष्णुस्सनातनः।
शिलानामुक्तवर्णानामलाभे चाञ्जनप्रभा।। ६२
शिला प्रशस्यते नित्यं सर्वकामफलप्रदा।

## वर्णसंस्कारे शिलावर्णप्रामुख्यम्

यो वर्णो यच्छिलायास्तु बाह्ये तद्वर्णमर्पयेत्।। ६३

विपरीतं न कुर्वीत यदि कुर्यान्न सिद्ध्यति।
एवं बिम्बं विधानेन कृत्वा सम्यक् सुलक्षणम्।। ६४
स्थापयित्वा विधानेन नित्यं सम्यक् समर्चयेत्।
अनुलोमं प्रकुर्वीत प्रतिलोमं न कारयेत्।। ६५

## शिलासङ्ग्रहणम्

शिलासङ्ग्रहदेशे तु तत्रैवोत्तरपार्श्वतः।
सम्भृत्य चैव सम्भारान् पूर्वेद्युः होममाचरेत्।। ६६
कुण्डं श्रामणकं कृत्वा आघारं विधिवद्यजेत्।
हुत्वा मेदिन्यादिमन्त्रैः पर्यग्निं तत्र कारयेत्।। ६७
पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।
'ये ते शता' दिभिर्मन्त्रैः हुत्वाऽग्निञ्च विसर्जयेत्।। ६८
तस्य दक्षिणपार्श्वे तु कुर्यादौपासनं क्रमात्।
आघारं विधिवत्कृत्वा अदितेन्वादिभिः क्रमात्।। ६९
परिस्तीर्य विधानज्ञो वैष्णवं जुहुयात्क्रमात्।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।। ७०
जयादींश्चैव हुत्वा तु ऐन्द्रञ्च विधिपूर्वकम्।
यावान् वै प्रतिमायामः प्रक्षालनमथाचरेत्।। ७१
विष्णुमभ्यर्च्य तत्रैव सप्तविंशतिविग्रहैः।
दिग्देवानर्चयित्वा तु अर्घ्यान्तञ्च यथाक्रमम्।। ७२
वसन्तादिबलिं दत्वा क्रूरभूतबलिं ददेत्।
वस्त्रैराच्छाद्य परितो देवेशं सम्प्रणम्य च।। ७३
सन्न्यसेत्तु परश्वादीन् वस्त्रस्योपरि च क्रमात्।
तस्य पश्चिमभागे तु दर्भैरास्तरणं चरेत्।। ७४

आसीनो यजमानस्तु तस्योपरि विधानतः।
देवेशं मनसा ध्यात्वा इमं मन्त्रमुदीरयेत्।। ७५
'ओं नमस्सकलेशाय सर्वभूतात्मने नमः।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः'।। ७६
शताष्टवारं जप्त्वैवं 'प्रसन्नाय तवान्तिकम्'।
स्वप्ने सर्वाणि कार्याणि हृदिस्थानीह शंस मे ।। ७७
इति सम्प्रार्थ्य देवेशमेकाग्रमनसा शुचिः।
मन्त्रं शताष्टवारञ्च जप्त्वा शयनमाविशेत्।। ७८

## शयने स्वप्ननिमित्तदर्शनफलम्

ज्वलन्तञ्च श्रिया युक्तं यदा पश्यति पर्वतम्।
प्रवृद्धशिखरं तत्र काञ्चनद्रुमसंयुतम्।। ७९
फुल्लपुष्पसमायुक्तपल्लवद्रुमशोभितम्।
तदा स्वप्नं सुखं विन्द्यात् क्रिया भवति पुष्टिदा।। ८०
विपरीतो यदि स्वप्नः महाशान्तिः सुहूयताम्।
एवं कृत्वा तु तद्रात्रौ रात्रिशेषं व्यपोहयेत्।। ८१

## प्रभातकृत्यम्

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन स्वस्तिसूक्तं समुच्चरन्।। ८२
प्रदिक्षणं ततः कृत्वा यज्ञालयमुपाव्रजेत्।
आसनं ब्रह्ममास्थाय अग्निमानम्य चादरात्।। ८३
कूर्चेन तोयमादाय परिषिच्य च पावकम्।
साग्रं पालाशसमिधं घृताक्तं परिगृह्य च।। ८४

वैष्णवं मन्त्रमुच्चार्य जुहुयादग्निमध्यमे।
विष्णुसूक्तञ्च हुत्वा तु जयादींश्च ततः परम्।। ८५
यद्देवादींस्ततो हुत्वा ब्राह्मं रौद्रं तथैव च।
व्याहृत्यन्तञ्च हुत्वा तु अग्निं सम्यक् प्रणम्य च।। ८६
अन्तहोमं ततो हुत्वा पश्चादग्निं विसर्जयेत्।
पश्चाद्देवान्विसृज्यैव आदित्यं सम्प्रणम्य च।। ८७
हुलिकादि च सङ्गृह्य प्राङ्मुखः प्रयतात्मवान्।
सुवर्णेनैव कृत्वा तु घनयुक्तमनिन्दितम्।। ८८
विष्णुसूक्तेन देवस्य दिक्षु प्रागादि ताडयेत्।
अन्येषामपि देवानां तत्तन्मन्त्रेण ताडयेत्।। ८९
पश्चाच्छिल्पिनमाहूय पूजयित्वा विषेशतः।
शिल्पिना छेदयेत्तान्तु ऊहापोहविधानतः।। ९०
छेदने भेदने वाथ मण्डलान्यशुभानि चेत्।
दृश्यन्ते तां शिलां विद्यात्सगर्भां दोषदूषिताम्।। ९१

## शिलाच्छेदे दोषलक्षणज्ञानम्

कृष्णन्तु मण्डलं यत्र कृष्णाहिस्तत्र लक्ष्यते।
कपिले मण्डले प्रोक्ता मूषिका कपिलाकृतिः।। ९२
अरुणे मण्डले तत्र कृकलासस्तु गर्भगः।
गुडवर्णे तु पाषाणगर्भं भवति तद्वपुः।। ९३
कपोतकर्बुरं यत्र दृश्यन्ते मण्डलानि तु।
गृहगौली भवेत्तत्र गर्भस्था मुनिसत्तमाः।। ९४
आपः कृपाणसदृशे मण्डलेऽन्तर्गताः स्मृताः।
पद्मवर्णे भवन्त्येव वालुका गर्भभाविताः।। ९५

विचित्रे मण्डले तत्र वृश्चिकस्समुदाहृतः।
नीलपीतनिभे चैव मण्डले शलभाः स्मृताः।। ९६
मण्डले मधुवर्णे तु खद्योतमभिनिर्दिशेत्।
एकं वा बहु वा यत्र दृश्यन्ते मण्डलानि वै।। ९७
यावन्ति मण्डलान्यत्र गर्भास्तत्र भवन्ति वै।
गर्भदोषे महान् दोषो भवत्येव न संशयः।। ९८
तस्माच्छान्तिं प्रकुर्वीत गर्भोक्तां गर्भदर्शने।

## गर्भदोषफलम्

गर्भदर्शनदोषन्तु शृणुध्वमृषिपुङ्गवाः।। ९९
प्लवगों रोगदः प्रोक्तो गोधा दारिद्यकारणम्।
सर्पो दृश्येत यदि तु भार्या नश्यति निश्चयः।। १००
दर्शने मूषिकायास्तु भविष्यत्यनपत्यता।
अल्पायुः कृकलासे तु दृष्टे भवति गर्भगे।। १०१
पाषाणगर्भो दृश्येत भवेदेव कुलक्षयः।
तस्माद्यत्नात्परीक्षेत शिला वृक्षांस्तथैव च।। १०२
मोहात्सगर्भशिलया क्रियते प्रतिमा यदि।
तन्मण्डलाधिपस्यैव राज्ञः स्यादाभिचारिकम्।। १०३
उन्मूलितो भवेद्वंशः तस्माद्गर्भं विशोधयेत्।
येन केन प्रकारेण ऊहापोहौ प्रयोजयेत्।। १०४

## शिलाऽऽनयनम्

आहरेत प्रयत्नेन तत्तन्मानसमायुताम्।
अङ्कयेच्चापि सर्वत्र अङ्गोपाङ्गविनिर्णयम्।। १०५

एवं सङ्कल्प्य तं बिम्बमारोप्य शकटे ततः।
सर्ववाद्यसमायुक्तं देवालयमुपाव्रजेत्।। १०६
आलयात्पुरतो वापि उत्तरे वा मनोरमे।
शिलां तत्र तु विन्यस्य प्रतिमां कारयेत्ततः।। १०७

## बिम्बनिर्माणप्रकारः

नवयौवनसम्पन्नं शिल्पशास्त्रविचक्षणम्।
आहूय पूजयित्वा तु वस्त्राभरणकुण्डलैः।। २०८
कारयेल्लक्षणोपेतां प्रतिमां शिल्पिना बुधः।
वर्णयुक्ता यदि भवेदङ्गेषूपाङ्गेषु सर्वतः।। १०९
यवहीनपरीणाहां कुर्याच्छिल्पी विचक्षणः।
आयामं प्रतिमानान्तु पादाधिकमथापि वा।। ११०
कुर्वीताद्यार्धाधिकं वा द्वारमानं त्रिधा भवेत्।
गर्भगेहस्य विस्तारो यावान् बिम्बस्तथा भवेत्।। १११
पादहीनस्तथाऽर्धं वा गर्भगेहस्य मानतः।
अथवा कारयेद्विद्वान् द्वारमानं विचक्षणः।। ११२
यजमानसमं वाऽपि
मूलबिम्बसमन्तु वा।
देवानां पुंशिला प्रोक्ता
देवीनां स्त्रीशिला स्मृता।। ११३
नपुंसकशिला ग्राह्या प्रतिमाकरणे न वै।
शिलाजं ध्रुवबेरं स्यादलाभे दारुपार्थिवे।। ११४
मानोन्मानप्रमाणैस्तु युक्तमुत्तममुच्यते।
पादाधिकाश्रयोपेतं मध्यमन्तु शिलामयम्।। ११५

सर्वाङ्गाश्रयसंयुक्तमेकाश्रयमिहाधमम्।

## पीठप्रमाणम्

पद्मपीठन्तु सहजमासने स्थानकेऽपि वा।। ११६
बेरायामस्य षड्भागादेकभागेन कारयेत्।
ध्रुवबेरस्य पादस्य प्रतिदिक्चतुरङ्गुलम्।। ११७
विस्तार ऊर्ध्ववेद्याः स्यात् पद्मपत्रयुजस्ततः।
एवं स्थानकमुद्दिष्टमासने तु प्रवक्ष्यते।। ११८
द्वारं कृत्वा तु षड्भागं त्रिभागं पीठमुच्यते।
अर्धयुक्तं त्रिभागं वा मध्यमं कारयेद्बुधः।। ११९
द्विभागमधमं पीठमेवमुच्छ्राय उच्यते।
बेरायामस्य चोच्छ्रायं बेरपीठस्य कल्पयेत्।। १२०
दैविकञ्च त्रिधा कृत्वा पूर्वभागं व्यपोह्य च।

## स्थानकादीनां स्थानभेदः

पश्चिमे स्थानकं कुर्यान्मध्यमे वा विधानतः।। १२१
किञ्चिन्मानुषमाश्रित्य दैविके चासनं चरेत्।
पश्चिमे ब्रह्मगागे तु पद्मपीठं प्रकल्पयेत्।। १२२
प्रसारितस्य पादस्य शास्त्रोक्तविधिना बुधैः।
शिलामयं विमानञ्चेदासनञ्च शिलामयम्।। १२३
कुर्यादेवं विधानेन पश्चात् स्थानकमाचरेत्।

## दारुपरीक्षा

अत ऊर्ध्वं प्रवक्ष्यामि विशेषांस्तरुषु क्रमात्।। १२४

आसनं खदिरञ्चैव चम्पकञ्चार्जुनं तथा।
ध्वजं बर्बरञ्चैव मङ्कणञ्च नमेरुकम्।। १२५
अच्चञ्च? लाङ्गलञ्चैव बहुपुष्पं तमालकम्।
गण्डीयं कुकरञ्चैव मधूकं वकुलं तथा।। १२६
पाटलं पनसञ्चैव तिन्त्रिणीसारमेव वा।
अश्वत्थं चूत ..... धातकीं वाऽऽहरेद्बुधः।। १२७
प्रतिमार्थं तरुं कञ्चित् कञ्चिन् स्थूणार्थमेव च।
कवाटार्थञ्च कूटार्थमन्यार्थञ्चाहरेत्क्रमात्।। १२८
एतेषां सारमाहृत्य युक्त्या सर्वं समाचरेत्।
शिष्टं त्वाष्टप्रयोगेण कारयेत्तु विचक्षणः।। १२९

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे शिलासङ्ग्रहणविधिर्नाम
अष्टमोऽध्यायः।।

----------

अथ नवमोऽध्यायः

----------

## समाप्तेष्टकाविधिः-मुहूर्तविचारः

अत ऊर्ध्वं प्रवक्ष्यामि समाप्तेत्विष्टकाविधिम्।
अयने चोत्तरे कुर्याद्दक्षिणे वा त्वारान्वितः।। १
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।। २

त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ।
श्रवणे चैव रेवत्यामाप्ये वा वसुदैवते।। ३
यजमानानुकूलेषु दिनेष्वेतेषु शस्यते।
युग्माश्च तिथयस्सर्वाः प्रशस्ता विष्टिवर्जिताः।। ४
गुरुशुक्रबुधेन्दूनां वाराश्शस्ता भवन्ति हि।
चरराशिं विवर्ज्यैव स्थिरराशिञ्च सङ्गहेत्।। ५
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे।। ६
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।
अङ्कुरार्पणकादूर्ध्वं द्रव्यसङ्ग्रहणं चरेत्।। ७

## स्थूप्यर्थं दारुसङ्ग्रहणम्, कलशविधिः

दारु खादिरमाहृत्य ऋजुसारं समाहितः।
विष्कम्भार्धमथायामं त्रिपादं सममेव वा।। ८
ज्ञात्वा विमानस्य मानं
स्थूपिमर्हां तु कारयेत्।
आयामात्तु चतुर्भागं
नाहं मूले प्रकीर्तितम्।। ९
तन्मानात्तु चतुर्भागं नाहमग्रे प्रकीर्तितम्।
मूलादग्रं क्रमान्न्यूनं निम्नं सुषिरवर्जितम्।। १०
यथामनोरमं स्थूपिं कारयेच्छिल्पिना दृढाम्।
एवं स्थूपिं समाहृत्य अगाधे प्रक्षिपेज्जले।। ११
सौवर्णं राजतं ताम्रमायसं वा यथार्हतः।
लौहं वापि यथाशक्ति गृह्णीयात्कलशं शुभम्।। १२

क्षत्रियो यजमानश्चेत्सौवर्णं वाथ राजतम्।
अन्ये वर्णाः यथाशक्ति ताम्रजं वा समाहरेत्।। १३

## स्थूपिप्रमाणम्

विमानार्हन्तु कलशं सर्वयत्नेन चाहरेत्।
आयामञ्च परीणाहं युक्तियुक्तं च कारयेत्।। १४
उक्तानामप्यलाभे तु सुधया कलशं चरेत्।
सुधया सह संयुक्तमायसं वापि योजयेत्।। १५
पाशाग्रे पिण्डसंयुक्तं शर्कराभिर्मृदाऽथ वा।
शोषयित्वा तु तत्पिण्डं सम्यक्पाशं समाहरेत्।। १६
विमानाग्रे तुलां कृत्वा मध्ये सुषिरसंयुताम्।
संयोज्य सुषिरे दण्डं ब्रह्मस्थानगतं यथा।। १७
तथा सम्यग्विदित्वा तु तत्स्थाने स्थूपिमर्पयेत्।
एवं स्थानं विनिर्दिश्य पश्चात्कार्यं समारभेत्।। १८

## इष्टकालक्षणादि-शिलेष्टकासंस्कारः

शिला वा इष्टका वापि नव वा पञ्च वाऽऽहरेत्।
शोधयित्वा विशेषेण कुर्यादप्यधिवासनम्।। १९
आद्येष्टकायां यः प्रोक्तस्तेनैव विधिना चरेत्।
यागशालां तथा कृत्वा अग्निकुण्डांश्च कारयेत्।। २०
आघारं विधिवत्कृत्वा पूर्वोक्तं होममाचरेत्।
धान्यराशिं समास्तीर्य दर्भानुपरि संस्तरेत्।। २१
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
शिलेष्टकास्सुसङ्गृह्य शिरसोद्धृत्य यत्नतः।। २२

ग्रामे वा नगरे वापि पत्तने खर्वटेऽपि वा।
प्रदक्षिणं ततः कृत्वा यागशालां प्रवेशयेत्।। २३
अधिवासं ततः कृत्वा बद्ध्वा प्रतिसरं तथा।
प्रत्येकञ्चैव वस्त्रैश्च वेष्टयेद्यत्नतो गुरुः।। २४
पूर्वोक्तेनैव विधिना रात्रौ होमं समाचरेत्।
पूर्वोक्तेन विधानेन होमं कृत्वा विचक्षणः।। २५
पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन पश्चात्कार्यं समाचरेत्।। २६

## शिलेष्टकास्थापनम्, स्थूपिप्रतिष्ठा

मुहूर्ते समनुप्राप्ते सर्ववाद्यैश्च घोषयेत्।
शिलेष्टकाः सम्प्रगृह्य विमाने रोपयेत्तदा।। २७
प्राङ्मुखोदङ्मुखो वापि पाणिभ्यां सम्प्रगृह्य च।
शिलेष्टकाः हृदि विभुं देवेशं मनसा स्मरन्।। २८
चतुर्वेदादिमन्त्रैस्तु दिक्ष्वैन्द्रादिषु सन्न्यसेत्।
विष्णुसूक्तं जपित्वा तु मध्ये स्थूपिं न्यसेत्ततः।। २९
काले शिल्पिनमाहूय पूजयित्वा विशेषतः।
सुधेष्टकादिभिः सम्यक् दृढीकरणमाचरेत्।। ३०

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे समाप्तेष्टकाविधिर्नाम
नवमोऽध्यायः।

अथ दशमोऽध्यायः

---------

## दारुसङ्ग्रहणम्-मुहूर्तविचारः

अतः परं प्रवक्ष्यामि शूलसंस्थापने विधिम्।
अयने चोत्तरे श्रेष्ठं दक्षिणे चापदि स्मृतम्।। १
मासानां फाल्गुनः श्रेष्ठः माधवः शुचिशुक्लभाक्।
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।। २
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।
गुरुमाहूय तत्काले नमस्कुर्याच्च देववत्।। ३

## शूलस्थापनकार्यारम्भः

यजमानो गुरुश्चैव श्वः कार्यं प्राप्य निश्चितम्।
आहूय तक्षकञ्चात्र शिल्पशास्त्रविचक्षणम्।
उपायज्ञं युवानञ्च सम्भारान् परिगृह्य च।। ४
कुठारं परशुञ्चान्यान् सह वैवधिकेन च।
यजमानो गुरुश्चैव निमित्तानि च लक्षयेत्।। ५
शुभे निमित्ते गच्छेच्च निवर्तेताशुभे सति।
आचार्यो यजमानेन सह बालालयं विशेत्।। ६
तत्र स्थितञ्च देवेशं प्रणम्यैवानुमान्य च।
देवदेवं समभ्यर्च्य पायसादीन् निवेदयेत्।। ७
दक्षिणाञ्च ततो दत्वा देवदेवं प्रणम्य च।
चक्रामितादिसंयुक्तं सर्वद्रव्यसमायुतम्।। ८

यानेष्वारोप्य देवेशं चक्रवीशामितांस्तथा।
वाहनानामलाभे तु ब्राह्मणैरेव वाहयेत्।। ९

अलाभे शैषिकादीनां तैर्विनैव व्रजेद्गुरुः।
देवस्याभिमुखे स्थित्वा यजमानयुतो गुरुः।। १०

प्रणम्य देवदेवेशं 'जितन्त' इति चोच्चरन्।
जपंश्च शाकुनं सूक्तं ब्रह्मघोषसमन्वितम्।। ११

स्तोत्रध्वनिसमायुक्तं सर्ववाद्यसमन्वितम्।
प्रदक्षिणं ततः कुर्याद्देवेशं मनसा स्मरन्।
पूर्वं पूर्वमुखो गत्वा उत्तरं वा यथार्हकम्।। १२

## उक्ततरवः

गिरिस्थं वा वनस्थं वा तरुं कञ्चित् समाहरेत्।
तरूणामपि सर्वेषां खदिरः सम्प्रशस्यते।। १३

असनस्तदलाभे तु चम्पकस्साल एव वा।
अच्चो ? वाऽर्जुनको वापि शिरीषो बर्बरोऽथ वा।। १४

शाखोपशाखासंयुक्तो रमणीयः सुशोभनः।
वृक्षमूले तु परितः तुलसीकुशसंयुतः।। १५

विष्णुक्रान्तेन वा वीतः स्थलपद्मयुतः शुभः ।
श्वेतभूमिस्थितो वृक्षः वैष्णवः समुदाहृतः ।। १७

## अग्राह्यतरवः

छिन्नाग्रं भेदसंयुक्तमन्तः सुषिरसंयुतम्।
बहुपक्षिसुखावासं बहुव्यालमृगाकुलम्।। १८

कुमिकीटपतङ्गाद्यैः वल्लीभिः वेष्टितं तथा।
सीमान्तस्थं श्मशानस्थं देवस्यायतने स्थितम्।। १९
ईदृग्गुणसमायुक्तं वृक्षन्तु परिवर्जयेत्।
शास्त्रोक्तं वृक्षमाज्ञाय गृह्णीयाद्विधिपूर्वकम्।। २०

## तरुसंस्कारः

पूर्वस्मिन्नेव दिवसे रात्रौ होमं समाचरेत्।
तस्य वृक्षस्य परितो मण्डलान्युपलिप्य च।। २१
पञ्चवर्णैरलङ्कृत्य धान्यानि च समास्तरेत्।
वृक्षस्य पश्चिमे स्थाप्याः चक्रवीशामिताः क्रमात्।। २२
वृक्षस्य चोत्तरे भागे कुण्डमौपासनं चरेत्।
वृक्षस्य दक्षिणे भागे सर्वद्रव्याणि सन्न्यसेत्।। २३
स्नात्वा स्नानविधानेन गुरुराघारमाचरेत्।
वैष्णवं विष्णुसूक्तंञ्च हुत्वा मन्त्रविदत्वरः।। २४
वृक्षस्य पूर्वभागे तु ऐशान्यां रुद्रमर्चयेत्।
ईशानेन्द्रान्तरे भूतान् ऐन्द्रे चेन्द्रं समर्चयेत्।। २५
याम्ये यमं समभ्यर्च्य मातृरभ्यर्च्य वारुणे।
सोमं सौम्ये समभ्यर्च्य वीरं सोमस्य पूर्वतः।। २६
तत्स्थाने पूर्वतोऽभ्यर्चेत् अर्घ्यान्तञ्च यथाक्रमम्।
वृक्षे वृक्षेन्द्रमभ्यर्चेत्पुष्पगन्धानुलेपनैः।। २७
चक्रामितौ समभ्यर्चेत्सप्तविंशतिविग्रहैः।
अन्नं प्रभूतमाहृत्य पुष्पाक्षतसमन्वितम्।। २८
लाजापूपसमायुक्तं तिलशाकसमन्वितम्।
बलिमाहृत्य तत्काले कूर्चयुक्तेन वारिणा।। २९

रुद्रादीनां बलिं क्षिप्ता तत्तद्दिक्षु यथाक्रमम्।
वनस्पतिभ्यः पूर्वे तु कुमारीभ्यस्तु दक्षिणे।। ३०
पश्चिमे वृक्षराजेभ्यः सर्वकामेभ्य उत्तरे।
बलिमेवञ्च दत्वा तु पश्चादग्निं प्रणम्य च।। ३१
परिषेकं जलैः कृत्वा समिद्भिर्जुहुयात्ततः।

## दारुसङ्ग्रहणहोमः

अग्नये वनराजाय सोमाय च यमाय च।। ३२
शङ्खाय स्थूललक्षाय व्याधाय मृगरूपिणे।
वनस्पतिभ्यो यक्षेभ्यो वल्लीभ्यः कुसुमाय च।। ३३
शलाटवे बृहत्वचे पुण्यायामिततेजसे।
सूर्याय सूर्यरूपाय शृङ्गिणे भूतरूपिणे।। ३४
नागहस्ताय दिव्याय त्रिहस्तायेति वै हुनेत्।
विघ्नाय विघ्नरूपाय पिनाकाय प्रसारिणे।। ३५
मुरुण्डाय च न्यर्णाय नागेभ्यश्च ततः परम्।
भूतराजेभ्यश्चारणेभ्यः दिवाचरेभ्य इत्यपि।। ३६
नक्तञ्चरेभ्यः सन्ध्याभ्यः सन्ध्याचरेभ्य इत्यपि।
अप्सरोभ्यश्च यक्षीभ्यः कुमरीभ्यश्च हूयताम्।। ३७
आसुरीभ्यो राक्षसीभ्यः पिशाचीभ्यो वनाय च।
वृक्षाय वनचारिभ्यो वृक्षदेवेभ्य इत्यपि।। ३८
स्थानदेवेभ्य इत्युक्त्वा विद्याधरेभ्य इत्यपि।
रूपिभ्यो मिथुनेभ्यश्च सुखेभ्यश्चापि हूयताम्।। ३९
व्याहृत्यन्तञ्च हुत्वा तु अग्निमानम्य चादरात्।
वृक्षे कृत्वा तु पर्यग्निं 'निर्दग्ध' मिति मन्त्रतः।। ४०

पुण्याहं वाच्य बध्नीयात्ततः प्रतिसरं क्रमात्।
यूथाधिपस्य चक्रस्य 'रक्षस्वे' ति समुच्चरन्।। ४१

## वृक्षाहरणम्

ततः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः।
वृक्षस्य दक्षिणे पार्श्वे स्थित्वा परशुमाहरेत्।। ४२
पूर्वतस्ताडयेद्विद्वान् ऐन्द्रं मन्त्रं समुच्चरन्।
'यमो दाधार' इत्युक्त्वा दक्षिणे चापि ताडयेत्।। ४३
'ये ते शत' मिति प्रोच्य वारुणे ताडयेत्ततः।
'सोमं राजान' मित्युक्त्वा उत्तरे चापि ताडयेत्ततः।। ४४
'अतो देवादि' जप्त्वा तु अन्तरे ताडयेत्ततः।
शिल्पिनञ्च समाहूय पूजयित्वा स्वशक्तितः।। ४५
परश्वादीनि सङ्गृह्य च्छेदयेत्तु शनैः शनैः।
तरोः पश्चिमदिक्पातस्त्वत्यन्तं शुभजो भवेत्।। ४६
ततस्त्वगादीन् व्यपोह्य सारं भागं समाहरेत्।
अग्रं पादं पृष्ठं लक्षयित्वा यथोचितम्।। ४७
यथार्हं सारसंयुक्तभागान् सम्यक् समाहरेत्।
तत्र दक्षिणभागार्हं योजयेद्दक्षिणे तथा। ४८
वामं वामे योजयेच्च वंशदण्डन्तु मध्यमे।
एवमाहृत्य यत्नेन करीषेनानुलेपयेत्।। ४९
निवेशयित्वा वैवधके सर्वमाहृत्य यत्नतः।
अन्तहोमं ततो हुत्वा पश्चाद्देवान् विसृज्य च।
देवागारं समानीय तानि गुप्ते विनिक्षिपेत्।। ५०

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे दारुसङ्ग्रहणविधिर्नाम दशमोऽध्यायः।।

## अथ एकादशोऽध्यायः

-----

## शूलस्थापनविधिः-मुहूर्तविचारः

अतः परं प्रवक्ष्यामि शूलस्थापनमुत्तमम्।
अयने चोत्तरे श्रेष्ठं दक्षिणे चापदि स्मृतम्।। १
मासानां फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव वा।
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।। २
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।
त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ।। ३
रेवत्यां श्रवणे चैव वारुणे वायुदैवते।
युग्माश्च तिथयस्सर्वाः प्रशस्ता विष्टिवर्जिताः।। ४
चरराशिं विवर्ज्यैव स्थिरराशौ समाहरेत्।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।। ५

## शूलस्थापनप्रयोगः

तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।। ६
अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत्।
आलयात्पुरतो वाऽपि दक्षिणे वा प्रपां चरेत्।। ७
यागशालां तत्र कुर्याद्द्वादशस्तम्भसंयुताम्।
आर्द्रपर्णैरलङ्कृत्य दर्भमालासमन्विताम्।
यथाशक्ति त्वलङ्कारं कारयेत्तु विचक्षणः।। ८

तस्यालयस्योत्तरतः प्रपां कुर्याद्विलक्षणाम्।

चतुर्दिशं चतुर्हस्तं चतुस्स्तम्भसमन्वितम्।

कूटं प्रपां वा कुर्वीत आर्द्रपर्णैस्समायुताम्।। ९

पञ्चवर्णैरलङ्कुर्याद्भूमिं पैष्टया च सर्वतः।
कुण्डं श्रामणकं कुर्यात्तन्मध्ये विधिपूर्वकम्।। १०

आघारं विधिवत्कृत्वा मेदिन्याद्यैर्हुनेत्क्रमात्।
पर्यग्निञ्चैव कृत्वा तु गर्भगेहादिषु क्रमात्।। ११

शूलस्य च तथा कृत्वा पश्चादग्निं विसृज्य च।
पञ्चगव्यैस्समभ्युक्ष्य पुण्याहमपि वाचयेत्।। १२

पश्चादग्निं समासाद्य परिषिच्य च पावकम्।
'ये ते शतादि' मन्त्रान्तं हुत्वा तत्र यथाक्रमम्।। १३

अन्तहोमञ्च कृत्वा तु ऋत्विजश्चापि पूजयेत्।
मध्ये तु यागशालायां शयनं सम्प्रकल्पयेत्।। १४

शय्यायाः पूर्वभागे तु सभ्यं कृत्वाऽग्निमादरात्।
सभ्याग्नेः पूर्वतः कुर्यात्कुण्डमाहवनीयकम्।। १५

दक्षिणेऽन्वाहार्यकुण्डं गार्हपत्यञ्च वारुणे।
उत्तरे चावसत्थ्याग्निं शास्त्रोक्तविधिना चरेत्।। १६

कुण्डान्येवं प्रकल्प्यैव आघारं विधिवच्चरेत्।
आघारान्ते च जुहुयात् वैष्णवं तत्र तत्र तु।। १७

तरुणालयगं देवमर्चयित्वा विधानतः।
तस्मिन् काले तु विधिवत्कुम्भपूजनमाचरेत्।। १८

तञ्च देवस्याभिमुखे धान्यपीठे च विन्यसेत्।
देवमावाहयेत्तस्मिन् विष्णुसूक्तं समुच्चरन्।। १९

देवं श्वभ्रे ततो न्यस्येत् कुम्भं तद्दक्षिणे न्यसेत्।

(देवं कुम्भं समादाय विमानाभिमुखे ततः)

कुम्भस्य दक्षिणे भागे धान्यराशिं प्रकल्प्य च।। २०
पश्चाच्छूलं समादाय धान्यपीठे न्यसेद्धरेः।
श्रीभूमी तु समुद्दिश्य शूले उक्ते स्थले न्यसेत्।। २१
मार्कण्डेयं समुद्दिश्य न्यसेच्छूलं तदा पृथक्।
अन्येषामपि चोद्दिष्टदेवानामेवमाचरेत्।। २२
तैलेनाभ्यज्य शूलानि शास्त्रोक्तविधिना बुधः।
दर्भानुपरि संस्तीर्य तथा पुष्पैरथाक्षतैः।। २३
कलशैस्स्नापयेद्देवमन्यान् द्वादशभिः क्रमात्।
कुम्भं शूलानि च प्रोक्ष्य प्रतिद्रव्यं विशेषतः।। २४
अग्न्यालयाद्दक्षिणतः शयनं सम्प्रकल्पयेत्।
शूलान्युद्दिश्य यत्नेन धान्यराशिं प्रकल्प्य च।। २५
देवेशशूलमादाय शयने सम्प्रवेशयेत्।
शयने शायितं शूलं पाद्याद्यर्घ्यान्तिमर्चयेत्।। २६
ताम्बूलञ्च निवेद्यैव पुण्याहं वाचयेत्ततः।
बद्ध्वा ततः प्रतिसरं शयने शाययेद्धरिम्।। २७
शाययित्वा तथा शूलमुत्तराच्छादनं चरेत्।
पश्चाद्धोतारमाहूय पूजियित्वा विधानतः।। २८
हौत्रं प्रशंस्य विधिना देवानावाहयेत्क्रमात्।
चतुर्मूर्तिविधानेन सर्वत्रावाहनं चरेत्।। २९
आवाहनक्रमेणैव चतुर्थ्यन्तक्रमेण च।
जुष्टाकारं ततः कुर्यात्क्रमेणाहुतीर्यजेत्।। ३०

हुत्वा तु सर्वदैवत्यं पारमात्मिकसंयुतम्।
जुहुयात्पौरुषं सूक्तं प्राच्यामाहवनीयके।। ३१
अन्वाहार्ये च जुहुयाद्विष्णुसूक्तमतः परम्।
गार्हपत्ये च जुहुयात् ब्राह्मं वैष्णवमेव च।। ३२
आवसत्थ्ये च जुहुयाद्रुद्रसूक्तं विशेषतः।
देवेशं मनसा ध्यात्वा प्रत्येकञ्चैकविंशतिम्।। ३३
व्याहृत्यन्तञ्च हुत्वा तु रात्रिशेषं व्यपोहयेत्।

## गर्भालयपदविन्यासः

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।। ३४
स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।
गर्भालयं सम्प्रविश्य पदानि परिकल्पयेत्।। ३५

## गर्भालये पदकल्पनम्

सप्तभिर्दशभिः सूत्रैः कृतैः प्रागुत्तरैः क्रमात्।
षट्पञ्चाशद्युतशतद्वयभक्तपदेषु वै।। ३६
मध्ये पदानि दश षट् ब्रह्मस्थानं प्रचक्षते।
ब्रह्मस्थानस्य परितो दैविको भाग उच्यते।। ३७
भागाधिकाशीतिभागा बहिरावरणत्रिके।
तद्बाह्ये मानुषं स्थानं नवतिः षट् पदानि तु।। ३८
स्यातां द्व्येकावृती चैव नारपैशाचनामनी।
षष्टिः पदानां पैशाचे भित्तिमाश्रित्य सूत्रिताः।। ३८
दैविकञ्च त्रिधा कृत्वा द्विभागं प्राग्व्यपोह्य च।
पश्चिमे स्थानकं कुर्यादथ भागद्वयेऽपि वा।। ४०

देविकेनैव संयुक्ते मानुषे चासनं भवेत्।
देवमानुषभागाभ्यामन्तरे शयनं चरेत्।। ४१

## रत्नन्यासः

रत्नन्यासविधावत्र स्थाननिर्णय उच्यते।
रत्नन्यासं तले कुर्यात् गर्भगेहे विचक्षणः।। ४२
द्वादशाङ्गुलविस्तीर्णां भागोन्नतियुतां तथा।
चतुरश्रां वर्तुलां वा समां कृत्वा शिलां बुधः।। ४३
ध्रुवस्थाने न्यसेत्तत्र गर्भगेहतले समम्।
एवं शिलातले कृत्वा पञ्चविंशत्पदानि वै।। ४४
मध्ये तु ब्रह्मभागः स्यात्तद्बाह्ये मङ्गलाष्टकम्।
तद्बाह्ये तु दिगीशानां साध्यादीनां पदं ततः।। ४५
एवं पदानि सङ्कल्प्य रत्नन्यासं समाचरेत्।
गर्भालयं तु संशोध्य प्रोक्षणैः प्रोक्षणञ्चरेत्।। ४६
रत्नानि धातून् बीजानि मङ्गलानि विशेषतः।
आहृत्य प्रोक्ष्य सौवर्णे राजते कांस्य एव वा।। ४७
पात्रे सम्भृत्य यत्नेन धान्यराशिं प्रपूर्य च।
तद्राश्युपरि संस्तीर्य तण्डुलास्तण्डुलोपरि।। ४८
पद्ममष्टदलं कृत्वा पात्रं तस्योपरि न्यसेत्।
उत्तराभिमुखो भूत्वा आचार्यः सुसमाहितः।। ४९
ब्राह्ममासनमास्थाय पीठे वाऽपि पदं चरेत्।
रत्नादीन् सर्वसम्भारान् 'तमेके' त्यभिमन्त्रयेत्।। ५०
पूर्वोक्तेनैव मन्त्रेण ब्रह्मस्थाने गजं क्षिपेत्।
'शतधारं' मनुं जप्त्वा तत्रैव गरुडं क्षिपेत्।। ५१

ब्रह्मस्थाने ब्रह्ममणिं 'ब्रह्मा देवादि' मुच्चरन्।
'इन्द्रं प्रणवन्त' मिति ऐन्द्रे वज्रमणिं ततः।। ५२
'आग्नावग्निरि' त्याग्नेय्यां मौक्तिकं प्रक्षिपेत्ततः।
'यमो दाधार' इत्युक्त्वा याम्ये वैदूर्यकं न्यसेत्।। ५३
'वसवः प्रथमः' प्रोच्य नैर्ऋत्यां शङ्खजं न्यसेत्।
'ये ते शत' मिति स्फटिकं वारुण्यां दिशि निक्षिपेत्।। ५४
'मरुतः परमा' त्मेति तथा वायव्यां पुष्यकं न्यसेत्।
'सोमं राजान' मित्युक्त्वा चन्द्रकान्तन्तु सौम्यके।। ५५
'ईशानः सर्व' मन्त्रेण चैशान्यां नीलमाक्षिपेत्।
एवं क्रमेण निक्षिप्य पदेष्वैन्द्रादिषु क्रमात्।। ५६
'शन्नो निधत्ता' मित्युक्त्वा वासुकेरमृताश्मकम्।
ब्रह्मभागे न्यसेद्विद्वान् साध्यादिभ्यस्ततः परम्।। ५७
'धाता धातृणा' मिति च संध्येभ्यो लोहिताश्मकम्।
'विश्वे देवस्य' इत्युत्का विश्वेभ्यश्चोत्पलं मणिम्।। ५८
'अधिब्रह्मे' ति च न्यसेत्सिद्धानान्तु प्रवालकम्।
'इमां मूर्धन्या' इत्युक्त्वा गन्धर्वेभ्यो मनश्शिलाम्।। ५९
'अप्सरस्सु' ब्रुवन् विद्वानप्सरोभ्योऽथ शुक्तिजम्।
'यं काद्रवेया' इत्युक्त्वा नागेभ्यो विमलं मणिम्।। ६०
'अर्यम्णः कुम्भी' ति तथा अर्यम्णे च प्रवालकम्।
'तत्त्रीण्येषे' ति च ददेद्भूतेभ्यो नीलमुत्तमम्।। ६१
इन्द्राग्न्योरन्तरालादि पदेष्वेवं न्यसेत्क्रमात्।
सौवर्णं गैरिकञ्चैव हरितालं मनश्शिलाम्।। ६२
अञ्जनञ्चैव श्यामञ्च कासीसं पारदं तथा।
सौराष्टकं तथा चैव गोरोचनमतः परम्।। ६३

मध्ये ब्रह्माणमारभ्य ईशानान्तमनुक्रमात्।
'ब्रह्मा देवा' दिभिर्मन्त्रैः न्यसेद्विद्वान् पृथक् पृथक्।। ६४
ततस्सर्वाणि बीजानि सर्वगन्धयुतानि च।
तथा कुलुत्थमाषौ च मुद्गं गोधूमकं पुनः।। ६५
तिलतिल्वौ समादाय यववंशयवौ तथा।
नीवारञ्च प्रियङ्गुञ्च गोधूमयवकौ तथा।। ६६
बीजानीत्थं पूर्वमुक्तमन्त्रैर्मध्यादि विन्यसेत्।
'भूयाम वृत्या' इत्युक्ता ऐन्द्रे श्रीवत्समर्पयेत्।। ६७
'नमस्सुलोम' मन्त्रेण आग्नेय्यां सन्न्यसेद्घटम्।
'स एकोऽभू' दिति जपन् याम्ये भेरीं तथा न्यसेत्।। ६८
आदर्शञ्चैव नैर्ऋत्यां 'देवस्य त्वे' ति मन्त्रतः।
वारुणे मत्स्ययुग्मन्तु 'अतो देवादि' ना न्यसेत्।। ६९
'क्ष्मामेका' मिति मन्त्रेण वायुस्थानेऽङ्कुशं न्यसेत्।
'तन्मा यशोऽग्र' इत्युक्त्वा शङ्खं सौम्ये तथा न्यसेत्।। ७०
'ब्रह्मा देवाना' मिति न्यसेदावर्तञ्च त्रियम्बके।
ब्रह्माभिमुखमेवन्तु मध्यमावरणे न्यसेत्।। ७१
अष्टमङ्गलविन्यास एवमैन्द्रादिषु स्मृतः।
गदां शङ्खमसिं चक्रं शरं श्वभ्रे च दक्षिणे।। ७२
'भूमाननोऽग्र' इत्युक्ता सन्न्यसेत्तु पृथक् पृथक्।
वामभागे तथा शङ्खं शार्ङ्गं खेटकमेव च।। ७३
'तन्मा यशोऽग्र' इत्युक्त्वा सन्न्यसेत्तु पृथक् पृथक्।
ब्राह्मणानां हितार्थन्तु स्रुक्स्रुवौ च कमण्डलु।। ७४
अन्यानि यज्ञभाण्डानि सुवर्णेन कृतानि वै।
'ब्रह्म प्रतिष्ठा' इत्युक्त्वा स्थापयेद्ब्रह्मभागके।। ७५

वर्णानाञ्चैव सर्वेषां तच्चिह्नानि पृथक् ददेत्।
'प्रजापतिं प्रथम' मिति मध्ये कूर्मन्तु विन्यसेत्।। ७६

## आसनपीठे रत्नन्यासः

एवं स्थानक उद्दिष्टमासने तु प्रवक्ष्यते।
सिंहासनस्य मध्ये तु पूर्वोक्तां सन्न्यसेच्छिलाम्।
रत्नन्यासं तथा कुर्यादासने शूलमर्पयेत्।। ७७

## शयनपीठे रत्नन्यासः

शयने देवदेवस्य पादपार्श्वे शिलां न्यसेत्।
पादस्पर्शे भवेद्यत्र तत्र रत्नानि सन्न्यसेत्।। ७८
स्थानके चासने वाऽपि यथार्हं शयने यथा।
शूलं स्पृशति रत्नानि यथा संस्थापयेत्तथा।। ७९
यथायुक्ति प्रकुर्वीत रत्नन्यासं समन्त्रकम्।
रत्नानि प्राणवद्ध्यात्वा तथा धातूनि धातुवत्।। ८०
बीजानि चेन्द्रियाणीव न्यसेत्तस्मात्तयं बुधाः।
श्रीरूपञ्च श्रियः स्थाने पञ्चरत्नैस्समन्वितम्।। ८१
महीरूपं महीस्थाने रत्नपञ्चकसंयुतम्।
मुनीनामृद्धिमन्विच्छन् अक्षमालां कमण्डलु।। ८२
सुवर्णेनैव कृत्वा तु मुन्योर्वै स्थानयोः क्षिपेत्।
तत्तन्मन्त्रं समुच्चार्य रत्नन्यासं समाचरेत्।। ८३
तत्काले यजमानस्तु विधिना पूजयेद्गुरुम्।
ऋत्विजश्च सुसम्पूज्य नमस्कृत्य च दैववत्।। ८४

## शूलस्थापनम्

मुहूर्ते समनुप्राप्ते शयानं बेरमादरात्।
देवदेवं समुद्धृत्य पाद्याद्यैरभिपूजयेत्।। ८५
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
धारयन् शिरसा कुम्भमाचार्यः पुरतो व्रजेत्।। ८६
देवस्य च तथा देव्योः मुन्योः शूलानि कौतुकम्।
आदाय धृत्वा हस्ताभ्यां व्रजेयुः स्थापका अनु।। ८७
आचार्यः स्थापकाश्चैव प्रदक्षिणविधानतः।
यथाक्रमं समाहृत्य तिष्ठेयुश्च यथाक्रमम्।। ८८
कुम्भेन सह शूलानि न्यस्य गर्भगृहान्तिके।
मुहूर्ते समनुप्राप्ते विष्णुसूक्तं समुच्चरन्।। ८९
ध्रुवसूक्तञ्च जप्त्वा वै स्थापयेयुरनुक्रमात्।
देवस्य कुड्ययोर्मध्ये देव्योः स्थानं प्रकीर्तितम्।। ९०
कुड्यकौतुकयोर्मध्ये मुन्योः स्थानमुदीर्यते।
तत्तन्मन्त्रं समुच्चार्य तत्तच्छूलं सुसन्न्यसेत्।। ९१

## आवाहनम्

कुम्भं कौतुकमादाय बालागारं प्रविश्य वै।
ब्रह्मस्थाने प्रतिष्ठाप्य आवाहनमथाचरेत्।। ९२
पुण्याहं वाच्य तत्काले यथोक्तविधिना गुरुः।
अर्चयित्वा यथान्याय्यं हविर्भिस्सन्निवेदयेत्।। ९३
पश्चाच्छिल्पिनमाहूय शिल्पशास्त्रविचक्षणम्।
तं पूजयित्वा विधिना दृढीकरणमाचरेत्।। ९४

तत्काले रज्जुबन्धञ्च अष्टबन्धं क्रमेण वै।
कारयेत्तु विधानेन आचार्यः शिल्पिभिः क्रमात्।। ९५
पश्चात् स्थानं प्रकुर्वीत यागशालां व्रजेद्बुधः।
पश्चादग्निं समासाद्य विष्णुसूक्तं हुनेद्गुरुः।। ९६
जुहुयात्पौरुषं सूक्तं सर्वशान्त्यै विशेषतः।
अन्तहोमञ्च हुत्वा तु ततो विप्रांश्च भोजयेत्।। ९७
सुवर्णपशुभूम्यादीन् गुरवे दक्षिणां ददेत्।

## शिलाशूलस्थापनविशेषः-मुहूर्तविचारः

अत ऊर्ध्वं प्रवक्ष्यामि शैलजस्थापनं क्रमात्।। ९८
अयने चोत्तरे श्रेष्ठं दक्षिणे चापदि स्मृतम्।
मासानां फाल्गुनः श्रेष्ठः माधवः शुचिशुक्लभाक्।। ९९
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।। १००
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।

## शिलाशूलस्थापनप्रयोगः

तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे।। १०१
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।
अङ्कुरारोपणादूर्ध्वं द्रव्याणि च समाहरेत्।। १०२
आलयात्पुरतो वाऽपि दक्षिणे वा मनोरमे।
मण्डपं वाऽथ कूटं वा प्रपां वाऽपि च कारयेत्।। १०३
यथासौन्दर्यकं कुर्याद्यथाविभवविस्तरम्।
सर्वालङ्कारसंयुक्तं चतुर्द्वारसमन्वितम्।। १०४

द्वारतोरणसंयुक्तं दर्भमालासमन्वितम्।
एवं शालाञ्च कृत्वा तु स्थलं सम्यक् प्रकल्प्य च।। १०५
अलङ्कुर्यात्ततः सम्यक् पैष्ट्या भूमिं समन्ततः।
तन्मध्ये स्थण्डिलं कुर्यात् चतुरश्रं समन्ततः।। १०६
चतुर्हस्तप्रमाणेन हस्तमात्रोन्नतेन च।
मनोरमं कारयित्वा दृढीकरणमाचरेत्।। १०७
अथवा कारयेद्विद्वान् बिम्बाध्यर्धप्रमाणतः।
स्थापनादिवसशात्पूर्वं पञ्चाहे त्रियहेऽपि वा।। १०८
जलेऽधिवासनं कुर्याद्वस्त्रैराच्छादनं चरेत्।
महारूपं यदि स्याच्चेदालये त्वाधिवासनम्।। १०९
आलयाद्दक्षिणे चैव उत्तरे वा मनोरमे।
बिम्बाध्यर्धप्रमाणेन अवटञ्चैव खानयेत्।। ११०
बिम्बदघ्नञ्च निम्नं स्याद्बिम्बानाञ्च पृथक् पृथक्।
अवटञ्चैव कृत्वा तु पुष्पाक्षतसमायुतम्।। १११
कुशोदकसमायुक्तं जलेन परिपूरयेत्।
एवं कृत्वा विधानेन शाययेद्बिम्बमुत्तमम्।। ११२
खातं क्षीरोदधिं स्मृत्वा शाययीत विचक्षणः।
सम्यग्जलैः प्रपूर्यैव सर्वालङ्कारसंयुतम्।। ११३
पञ्चगव्ये कुशोदे च एवमेवाधिवासयेत्।
पूर्वस्मिन्नेव दिवसे अग्निकुण्डानि कल्पयेत्।। ११४
उत्तरे तु विमानस्य कुण्डं श्रामणकं चरेत्।
सूत्रोक्तेन विधानेन भूमियज्ञं यजेत्क्रमात्।। ११५
पर्यग्निञ्चैव कृत्वा तु प्रोक्षयेत्पञ्चगव्यकैः।
(पुण्याहं वाचयित्वा तु गर्भगेहस्य मध्यतः)

## यागशाला - होमकल्पनम्

प्राच्यामाहवनीयञ्च अन्वाहर्यञ्च दक्षिणे।। ११६
गार्हपत्यं प्रतीच्यान्तु आवसत्थ्यं तथोत्तरे।
मध्ये सभ्यञ्च कृत्वा तु पूर्वोक्तेन विधानतः।। ११७
सभ्यस्य दक्षिणे कुण्डं पौण्डरीकं समाचरेत्।
प्राच्यामाहवनीयस्य श्वभ्रं कुर्वीत यत्नतः।। ११८
श्वभ्रस्य परितः पङ्क्तिं कारयेच्च विधानतः।
तरुणालयमासाद्य देवदेवं प्रणम्य च।। ११९
सप्तविंशतिभिर्भेदैरर्चयेच्च यथाविधि।
शूलस्थापनवत्कुर्यात्कुम्भपूजां क्रमाद्बुधः।। १२०
बालालयस्य चाग्नेय्यां शयनं सम्प्रकल्पयेत्।
अण्डजादीनि चास्तीर्य शयनानि विधानतः।। १२१
अलाभे त्वण्डजादीनां वस्त्राण्यास्तीर्य च क्रमात्।
दर्भानुपरि विन्यस्य पुष्पाक्षतसमन्वितम्।। १२२
पश्चाद्देवेशमादाय विष्णुसूक्तं समुच्चरन्।
प्राङ्मुखं पश्चिमास्यं वा स्थापयित्वा विधानतः।। १२३
अर्घ्यान्तमर्चयित्वा तु पुण्याहं वाचयेत्ततः।
बद्ध्वा प्रतिसरं पश्चात् शाययेत्तु विचक्षणः।। १२४
'यद्वैष्णवं' समुच्चार्य शयनं हि विधीयते।
पूर्वस्यामेव रात्रौ तु प्रभाते वा विशेषतः।। १२५
शय्यास्थं देवमादाय स्थण्डिले चैव सन्न्यसेत्।
स्थण्डिलोपरि सर्वत्र धान्यानि च समास्तरेत्।। १२६
वस्त्रैराच्छाद्य यत्नेन दर्भानुपरि संस्तरेत्।
विष्णुसूक्तं समुच्चार्य तत्र देवं निवेशयेत्।। १२७

यदि बेरं महारूपं यन्त्रैरेवाथ योजयेत्।
येन केन प्रकारेण योजयेदथ बुद्धिमान्।। १२८

शयानं देवमासाद्य सर्ववाद्यसमायुतम्।
प्रदक्षिणं ततः कृत्वा स्थापयेत् श्वभ्रमध्यमे।। १२९

आघारं विधिवत्कुर्यादग्निमानम्य चादरात्।
आघारान्ते सुहोतव्यं वैष्णवं तत्र तत्र तु।। १३०

कुम्भैः द्वादशभिश्चैव उपस्नानसमन्वितैः।
तत्तद्द्रव्यसमायुक्तैः स्थापयेत्पुरुषोत्तमम्।। १३१

दक्षिणे पौण्डरीकस्य शयनं सम्प्रकल्पयेत्।
पूर्वोक्तेन विधानेन देवेशं शाययेत् ततः।। १३२

पुण्याहं वाचयित्वा तु बद्ध्वा प्रतिसरं ततः
शयने शाययेद्देवं वस्त्रञ्चोपरि संस्तरेत्।। १३३

पश्चादग्निं समासाद्य परिषिच्य च पावकम्।
हुत्वा तु पौरुषं सूक्तं प्राच्यामाहवनीयके।। १३४

विष्णुसूक्तञ्च हुत्वा तु त्रातारादींश्च वै हुनेत्।
अन्वाहार्ये सुहोतव्यं जयादिकमनुक्रमात्।। १३५

गार्हपत्ये विशेषेण जुहुयाद्वैष्णवं शतम्।
रुद्रसूक्तञ्च जुहुयादावसत्थ्ये विशेषतः।। १३६

हौत्रमुच्चार्य सभ्ये तु होता हौत्रक्रमेण च।
सभ्ये तु सर्वदैवत्यं जुहुयादुक्तमार्गतः।। १३७

अब्जाग्निमध्ये जुहुयात्पारमात्मिकमेव च।
जयादीन् जुहुयाच्चापि व्याहृत्यन्तं पृथक् पृथक्।। १३८

आग्नेय्यां नैर्ऋते स्थाने वायव्ये चेशकोणके।
कुण्डमौपासनं कृत्वा आघारं विधिवद्यजेत्।। १३९

ऐन्द्राद्यैशान्यपर्यन्तं दिग्दैवत्यञ्च हूयताम्।
प्रत्येकं विंशतिर्होमः व्याहृत्यन्तं पृथक् भवेत्।। १४०
एवं रात्रौ प्रकुर्वीत रात्रिशेषं व्यपोह्य च।
पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।। १४१
स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।
उद्धृत्य शयनाद्देवं पाद्याद्यैरभिपूजयेत्।। १४२
अन्तहोमञ्च जुहुयादैन्द्रादिषु यथाक्रमम्।
ततः कौतुकमादाय तरुणालयमाव्रजेत्।। १४३
स्थापयेत्ब्रह्मभागे तु विष्णुसूक्तं समुच्चरन्।
यागस्थानं समासाद्य अग्निमासाद्य सर्वतः।। १४४
वैष्णवं विष्णुसूक्तञ्च पञ्चाग्निषु यथाक्रमम्।
जुहुयात्तु विधानेन सर्वशान्तिर्भविष्यति।। १४५
अन्तहोमञ्च हुत्वा तु प्रागादिषु यथाक्रमम्।
सर्वान् देवान् विसृज्यैव आदित्यं सम्प्रणम्य च।। १४६
गर्भालयं प्रविश्याथ कल्पयित्वा पदानि तु।
दैविकञ्च त्रिधा कृत्वा प्राच्यां द्वौ तु व्यपोह्य च।
पश्चिमे चैकभागे तु स्थानकं स्थापयेदथ।। १४७
द्वितीये वा स्थापयेत्तु . . . . . . . . . . . . . ।
देवस्य कुड्ययोर्मध्ये देव्योः स्थानमुदीर्यते।
कुड्यकौतुकयोर्मध्ये मुन्योः स्थानमुदाहृतम्।। १४८
रत्नन्यासञ्च कृत्वा तु पूर्वोक्तविधिनैव च।
शयनाद्देवमादाय युक्तियुक्तः समाहितः।। १४९
गर्भालयं प्रविश्याथ विष्णुसूक्तं समुच्चरन्।
जपत्वा तु पौरुषं सूक्तं देवं संस्थाप्य शैलजम्।। २५०

देव्यौ च स्थापयेत्पश्चात् मुनी चैव ततः परम्।
तत्तन्मन्त्रञ्च जप्त्वा तु स्थापयेत्तु विचक्षणः।। १५

बीजाक्षराणि सन्न्यस्येच्छैलजे तु विशेषतः।
आसीनमपि देवेशं किञ्चिन्मानुषमाश्रिते।। १५

आसनोपरि रत्नानां न्यासं तत्र समाचरेत्।
पश्चाच्छिल्पिनमाहूय पूजयित्वा विशेषतः।। १५

शिल्पशास्त्रोक्तविधिना कारयेत्सुदृढं ततः।
शर्करादि क्रमात्कृत्वा पश्चाद्वर्णं सुयोजयेत्।। १५

वर्णहीनं ध्रुवं कुर्याद्विनश्यति न संशयः।
पूर्वं पीठं सुसन्न्यस्य रत्नन्यासं समाचरेत्।। १५

रत्नं पीठोपरि न्यस्येत्पूर्वोक्तविधिना ततः।
अन्तः सुषिरसंयुक्ते तले रत्नान्यथार्पयेत्।। १५

सहजं यदि पीठं स्यात्तले रत्नानि चार्पयेत्।
येन केन प्रकारेण योजयित्वाऽथ शिल्पिना।। १५

दृष्टिं सौम्याञ्च कृत्वा तु देवदेवस्य यत्नतः।
शर्करादिक्रमं कृत्वा पटं सम्यक् सुयोजयेत्।। १५

अथवा कारयेद्विद्वान् शर्करोपरि वर्णकैः।
शैलजञ्च ध्रुवस्थाने वर्णहीनं न कारयेत्।। १५

एकत्रैव विमानस्य एका चेच्छैलजा पुरा ?।
मानोन्मानप्रमाणेन व्यक्तं सर्वत्र कारयेत्।। १६

ब्रह्मस्थाने प्रतिष्ठाप्य नित्यं सम्यक् समर्चयेत्।
बेरस्य दक्षिणे पार्श्वे उत्सवार्थन्तु कौतुकम्।। १६

नवधा मार्गमालोक्य कौतुकन्तु सुसम्भरेत्।
अर्चयित्वा यथाशक्ति त्रिकालन्तु विशेषतः।। १६

एकबेरप्रतिष्ठा चेत् त्रिकालं स्नापनं चरेत्।
तैलेनाभ्यञ्जनं कृत्वा पश्चात्स्नापनमाचरेत्।। १६३
पञ्चविंशतिभिर्भेदैरर्चयेच्च यथाक्रमम्।
एकबेरन्तु यत्रैव स्नानं तत्रैव कारयेत्।। १६४
सन्न्यसेत्कलशांस्तत्र प्रमुखे चोत्तरेऽपि वा।
स्नपनोक्तविधानेन कलशन्यासमाचरेत्।। १६५
मध्ये शुद्धोदकं न्यस्य उदधान्यां विशेषतः।
आदाय कलशान् सर्वान् गर्भगेहं प्रविश्य च।। १६६
देवस्य दक्षिणे भागे स्थित्वा चैवोत्तरामुखः।
स्नपनोक्तैस्तथा मन्त्रैः मृदाद्यैरभिषेचयेत्।। १६७
अन्ते हारिद्रचूर्णेन स्नापयित्वा ततः परम्।
शुद्धोदैरभिषिञ्चेत्तु शोधयित्वा विशेषतः।। १३८
प्लोतेन विमृजेत्पश्चात् वस्त्रालङ्कारमाचरेत्।
अलङ्कारैरलङ्कृत्य पञ्चविंशतिविग्रहैः।
अर्चयित्वा यथाशास्त्रं देवेशं प्रणमेत्ततः।। १६९

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे शूलस्थापनविधिर्नाम
एकादशोऽध्यायः।।

## अथ द्वादशोऽध्यायः

---

### स्थानकासनशयनानि-स्थानकलक्षणम्

अत ऊर्ध्वं प्रवक्ष्यामि स्थानकस्य च लक्षणम्।
स्थानकं त्रिविधं योगभोगवीरविभेदतः।। १

### योगस्थानकम्

दैविकन्तु त्रिधा कृत्वा तेषु भागेषु पूर्वतः।
भागौ द्वावेकभागं वा व्यपोह्यैव तु पश्चिमे।। २
भागे संस्थापयेद्बिम्बं स्थानकन्तु सुलक्षणम्।
चतुर्भुजन्तु कृत्वा वै दशतालेन मानतः।। ३
सर्वाभरणसंयुक्तं शङ्खचक्रसमन्वितम्।
सस्यश्यामनिभं कुर्यात्पीताम्बरसमन्वितम्।। ४
महीं दक्षिणतः कुर्यादेकजानुक्रमेण वै।
पुष्पाञ्जलिसमायुक्तामानमन्तीं सदाऽऽदरात्।। ५
श्यामवर्णां महीं कुर्यात्पुष्पाम्बरसमन्विताम्।
वामे पुराणं कुर्वीत एकजानुक्रमेण हि।। ६
पुराणञ्च प्रवालाभं जटामण्डलमण्डितम्।
अक्षमालासमायुक्तं पुष्पाञ्जलिसमन्वितम्।। ७
देवदेवं समीक्ष्यैव नित्यं भक्तिसमन्वितम्।
कुड्यकौतुकयोर्मध्ये इडापुण्यौ समर्चयेत्।। ८
दक्षिणं भित्तिमाश्रित्य ब्रह्माणञ्चैव लेखयेत्।
शङ्करं लेखयेद्वामे तत्तद्वर्णसमायुतम्।। ९

योगस्थानकमुद्दिष्टमेवं कुर्यात् विधानतः।

## भोगस्थानकम्

दैविकञ्च त्रिधा कृत्वा भागौ द्वौ पूर्वतस्त्यजेत्।। १०
स्थापयेत्पश्चिमे भागे दशतालेन मानतः।
सर्वाभरणसंयुक्तं शङ्खचक्रसमन्वितम्।। ११
श्यामलाङ्गं चतुर्बाहुं .......... चतुर्विधम्।
एवं बिम्बञ्च कृत्वा तु सर्वालङ्कारसंयुतम्।। १२
श्रीदेवीं दक्षिणे कुर्यात्प्रवालद्युतिशोभिताम्।
सुस्थितं दक्षिणं पादं वामं पादन्तु कुञ्चितम्।। १३
पद्मं दक्षिणहस्ते तु वामं सम्यक् प्रसार्य च।
किञ्चिद्देवं समीक्ष्यैव विस्मयोत्फुल्ललोचनाम्।। १४
महीं वामे प्रकुर्वीत पुष्पाञ्जलिसमन्विताम्।
पुष्पं वामे तु सङ्गृह्य दक्षिणं सम्प्रसार्य च।। १५
सुस्थितं वामपादञ्च दक्षिणं कुञ्चितं चरेत्।
देवेशकुड्ययोर्मध्ये श्रीभूम्योः स्थानमुच्यते।। १६
किञ्चित्पश्चिममाश्रित्य देव्यौ ते स्थापयेदुभे।
पुराणं दक्षिणे कुर्यादेकजानुक्रमेण ह।। १७
भृगुं वामे प्रकुर्वीत
पुष्पाञ्जलिसमन्वितम्।
यद्वा दक्षिणतः कुर्याद्वामे
पुण्यं प्रकल्पयेत्।। १८
कुड्यकौतुकयोर्मध्ये मुनिस्थानमुदाहृतम्।
एवमेव विधानेन भोगस्थानकमीरितम्।। १९

## वीरस्थानकम्

सर्वं दैविकमाश्रित्य स्थापयेत्तु विधानतः।
देव्यौ मुनी वर्जयित्वा देवेशस्तत्र शिष्यते।। २०
वीरमेवं प्रकुर्वीत सर्वाभरणसंयुतम्।
शङ्खचक्रे विना कुर्यादथ वा तदलङ्कृतम्।। २१

## आसनलक्षणम्

आसनं यत् त्रिधा योगभोगवीरविभेदतः।
प्रोक्तं महर्षिभिः तेषां लक्षणन्तु प्रवक्ष्यते।। २२

## योगासनम्

किञ्चिद्दैविकमाश्रित्य मानुषे चासनं चरेत्।
सिंहासनं समं कुर्यादुपधानेन संयुतम्।। २३
प्रसार्य दक्षिणं पादं वाममाकुञ्चितं चरेत्।
स्वागतं दक्षिणं हस्तं वामं कट्यवलम्बितम्।। २४
शङ्खचक्रधरं कुर्यात्सर्वाभरणभूषितम्।
इलापुण्यार्चितं यत्तु योगासनमिहोच्यते।। २५
इलाञ्च दक्षिणे कुर्यादेकजानुक्रमेण ह।
वामे पुण्यं प्रकुर्वीत पुष्पाञ्जलिसमन्वितम्।। २६
स्थानं पूर्वोक्तमुद्दिष्टं योगासनविधावपि।

## भोगासनम्

श्रीभूमिसहितं कुर्याद्देवदेवं विशेषतः।। २७

श्रीदेवीं दक्षिणे कुर्यान्महीं वामे च कारयेत्।
प्रसार्य दक्षिणं पादं वाममाकुञ्चितं चरेत्।। २८

पद्मं दक्षिणहस्ते तु वामं कट्यवलम्बितम्।
किञ्चिद्देवं समीक्ष्यैव श्रीदेवीञ्चापि कारयेत्।। २९

वामं पादं प्रसार्यैव दक्षिणं कुञ्चितं चरेत्।
पद्मं वामे तु सङ्गृह्य देवदेवं समीक्ष्य वै।। ३०

सिंहासने सहासीनं देवमुद्वीक्ष्य चादरात्।
आसीनामासने देवीं महीं कुर्याद्विचक्षणः।। ३१

अन्तरं देवदेव्योस्स्यात् भागं तालं यवद्वयम्।
पृथगासने तथा कुर्याद्भोगभावो न सम्भवेत्।। ३२

सिंहासनस्य पृष्ठे तु व्याजिन्यौ भद्रकाजये।।
जयाञ्च दक्षिणे कुर्याद्वामे चैव तु भद्रकाम्। ३३

जयाञ्च श्यामवर्णां तु पुष्पाम्बरधरां शुभाम्।
हस्ते च दक्षिणे कुर्याच्चामरञ्च विशेषतः।। ३४

रक्ताभा भद्रका चोक्ता पीताम्बरवरप्रिया।
चामरं वामहस्ते तु कुर्यादानम्य चादरात्।। ३५

अथवा कारयेद्विद्वान् किष्किन्धं सुन्दरं क्रमात्।
किष्किन्धं दक्षिणे कुर्याद्वामे वै सुन्दरं चरेत्।। ३६

सुन्दरं वामहस्ते तु धरन्तं चामरं शुभम्।
देवद्रुमं प्रकुर्वीत देवदेवस्य पृष्ठतः।। ३७

नानापुष्पसमायुक्तं नानापल्लवसंयुतम्।
कारयित्वा विधानेन छत्रञ्चोपरि चन्द्रभम्।। ६८

भित्तौ बाहूपरि लिखेत्प्रभामण्डलमन्तरा।
एवं सुखासनं प्रोक्तं ब्रह्मणा परमेष्ठिना।। ६९

## वीरासनम्

एवमेव विधानेन बद्धा वस्त्रं तथाऽऽसने।
स्थितिं वीरासनं प्राहुर्नारसिंहे विशेषतः।। ४०
अथवा दक्षिणं पादं कुञ्चितं कारयेत्तथा।
वामं पादं प्रसृतञ्च केषाञ्चित्पक्ष उच्यते।। ४१

## त्रिविधशयनलक्षणम्

अतः परं प्रवक्ष्यामि शयनस्य विधिं क्रमात्।
शयनञ्च त्रिधा योगभोगवीरक्रमाद्भवेत्।। ४२
सोमच्छन्दविमानं वा दीर्घशालमथापि वा।
कूटं वा मण्डपं वाऽपि शयनाय प्रकल्पयेत्।। ४३
दशतालयुतं वाऽपि द्वारस्य सममेव वा।
यजमानसमं वाऽपि गर्भगेहसमन्तु वा।। ४४
शयनं सम्प्रकल्प्यैव सर्वाभरणभूषितम्।

## योगशयनम्

सस्यश्यामनिभं कुर्यादनन्तोपरि शायिनम्।। ४५
बेरायामं त्रिधा कृत्वा तत्रैकं शयनोच्छ्रयम्।
सव्यं हस्तं प्रसार्यैव प्रह्लादस्य शिरःस्थले।। ४६
शयानं देवदेवेशं कुर्याद्योगाख्यशायने।
प्रह्लादं रक्तवर्णञ्च शयनस्य समं तथा।। ४७
बालरूपं तथा कुर्यात्सर्वाभरणभूषितम्।
वामकूर्परमूर्ध्वं स्यान्नताङ्गुलिसमन्वितम्।। ४८

स्वीयं कायं त्रिरावर्त्य तल्पीकृष्य हरेर्मृदुम्।
फणान् पञ्च समुद्धृत्य प्रसार्य मकुटोपरि।। ४९
पीतवर्णमथ श्वेतमनन्तं परिकल्पयेत्।
नाभ्यम्बुजे समासीनं ब्रह्माणञ्च प्रकल्पयेत्।। ५०
बिम्बस्य च चतुर्भागमायतं कारयेद्विधिम्।
हिरण्यवर्णं ब्रह्माणं जटामकुटभूषितम्।। ५१
सर्वाभरणसंयुक्तं पुष्पाम्बरसमन्वितम्।
चतुर्बाहुं पद्मभवं धातारं चतुराननम्।। ५२
कमण्डलुं वामहस्ते दक्षिणे चाक्षमालिकाम्।
सव्यमालोक्यवत्कुर्यात् वामं कट्यवलाम्बितम्।। ५३
ऊर्ध्वे पञ्चायुधानि स्युः भित्तिपार्श्वे विशेषतः।
कौमोदकीं तथा शार्ङ्गमसिं स्त्रीरूपमाचरेत्।। ५४
चक्रं पुरुषवत्कुर्याच्छङ्खं भूताकृतिं चरेत्।
रक्तां कौमोदकीं कुर्यात्पीतं शार्ङ्गमुदाहृतम्।। ५५
श्वेतवर्णमसिं कुर्याच्चक्रमग्निनिभं भवेत्।
किरीटमकुटोपेतं स्तनबन्धसमन्वितम्।। ५६
तलप्रहारसमयद्रुतवेगसमन्वितम्।
एवं रूपाणि कार्याणि आयुधानि विशेषतः।। ५७
उभौ कवचसंयुक्तौ शङ्खचक्रौ विशेषतः।
सर्वाभरणसंयुक्तावुग्ररूपौ च कारयेत्।। ५८
वामपार्श्वे तथा कुर्यान्मधुं कैटभमेव च।
समुद्रोद्धूतवेगेन जानुमात्रं समुद्रागौ।। ५९
मधुश्च रक्तवर्णः स्यात्कैटभः श्यामलो मतः।
रक्तकेशौ दण्डवृक्षायुधसन्धारिणावुभौ।। ६०

वक्रदंष्ट्रौ त्रासहासयुतौ परमदारुणौ।
सर्वाभरणसंयुक्तं भीमरूपं भयानकम्।। ६१
गरुडं दक्षिणे पार्श्वे प्राञ्जलिं सुस्थितं सितम्।
वामपार्श्वे तथा शान्तं तद्वर्णेनैव कारयेत्।। ६२
इलापुण्यौ तथा कुर्यात्पूजकस्थानमाश्रितौ।
पुण्यञ्च दक्षिणे कुर्याद्वामे क्षोणीञ्च कारयेत्।। ६३
नवतालक्रमेणैव एकजानुविधानतः।
पुष्पाञ्जलिसमायुक्तौ रक्तश्यामनिभावुभौ।। ६४
एवं योगं समाख्यातं वीरञ्चैव प्रवक्ष्यते।

## वीरशयनम्

चतुर्बाहुयुतं कुर्याच्छङ्खचक्रसमन्वितम्।। ६५
सव्यं शिरस्युपहितं
　　वामं हस्तं प्रसारितम्।
उभौ देव्यौ पादयुग्मं
　　मर्दयन्त्यौ शनैः शनैः।। ६६
मार्कण्डेयञ्च माञ्चैव कुर्यादावाञ्च पूजकौ।
एवं तु वीरशयनं सुखञ्चैव प्रवक्ष्यते।। ६७

## भोगशयनम्

द्विभुजं देवदेवेशं सव्यञ्चैवोपधानकम्।
प्रसारितं वामहस्तं मया पुण्येन चार्चितम्।। ६८
शिरोभागे श्रियं कुर्यात्पूर्वोक्तं मकुटं चरेत्।
वामपार्श्वे महीं कुर्यात्सुखं तच्छयनं विदुः।। ६९

दक्षिणे वक्रतुण्डञ्च वामे कात्यायनीं तथा।
विधिं मधुं कैटभञ्च तथा चोक्तायुधानि च।
लिखेद्वा परिवारांस्तु प्रतिमेऽर्चकयोश्चरेत्।। ७०

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे स्थानकादिविधिर्नाम
द्वादशोऽध्यायः।

---

## अथ त्रयोदशोऽध्यायः

---

### मृत्संस्कारविधिः-ग्राह्यमृदः

अथ वर्णविधौ वक्ष्ये मृदादीनान्तु सङ्ग्रहम्।
पर्वते वा नदीतीरे तटाके वा मृदं हरेत्।। १
गङ्गासरस्वतीसिन्धुकौशिकीनर्मदासु च।
वण्णायां कृष्णवेण्याञ्च कावेर्यां यमुनातटे।। २
हिमाचलोर्जयोर्विन्ध्ये विदूरे वेदपर्वते।
महेन्द्रे माल्यवति च सह्ये किष्किन्ध एव वा।। ३
ओघे चैव महौघे च सेतुबन्धे तथैव च।
मृदं समाहरेत्तद्वत् सस्यक्षेत्रे प्रसिद्धके।। ४
देवालयसमीपे वा यत्र कुत्रापि पावने।
यजमानो गुरुश्चैव निमित्तान्युपलक्षयेत्।। ५
श्वः कर्ताऽस्मीति सङ्कल्प्य देवदेवं समर्चयेत्।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।। ६

## मृत्सङ्ग्रहणप्रकारः

सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
आदाय वै वैवधिकं खनित्रं खननायुधम्।। ७
आलयात्पुरतो गच्छेदुत्तरं वा यथोचितम्।
किञ्चित् स्थानं समासाद्य तृणगुल्माद्व्यपोह्य च।। ८
मण्डलान्युपलिप्यैव वर्णालङ्कारमाचरेत्।
यावान् वै प्रतिमाऽऽयामः तावदध्यर्धमेव वा।। ९
खनित्वा तालमात्रं वा गृह्णीयात्तत्र मृत्तिकाम्।
तत्स्थाने पश्चिमे भागे कुण्डं श्रामणकं चरेत्।। १०
सूत्रोक्तेन विधानेन भूमियज्ञं समाचरेत्।
पर्यग्निञ्चैव कृत्वा तु पुण्याहं वाचयेत्ततः।। ११
उपलिप्य च तत्स्थानमलङ्कृत्य विशेषतः।
हरिणीमर्चयेत्तत्र सप्तविंशतिविग्रहैः।। १२
पश्चिमे चक्रमभ्यर्च्य उत्तरे शान्तमर्चयेत्।
आचार्यं पूजयित्वा तु वस्त्राभरणकुण्डलैः।। १३
पादौ प्रक्षाल्य चाचम्य खनित्रं सम्प्रगृह्य च।
आचार्यः प्राङ्मुखः स्थित्वा 'अतो देवादि' मुच्चरन्।। १४
खनित्रेण खनित्वा तु विष्णुसूक्तं समुच्चरन्।
उभाभ्याञ्चैव हस्ताभ्यां मृदमादाय भक्तितः।। १५
सौवर्णे राजते पात्रे ताम्रे कांस्यमयेऽथवा।
प्रतिमामानमाज्ञाय तदर्हां मृदमाहरेत्।। १६
वैवधेनैव चाहृत्य शाकुनं सूक्तमुच्चरन्।
देवालयं शनैर्गत्वा प्रदक्षिणमथाचरेत्।। १७

उत्तरे च मृदं स्थाप्य वैवधादीन् प्रपूज्य च।
आलयात्पुरतो वाऽपि उत्तरे वा मनोरमे।। १८
मण्डलान्युपलिप्यैव धान्यानि च समास्तरेत्।

## मृत्संस्कारः

उलूखलं स्थाप्य तत्र मुसलानि तथैव च।। १९
उलूखलेऽभ्यर्च्य सोमं मुसलेतु सुदर्शनम्।
आहूय नारीः सम्पूज्य जयाद्यास्ता हृदा स्मरन्।। २०
ताभिः सञ्चूर्णयित्वा तु तुषादीन् संव्यपोह्य च।
शूर्पेण शोधयित्वा तु मृद्भाण्डे सम्प्रपूरयेत्।। २१
नादेयं जलमादाय सर्वगन्धसमायुतम्।
पूरयित्वा जलेनैव तानि गुप्ते समर्पयेत्।। २२

## कल्कद्रव्याणि

आदाय चौषधीः पश्चाच्चूर्णयित्वा विचक्षणः।
तच्चूर्णं मरिचञ्चैव हारिद्रञ्च विडङ्गकम्।। २३
यवान् माषांश्च मुद्गांश्च गोधूमान् परिगृह्य च।
समभागान् सुसंहृत्य चूर्णं कुर्याद्विचक्षणः।। २४
चूर्णप्रमाणं कापित्थं निर्यासं परिगृह्य च।
सर्वं सञ्चूर्णयित्वा तु गुप्ते देशे विनिक्षिपेत्।। २५
पलाशाश्वत्थखदिरापामार्गार्कांस्तथा पुनः।
नन्द्यावर्तञ्च पद्मञ्च तुलसीं विष्णुपर्णिकाम्।। २६
एतेषाञ्च रसं गृह्य एकपात्रे निधापयेत्।
क्षीरं घृतञ्च दधि च अर्कक्षीरमथाहरेत्।। २७

अश्वत्थादिचतुर्णाञ्च सारं सम्यक् प्रगृह्य च।
एतेषान्तु समं गृह्य अतसीस्नेहमुत्तमम्।। २८
अतसीचूर्णसंयुक्तं कपिलाघृतसंयुतम्।
सर्वासामोषधीनाञ्च चूर्णं मृत्सु विनिक्षिपेत्।। २९
नारिकेलस्य सारन्तु चूर्णं कृत्वा विशेषतः।
निर्यासेन कपित्थस्य युक्त्या तत्र प्रपूरयेत्।। ३०
शिल्पशास्त्रसुनिष्णातैः प्रबुद्धैः सम्प्रपूरयेत्।
तेनोक्तेन प्रकारेण मर्दयित्वा मृदा सह।। ३१
मासं पक्षञ्च सप्ताहं गुप्ते देशे निधापयेत्।

## अष्टबन्धविधिः - द्रव्याणि

अत ऊर्ध्वं प्रवक्ष्यामि अष्टबन्धक्रियाविधिम्।। ३२
गुञ्जाशतं विडङ्गञ्च गैरिकं जञ्जरीयुतम्।
वाकुलं पर्णसारञ्च निर्यासञ्च कपित्थकम्।। ३३
अश्वत्थादिचतुर्णाञ्च कषायं सम्प्रगृह्य च।
चूर्णं संगृह्य चैतेषामग्निना पाचयेच्छनैः।। ३४
नारिकेलस्य सारस्य त्रिवृतां रज्जुमाहरेत्।
ताम्रपत्रस्य नालञ्च युक्त्या सम्यक् समाहरेत्।। ३५
शूले सन्धौ तु सर्वत्र योजयेच्छिल्पिना दृढम्।
शूलाधारञ्च विधिना भित्तिमाश्रित्य कारयेत्।। ३६
स्कन्धे पृष्ठे च पार्श्वे च हस्तसन्धौ विशेषतः।
शङ्खचक्रे समुद्दिश्य शूलाधारं प्रकल्पयेत्।। ३७
शक्तश्चेत्ताम्रनालेन भित्तिमाश्रित्य कल्पयेत्।
शूले च पादमूले तु ताम्रनालेन कारयेत्।। ३८

देवस्य पादमूले तु ताम्रेण तलमाचरेत्।
यथायुक्ति प्रकुर्वीत कृमीणां नाशनक्षमम्।। ३९
अष्टबन्धं समादाय शूले चैवानुलेपयेत्।
पश्चान्मृदं समादाय शूले सर्वत्र बन्धयेत्।। ४०
हस्तौ पादौ च सर्वत्र ताम्रपत्रेण कारयेत्।

## मृदालेपनहोमः

आलयात्पुरतश्चैव प्राच्यामाहवनीयके।। ४१
आघारं विधिवत्कृत्वा पुरुषसूक्तञ्च हूयताम्।
जयादीनपि हुत्वा तु पाञ्चभौतिकसंयुतम्।। ४२
हुत्वा चैव विधानज्ञः प्रत्येकञ्चैकविंशतिम्।
मृदं पश्चात्समादाय विष्णुसूक्तं समुच्चरन्।। ४३
पुनःपुनर्मर्दयित्वा देवागारं प्रवेशयेत्।
सर्ववाद्यसमायुक्तं शकुनसूक्तसमन्वितम्।। ४४
ब्रह्मघोषसमायुक्तं जयशब्दसमन्वितम्।
शूलस्य दक्षिणे पार्श्वे स्थित्वा चैवोत्तरामुखः।। ४५

## मृदालेपः

पुरुषसूक्तं जपित्वा तु मृदमादाय भक्तितः।
मूर्धादिपादर्यन्तं मृदमालिप्य यत्नतः।। ४६
देवानन्यान् समुद्दिश्य तत्तन्मन्त्रमुदीरयन्।
मृदमालिप्य यत्नेन मूर्धादिषु च सर्वतः।। ४७
पश्चाच्छिल्पिनमाहूय पूजयित्वा विशेषतः।
शिल्पशास्त्रोक्तविधिना शिल्पिना कारयेत्ततः।। ४८

षण्मासं वा त्रिमासं वा मासं वापि यथोचितम्।
शोषयित्वा तु बिम्बानि कारयेत्तु शनैः शनैः।। ४९
अङ्गोपाङ्गेषु सर्वत्र उज्ज्ञानं (?) च यथाऽर्हतः।
शिल्पशास्त्रोक्तविधिना कारयेत्तु यथाऽर्हतः।। ५०

## शर्करासंस्कारः-लेपनञ्च

शर्करा सम्प्रगृह्यैव चूर्णं कृत्वा विशेषतः।
शनैःशनैः शोषयित्वा नादेयेन जलेन वै।। ५१
निर्यासेन कपित्थस्य पिचुना सहितेन वै।
पेषण्या पेषयेत्सम्यक् सर्वगन्धसमायुतम्।। ५२
एवं संसाध्य यत्नेन यजमानयुतो गुरुः।
आलयाद्दक्षिणे पार्श्वे अन्वाहार्यं प्रकल्पयेत्।। ५३
आघारं विधिवत्कृत्वा विष्णुसूक्तं सुहूयताम्।
जयादीनपि हुत्वा तु यद्देवादि सुहूयताम्।। ५४
विष्णुसूक्तं समुच्चार्य मर्दयित्वा तु शर्कराः।
सर्ववाद्यसमायुक्तं देवागारं प्रवेशयेत्।। ५५
बिम्बस्य दक्षिणे स्थित्वा पुरुषसूक्तं समुच्चरन्।
मूर्धादिपादपर्यन्तं शर्करालेपमर्पयेत्।। ५६
काले शिल्पिनमाहूय पूजयित्वा विशेषतः।
शिल्पशास्त्रोक्तविधिना प्रतिमां कारयेत्ततः।। ५७
मासं पक्षञ्च सप्ताहं शोषयित्वा विधानतः।

## पटसंस्कारः

नवं मृदु ससूक्ष्मञ्च कार्पासं वस्त्रमाहरेत्।। ५८

अग्रं पादञ्चाङ्कयित्वा मुखं पृष्ठं तथैव च।
आलयस्य प्रतीच्यान्तु गार्हपत्यं प्रकल्पयेत्।। ५९
आघारं विधिवत्कृत्वा मथितेनैव वह्निना।
पारमात्मिकसंयुक्तमीङ्कारादि समायुतम्।। ६०
व्याहृत्यन्तञ्च जुहुयाद्देवेशं मनसा स्मरन्।
सर्ववाद्यसमायुक्तं देवागारं प्रवेशयेत्।। ६१
तान्तवं वस्त्रमादाय विष्णुसूक्तं समुच्चरन्।
मुखे किञ्चित्सुसञ्छाद्य देवदेवं प्रणम्य च।। ६२
काले शिल्पिनमाहूय पूजयित्वा यथाविधि।
वस्त्रमादाय हस्ताभ्यां छादयित्वा विधानतः।। ६३
मूर्धादिपादपर्यन्तं वेष्टयित्वा तु सर्वतः।
शर्करादिक्रमं सर्वं सर्वाभरणसंयुतम्।। ६४
शिल्पिना कारयेत्पश्चात् शिल्पशास्त्रोक्तमार्गतः।

## वर्णसंस्कारः-षड्वर्णाः

अतः परं प्रवक्ष्यामि वर्णानां विधिमुत्तमम्।। ६५
श्वेतो रक्तस्तथा पीतस्तथैव शुकसन्निभः।
चाषपत्रनिभः कृष्ण इति षड्वर्णजातयः।। ६६
श्वेतरक्तावुभौ वर्णौ सत्त्वजाविति कीर्तितौ।
श्यामकाञ्चनवर्णौ तु राजसावित्युदाहृतौ।। ६७
चाषपत्रनिभः कृष्णवर्णश्चोक्तौ तु तामसौ।
परस्परं मिश्रणेन बहवो वर्णजातयः।। ६८
रक्तमिश्रः श्वेतमिश्रः पीतमिश्रस्तथैव च।
श्याममिश्रश्चाषमिश्रः कृष्णमिश्रस्तथैव च।। ६९

एवमादिविभेदेन जायन्ते वर्णजातयः।

**देवतानां पार्षदानाञ्च वर्णादिः-जयाद्यष्टौ**

जया च सितरक्ताङ्गी दूर्वाङ्कुरनिभांशुका।। ७०
शुकपत्राम्बरा चैव विजया हाटकप्रभा।
विन्दा हरितवर्णाङ्गी रक्तवस्त्रा प्रकीर्तिता।। ७१
पुष्टिका कनकाभाङ्गी श्यामवस्त्रा वराङ्गना।
नन्दका पद्मसङ्काशा चाषपत्रनिभांशुका।। ७२
कुमुद्वती कुमुदाभा सस्यश्यामनिभांशुका।
उत्पला चोत्पलाभाङ्गी नीलवस्त्रा वरानना।। ७३
विशोकाऽशोकपुष्पाभा शुकपत्राम्बरा वधूः।
सर्वाभरणसंयुक्ता जयाद्यप्सरसस्सदा।। ७४

**तिथयः**

नीलेन्दीवरसङ्काशा कुहूर्हेमनिभाम्बरा।
सिनीवाली सितश्यामा शमीपुष्पनिभाम्बरा।। ७५
हेममिश्रसिताङ्गी च राका रक्ताम्बरप्रिया।
अनुमतिस्सितश्यामा शमीपुष्पनिभाम्बरा।। ७६
नन्दा भद्रा जया रक्ता पूर्णा चापि सिता मताः।
व्युत्क्रमेणैव गृह्णीयाद्वस्त्रमासामिति स्थितिः।। ७७
सप्तमी चाष्टमी चापि हेमश्यामनिभे उभे।
विपरीतं तयोर्वस्त्रमिति शास्त्रस्य निश्चयः।। ७८
सुभद्रा द्वादशी पीता जपापुष्पनिभाम्बरा।
कन्या त्रयोदशी रक्ता श्यामलाम्बरसंयुता।। ७९

सुमुखी चतुर्दशी श्यामा तप्तहेमनिभाम्बरा।
पौष्णी च पौर्णमासी स्याच्छ्यामला पीतकाम्बरा।। ८०
तिथयश्च तथैवैताः कीर्तिता दश पञ्च च।
उक्तं वर्णं समादाय वर्णलेपनमाचरेत्।। ८१
वर्णांश्च साधयित्वा तु यथार्हं सुविचिन्त्य च।
निर्यासेन समायुक्तान् साधयेत्तु विचक्षणः।। ८२

## नयनोन्मीलनम्

सौवर्णं पात्रमादाय शक्त्या तूलिकया युतम्।
वर्णान् तत्र समादाय साधयित्वा पृथक् पृथक्।। ८३
विमानस्योत्तरे पार्श्वे आवसत्थ्यं प्रकल्प्य च।
आघारं विधिवत्कृत्वा पुरुषसूक्तं सुहूयताम्।। ८४
विष्णुसूक्तं ततो जप्त्वा जयादीनपि होमयेत्।
यद्देवादींस्ततो हुत्वा पारमात्मिकमेव च।। ८५
होमं हुत्वा विधानेन व्याहृत्यन्तं पृथक् पृथक्।
सर्ववाद्यसमायुक्तं शकुनसूक्तसमन्वितम्।। ८६
ब्रह्मघोषसमायुक्तं जयशब्दसमन्वितम्।
देवस्य दक्षिणे स्थित्वा कुर्याच्चैवाक्षिमोचनम्।। ८७
वर्णञ्च वामहस्तेन आदाय विधिवद्बुधः।
तूलिकां दक्षिणेनोपान्ताङ्गुष्ठानामभिः शनैः।। ८८
श्यामवर्णं समादाय 'अतो देवा' दिमुच्चरन्।
अभिमन्त्र्य तु तद्वर्णं पुरुषसूक्तं समुच्चरन्।। ८९
ललाटादिषु सर्वत्र किञ्चिच्चाङ्गेषु सर्वतः।
योजयित्वा विधानेन देवेशं मनसा स्मरन्।। ९०

'भूतो भूते' ष्विति प्रोच्य मकुटादिषु सर्वतः।
यद्यद्वर्णञ्चाभरणं तत्तद्वर्णं सुयोजयेत्।। ९१

'तेजो वत्सव' इत्युक्त्वा वस्त्रेणैव सुयोजयेत्।
'नवो नव' इति वदन् नखे वर्णं सुयोजयेत्।। ९२

'सूर्योऽसी' ति जपित्वा तु
दक्षिणेऽक्षिण तु योजयेत्।
'चन्द्रोऽसी' ति च जप्त्वा तु
वामनेत्रे च योजयेत्।। ९३

'चित्रं देवे' ति चोक्त्वा तु हस्ते रक्तं तु योजयेत्।
काले शिल्पिनमाहूय वस्त्राभरणकुण्डलैः।। ९४

पूजयित्वा विशेषेण यजमानयुतो गुरुः।
देवस्य दक्षिणे पार्श्वे स्थित्वा चैवोत्तरामुखः।। ९५

शिल्पशास्त्रोक्तमार्गेण शिल्पिना लेखयेद्गुरुः।
यद्वर्णं यत्प्रदेशे तु तद्वर्णं तत्र चार्पयेत्।। ९६

षड्वर्णान् योजयित्वा तु यथार्हं सुविचिन्त्य च।
बिम्बस्य सर्वतः कुर्यात्सर्वाङ्गं सुमनोहरम्।। ९७

आचार्यः शिल्पिभिःसार्धं सदा शास्त्रं विचिन्त्य च।

## फलश्रुतिः

एवं यः कुरुते भक्त्या सर्वशान्तिकरं परम्।। ९८

स्थानाभिवृद्धिदञ्चैव ग्रामादीनाञ्च वर्धनम्।
राष्ट्राभिवृद्धिदञ्चैव राज्ञश्च बलवर्धनम्।। ९९

कर्ता निवसति स्वर्गे यावदाभूतसम्प्लवम्।
पश्चाद्विष्णुपदं याति पुनरावृत्तिवर्जितम्।। १००

विपरीते वैपरीत्यं भविष्यति न संशयः।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तं सर्वमाचरेत्।। १०१

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे मृत्संस्कारविधिर्नाम
त्रयोदशोऽध्यायः।

------

## अथ चतुर्दशोऽध्यायः

------

### प्रतिमालक्षणकथनम्-अङ्गुलादिसंज्ञाः

अतः परं प्रवक्ष्यामि प्रतिमानान्तु लक्षणम्।
मानोन्मानप्रमाणाद्यैः लक्षणं सम्प्रवक्ष्यते।। १

### मानाङ्गुलम्

अङ्गुलानां त्रिधोक्तानां लक्षणं वक्ष्यते पृथक्। २
अप्रत्यक्षघना नित्या अणवः परिकीर्तिताः।
अणुभ्यश्च तथाष्टभ्यो रथरेणुर्विनिश्चितः।। ३
अष्टभ्यो रथरेणुभ्यः केशाग्रमभिधीयते।
केशाग्रेभ्यस्तथाष्टभ्यो लिक्षा चेति विनिश्चितः।। ४
लिक्षाभ्यश्च तथाष्टभ्यो यूका चेति विनिश्चितः।
यूकाभ्यश्च तथाष्टभ्यो यवमध्यमुदाहृतम्।। ५
अष्टभ्यो यवमध्येभ्यो मानाङ्गुलमुदाहृतम्।

### देहलब्धाङ्गुलम्

चित्रेऽर्धचित्रे वाऽऽलेख्ये देहलब्धप्रमाणतः।। ६

यथेष्टं तद्विभज्येत शतं विंशतिसंयुतम्।
देहलब्धाङ्गुलन्त्वेतत् शास्त्रविद्भिरुदाहृतम्।। ७

## मात्राङ्गुलम्

मध्यमाङ्गुलिमध्यन्तु पर्व यन्मानमुच्यते। ८
उत्तमाधममध्यानामुत्तमाधममध्यमम्।
मात्राङ्गुलमिति प्रोक्तं पुरुषाणां विभागशः।। ९

## अङ्गुलसंज्ञापर्यायवाचकपदानि

अङ्गुलन्तु भवेन्मात्रं द्व्यङ्गुलं गोलकं भवेत्।
तदेव तु कला प्रोक्ता द्वे कले भाग उच्यते।। १०
अङ्गुलानां दश द्वे च यम इत्यभिधीयते।
द्वौ यमौ तत्र विद्वद्भिररत्निरिति कीर्तिता।। ११
रत्निः संवृतमुष्टिः स्यादरत्निः प्रसृताङ्गुलिः।

## चत्वारि मानानि

मानं प्रमाणमुन्मानमुपमानञ्च कथ्यते।। १२
ऊर्ध्वमानन्तु सर्वेषां भवेन्मानं हि देहिनाम्।
प्रत्यङ्गे यत्प्रमाणन्तु तत्प्रमाणमिहोच्यते।। १३
अङ्गानां यत्परीणाहमुन्मानमिदमुच्यते।
औपम्यं क्रियते भावे उपमानं तदुच्यते।। १४
उक्तं समस्तं संज्ञाभिः ज्ञात्वा कार्यं समाचरेत्।

## तालमानप्रकारः-शिरोदेशः

उत्सङ्गात्तपनीमध्यादन्तरन्तु प्रमाणतः।
द्वादशाङ्गुलञ्चयामः शिरसः परिकीर्तितः।। १६
कर्णापवर्तयोर्मध्ये विस्तारो द्वादशाङ्गुलम्।
शिरसस्तस्य संस्थानमायतं वृत्तमिष्यते।। १७
वृत्तमण्डलयोर्मध्ये तिर्यक् तत्तु दशाङ्गुलम्।
मध्ये केशान्तरं ज्ञेयमुत्सेधाच्चतुरङ्गुलम्।। १८
विंशत्यङ्गुलनिर्माणं केशान्तात् प्राक्तु पृष्ठयोः।
शिरोमध्यंतु विज्ञेयं भ्रमराञ्जनसन्निभम्।। १९
केशान्तं तत्र हन्वग्रादन्तरा द्वादशाङ्गुलम्।
तत्केशान्ताच्च यद्भागं नासामूलं द्विगोलकम्।। २०
शिरोमध्यन्तु विज्ञेयं मध्ये केशाद्दशाङ्गुलम्।
नवाङ्गुलप्रमाणेन स्यातां पार्श्वौ तु मध्यतः।। २१
मध्ये ज्ञेयं शिखामूलं समन्तात्परिकीर्तितम्।
सुसूक्ष्मा मूर्धजा ज्ञेयाश्चामराञ्जनसन्निभाः।। २२
आकेशात्तत्र हन्वग्रादन्तरं द्वादशाङ्गुलम्।
आकेशान्ताच्च यद्भागं नासामूलं द्विगोलकम्।। २३
नासामूलात्पुटौ स्यातां द्विकले परिकीर्तिते।
पुटार्धन्तु भवेन्मानं द्विगोलकसमन्वितम्।। २४

## नेत्रे

नासामूलसमत्वेन नेत्रे अप्यभिधीयताम्।
नेत्ररेखाभ्रुवोर्मध्ये उत्सेधो द्व्यङ्गुलं भवेत्।। २५
असङ्गतप्रमाणन्तु भवेदध्यर्धमङ्गुलम्।
तत ऊर्ध्वं तापनीमध्यर्धाङ्गुलमीरितम्।। २६

तत ऊर्ध्वं ललाटः स्यादध्यर्धद्व्यङ्गुल भवेत्।
(तत ऊर्ध्वं ललाटः स्यात्केशान्तं द्व्यङ्गुलं भवेत्) ।। २७
भ्रुवोस्तलस्य विस्तारो भवेदध्यर्धमङ्गुलम्।
पुरोगसन्धिपार्श्वानां नाहस्तत्र दशाङ्गुलम्।। २८
शङ्खायामं वामपक्षे द्विकला परिकीर्तिता।
अपाङ्गस्तस्य चोत्सेधः केशान्तात्त्र्यङ्गुलं भवेत्।। २९
द्व्यङ्गुलञ्चाक्षिपिण्डस्तु विस्तारायामतस्ततः।
आयामार्धमनी स्यातां (?) गोलकं द्वियवाधिकम्।। ३०
मात्रार्धं वर्ममध्यन्तु अधरञ्चोत्तरं तथा।
वर्मणो बहुलं ज्ञेयं यवमध्यप्रमाणतः।। ३१
षड्यवाः पक्ष्मणो ज्ञेया यवमध्ये प्रकीर्तिताः।
मध्यात्पार्श्वे क्षयो ज्ञेयश्चानुपूर्व्यात् क्षयो भवेत्।। ३२
चतुर्यवास्त्वधरे प्रोक्ता वक्ताच्चप्यधिकाः स्मृताः।
सङ्ख्य तु पक्ष्मणो ज्ञेया अशीतिः परिनिश्चिता।। ३३
अक्ष्णोरथान्तरं ज्ञेयं त्रिमात्रं परिकीर्तितम्।
करवीरान्तरं तत्र यवहीनं त्रियङ्गुलम्।। ३४
पञ्चमात्रं भवेद्दृष्ट्योरन्तरं परिकीर्तितम्।
आयामात्करवीरन्तु अर्धोत्तरयवं स्मृतम्।। ३५

## मण्डलानि

यवमध्यं भवेद्दृष्टिः ज्योतिर्भागो यवस्य तु।
कक्ष्यं पञ्चयवं प्रोक्तं श्वेतं तत्सुगुणं विदुः।। ३६
पक्ष्माणो मण्डलञ्चादौ द्वितीयं श्वेतमण्डलम्।
तृतीयं मण्डलं कृष्णं चतुर्थं दृष्टिमण्डलम्।। ३७

पञ्चमन्तु भवेज्ज्योतिः विभागानयने स्मृतम्।

## त्रिविधा दृष्टिः

दर्शने चक्षुषोर्भेदस्त्रिविधः परिकीर्तितः।। ३८
अधश्चोर्ध्वं समञ्चेति चान्तरे बहवस्तथा।
ऊर्ध्वे सप्त यवाः प्रोक्तास्समे पञ्चयवाः स्मृताः।। ३९
अधस्तात्त्रियवाः प्रोक्ताश्चान्ते भेदो न विद्यते।
रोषे भये च युक्ते तु प्रमाणं त्रियवं भवेत्।। ४०
एकमात्रयवाधिक्यं सन्देहे नात्र विद्यते।
नेत्रमूलं भ्रुवोर्मूलमुत्सेधादर्धमङ्गुलम्।। ४१
भ्रुवोर्मूलान्तरं ज्ञेयं मात्रार्धन्तु प्रमाणतः।
भ्रुवोर्मध्यन्तु विस्तारात् द्व्यर्धं यवमुदाहृतम्।। ४२
पूर्वं चान्ते तनू स्यातामन्ते कौटिल्यमुच्यते।
अष्टाङ्गुलप्रमाणन्तु भ्रुवः कृष्णञ्च गौलकम्।। ४३
पूर्वं चान्ते तनू स्यातामन्ते कौटिल्यमुच्यते।
रोषे भयेऽपि चैकैकं भवेदर्धाङ्गुलोच्छ्रितम् ।। ४४

## नासा

अध्यर्धद्व्यङ्गुलं प्रोक्तं विस्तारो नासिकापुटे।
ऊषेवं ? तत्र नासाग्रं गोजीमूलप्रमाणकम्।। ४५
अध्यर्धमङ्गुलं ज्ञेयमुत्तमञ्चाभिधीयते।
प्रमाणादधिकं तत्र नासाग्रं द्वियवं भवेत्।। ४६
अग्रनासा दशयवा विस्तृता परिकीर्तिता।
विस्तारो मध्यनासाया यवास्सप्त प्रमाणतः।। ४७

विस्तारस्य च मूलन्तु त्रियवं समुदाहृतम्।
अङ्गुलन्तु यवाधिक्यं पुटायामप्रमाणतः।। ४८
पुटोत्सेधप्रमाणन्तु यवहीनाङ्गुलं भवेत्।
द्व्यङ्गुलन्तु पुटात्पार्श्वे निर्गता नासिका भवेत्।। ४९
बाहुल्यन्तु पुटं तत्र अर्धाधिकयवं भवेत्।
आयाममङ्गुलं स्रोतो विस्तारादर्धमङ्गुलम्।। ५०
स्रोतोऽन्तरमथायामः षड्यवाः परिकीर्तिताः।
विस्तारो द्व्यङ्गुलं प्रोक्तस्त्वधः क्षिप्तं भवेत्ततः।। ५१
तदधस्ताद्यवा गोजी आयामस्सप्त उच्यते।

## ओष्ठौ

ऊर्ध्वं क्षिप्ता त्वधः स्थूला विस्तारात् द्वियवा भवेत्।। ५२
अधस्तादुत्तरा पाली विस्ताराद्यव एव तु।
उत्सेधादुत्तरोष्ठस्य प्रमाणं द्वियवं भवेत्।। ५३
उन्नतं गोजिपार्श्वन्तु क्षिप्तं सृक्काश्रितं ततः।
उत्तरोष्ठस्य संस्थानं पाली तस्याकृतिर्भवेत्।।
उद्गमञ्चोत्तरोष्ठस्य प्रमाणञ्चाङ्गुलं भवेत्।
अधरात्तस्य पाली च यवमित्यमिधीयते।। ५५
तस्य वृत्तं भवेत्तिर्यक् गोलकार्धाङ्गुलान्वितम्।
निम्नमीषद्भवेन्मध्यं क्षिप्रं सृक्काश्रितं ततः।। ५६
रक्तभागमिति प्रोक्तं प्रवालसदृशं भवेत्।
उद्गमस्त्वधरोष्ठस्य अङ्गुलार्धाङ्गुलान्वितम्।। ५७
भागे सिते च विज्ञेयं क्रमेण परिवर्जयेत्।
प्रमाणमधिकं ज्ञेयं षड्यवाः परिकीर्तिताः।। ५८

निम्नमीषत्ततः सृक्का श्मश्रुरेखाविभूषिता।

## दन्ताः

तिर्यक्चतुर्यवाः प्रोक्ता दन्ताः पञ्चोच्छिताः पुरः।। ५९
शेषाणामुपदन्तानां विस्तारः त्रियवं स्मृतम्।
चतुर्यवोच्छ्यस्तेषां दंष्ट्रोत्सेधो यवाधिकः।। ६०
विस्ताराादधरा दन्ताः त्रियवाश्चतुरुच्छ्याः।
उत्सेधादधरा दंष्ट्राः यवैस्समधिकास्स्मृताः।। ६१
हानव्यास्त्रियवोत्सेधा विस्ताराद्वाचतुर्यवाः।
मध्ये दन्तस्थले ज्ञेया हानव्याश्च चतुर्यवाः।। ६२
सप्ताङ्गुलपरीणाहं मानतो दन्तबन्धनम्।
अधरे दन्तमानन्तु षडङ्गुलमिति स्मृतम्।। ६३
शुद्धाः स्निग्धा समाः शुक्लाः पूजिताश्च निरन्तराः।
द्वात्रिंशत्परिमाणेन अधरोत्तरयोः स्मृताः।। ६४

## जिह्वा

विस्तारात्त्यङ्गुला जिह्वा आयामाच्चतुरङ्गुला।
दन्तमूलञ्च तालुश्च जिह्वा रक्ताधरं तथा।। ६५
ओष्ठादधस्ताच्चिबुकं विस्तारं द्वियवं भवेत्।

## हनू

हनूत्सेधेऽङ्गुलं तत्र त्रियवादधिकं स्मृतम्।। ६६
तिर्यक् त्रियङ्गुलं तस्य हनुपिण्डमिति स्मृतम्।
आयामानुगतं ज्ञेयं हन्वग्रात्सप्त चाङ्गुलम्।। ६७

तिर्यग्घ्नयोस्तयोर्मध्ये अन्तरं द्वयङ्गुलं भवेत्।

## गलम्

अङ्गुलं गलवृत्तञ्च तस्य वृत्तं प्रशस्यते।। ६८
अनिम्नं मांसलं वृत्तं मुखरेखाविभूषितम्।

## मुखम्

हनुश्च गलवृत्तञ्च गण्डशीरलवत्कृतम् (?)।। ६९
ललाटं नासामूलञ्च ओष्ठस्तु त्रिकलः स्मृतः।
अपाङ्गमङ्गुलं ज्ञेयं विस्तारात्परिकीर्तितम्।। ७०
अपाङ्गे कर्णमूलन्तु अन्तरन्तु द्विगोलकम्।
पञ्चाङ्गुला तथा रेखा कृष्णमूला ततो भवेत्।। ७१
सभ्रूसेधसमः प्रोक्तः कर्णोत्सेधः प्रमाणतः।
विजूषावङ्गुलौ ज्ञेयौ विस्तारादर्धमङ्गुलम्।। ७२
विजूषावर्तयोर्मध्ये विस्तारस्त्र्यङ्गुलं भवेत्।
पिप्पल्यावर्तयोर्मध्ये कर्णोत्सेधं द्विगोलकम् ।। ७३
अधस्तात्पिप्पली ज्ञेया आयामादङ्गुलं भवेत्।
निम्नमर्धाङ्गुलं ज्ञेयं कर्णमध्यप्रमाणतः।। ७४
उत्सेधः त्र्यङ्गुलस्तस्य विस्तारादङ्गुलं भवेत्।
अर्धाङ्गुलं भवेत् स्रोतो विस्तारायामतस्ततः।। ७५
पूर्वं नालस्य बाहुल्यं यवद्वयमुदाहृतम्।
अध्यर्धद्वियवं प्रोक्तमूर्ध्वावर्तप्रमाणतः।। ७६
मध्यमं द्वियवं ज्ञेयं सर्वतस्समुदाहृतम्।
बाहुल्यन्तु ततः प्रोक्तमर्धाङ्गुलमिति स्मृतम्।। ७७

पूर्वं नालस्य बाहुल्यं यवद्वयमुदाहृतम्।
विस्तारस्तस्य विज्ञेयमर्धाङ्गुलमिहोच्यते।। ७८
बाहुल्यन्तु यवं प्रोक्तं मध्यनालात्तु मानतः।
विस्तारस्तस्य विज्ञेयो यवाः पञ्च इति स्मृताः।। ७९
पृष्ठनालस्य मानन्तु ईषत् क्षिप्तं भवेत्ततः।
नाललम्बमिति प्रोक्तं भवेत्तस्य द्विगोलकम्।। ८०
नालयोरन्तरं तत्र त्रियवोनाङ्गुलं विदुः।
अध्यर्धमङ्गुलं ज्ञेयं कर्णबन्धप्रमाणतः।। ८१
अध्यर्धमङ्गुलं तस्य विस्तारः परिकीर्तितः।
उत्सेधात्कर्णबन्धे स्याद्वृत्तञ्चैवाङ्गुलं भवेत्।। ८२
निर्गमान्मध्यकर्णन्तु गूहादध्यर्धमङ्गुलम्।
षट्कलन्तु भवेन्नाहमन्तरं कर्णपृष्ठयोः।। ८३
कला कृकाटिका ज्ञेया ग्रीवापृष्ठञ्च सम्मतम्।
ककुदं त्र्यङ्गुलं प्रोक्तं ग्रीवाधस्तात्तु मानतः।। ८४
हिक्का गलात्तयोर्मध्ये ग्रीवोत्सेधो द्विगोलकम्।
पञ्चविंशत्परीणाहमधिकार्धाङ्गुलान्वितम्।। ८५
शिरोधरा भवेत्तत्र त्रिरेखापरिमण्डिता।
रेखाणामन्तरं तत्र अङ्गुलं त्रियवान्वितम्।। ८६
हिक्का च द्व्यङ्गुला ज्ञेया विस्तारायामतस्ततः।

## जतृणी

आयामाज्जतृणी ज्ञेये हिक्काधोष्टाङ्गुला स्मृता।। ८७
अंसमध्यन्तु हिक्कान्तं तिर्यक्सूत्रसमो भवेत्।

## उरः

उरो द्वियवविस्तारादंससन्ध्यन्तरं भवेत्।। ८८

हिक्काहृदययोर्मध्ये उरस्स्याद्वादशाङ्गुलम्।
उरोमध्यमिति ज्ञेयं हिक्काधस्तान्नवाङ्गुलम्।। ८९

नाभीहृदययोर्मध्ये अन्तरं द्वादशाङ्गुलम्।
नाभेस्स्यान्मेढमूलस्य चान्तरं द्वादशाङ्गुलम्।। ९०

उरोमध्यमिति ज्ञेयं हिक्काधस्तान्नवाङ्गुलम्।
द्वादशाङ्गुलविस्तीर्णमुरोमध्यं स्तनान्तरम्।। ९१

तन्मध्ये तु च हिक्काया अन्तरन्तु प्रमाणतः।
एकादशाङ्गुलं ज्ञेयमधिकार्धाङ्गुलान्वितम्।। ९२

अध्यर्धमङ्गुलं ज्ञेयं स्तनमण्डलमानतः।
चूचुकस्य प्रमाणं स्यात्तन्मध्ये द्वियवान्तरम्।। ९३

कक्षयोरन्तरं तिर्यगुरो द्वाविंशदङ्गुलम्।
उरसस्स्तनपीठस्य कक्षान्तं द्वादशाङ्गुलम्।। ९४

स्तनपार्श्वे तु विज्ञेयं स्तनपीठं त्रियङ्गुलम्।
हृदयेऽर्धं भवेत्क्रोडं निम्नमीषत्सुपूजितम्।। ९५

उरस्समुन्नतं वृत्तमुपदिग्धं सुपूजितम्।
श्रोण्या अर्धं भवेत्कुक्षिः विस्तारो द्वादशाङ्गुलम्।। ९६

## अङ्गुल्यः-करयोः

नवाङ्गुलं करतलं तिर्यक् पञ्चाङ्गुलं भवेत्।
मध्यमाङ्गुलमायामः पञ्चाङ्गुलमिहोच्यते।। ९७

मध्यप्रदेशिनी रिक्ता भवेत्तस्य चतुर्यवम्।
मध्यादनामिका रिक्ता भवेत्तस्य चतुर्यवम्।। ९८

अनामिका कनिष्ठा तु रिक्ता चाङ्गुलमेव च।
अङ्गुष्ठस्य चतुर्मात्रमायामः परिकीर्तितः।। ९९

अङ्गुष्ठस्य भवेत्तत्र क्षिप्तमङ्गुलपार्श्वतः।
अधः प्रदेशिनीमूलाद्विस्तारो द्वियवं भवेत्।। १००
प्रदेशिन्या मध्यमाया द्वयोर्मूलं समं भवेत्।
नीचैरनामिकाबन्धं मध्यमं द्वियवं भवेत्।। १०१
नीचैरनामिकाबन्धात् कनिष्ठायाश्चतुर्यवम्।

## करतलम्

तलपार्श्वे कनिष्ठाया मणिबन्धप्रमाणतः।। १०२
पञ्चाङ्गुलं भवेत्तत्र आयामः परिकीर्त्तितः।
शुकोदरस्य विस्तारस्तलमध्यं त्रियङ्गुलम्।। १०३
व्यङ्गुलन्तु भवेत्तिर्यक् तलपार्ष्णी शुकोदरौ।
द्व्यङ्गुलं तलमध्ये तु विस्तारायामतस्ततः।। १०४
आयतञ्चोन्नतं वृत्तं हृदयं स्याद्द्वियङ्गुलम् ?।
समद्विपर्व विज्ञेयं शिरस्तत्र नवाङ्गुलम्।। १०५
बाहुमध्यपरीणाहो भवेदष्टादशाङ्गुलम्।

## श्रोणी

श्रोणीबन्धो भवेत् स्फूर्तः अन्तरं द्वादशाङ्गुलम्।। १०६
अष्टाङ्गुलमिति ज्ञेयं विस्तारायामतस्ततः।
उन्नतौ संहतौ चापि स्फिक्पिण्डौ च सुपूजितौ।। १०७
ऊर्वोस्स्यादन्तरं तिर्यक् सीवनी त्र्यङ्गुला स्मृता।

## हस्तौ

अत ऊर्ध्वं प्रवक्ष्यामि हस्तमानं द्विजोत्तमाः।। १०८

अंसग्रीवान्तरं तत्र स्कन्धायामो द्विगोलकः।
कोर्परस्यां ससन्धेश्च अन्तरन्तु प्रमाणतः।। १०९

बाहुरायामतो ज्ञेयः एकादशकलो भवेत्।
तलकोर्परयोर्मध्ये प्रमाणं परिकीर्तितम्।। ११०

ज्ञेयो नवकलायामः प्रकोष्ठः परिकीर्तितः।
उच्छ्यो बाहुशिरसस्सन्ध्योर्गोलकसम्मितः।। १११

कक्षाद्बाहुशिरोमध्यमायामस्तु नवाङ्गुलम्।
बाहुमूलपरीणाहो भवेदष्टादशाङ्गुलम्।। ११२

उच्छ्यः पुष्कलो बाहुः पिचुकावंसपीठयोः।
नाहः प्रबाहुमूलस्य भवेत्पञ्चदशाङ्गुलम्।। ११३

मणिबन्धस्य नाहस्स्यात्समात्रार्धं दशाङ्गुलम्।
ततो वै बाहुसंस्थानं पुरस्तादीषदायतम्।। ११४

## कुक्षिः

नाभेरधो भवेत्कुक्षिरायामेनैव षट्कलः।
अधस्तान्मेहनात्पीठस्यायामश्चतुरङ्गुलम्।। ११५

ऊर्ध्वमूला भवेच्छोणी चोर्ध्वमष्टाङ्गुलं स्मृतम्।

## कटिः

नाभेरधस्तात् कुक्षिस्स्यात् कटिमध्यमिति स्मृतम्।। ११६

कटीतटस्य विस्तारो भवेद्विंशतिरङ्गुलम्।
पूजिता तु कटी प्रोक्ता सुवृत्ता चायता शुभा।। ११७

## नाभिः

नाभिरर्धाङ्गुलं निम्ना सर्वतस्समुदाहृता।
नाभेरधो द्विमात्रन्तु वस्त्रपर्यन्तमुच्यते।। ११८

द्विकलोर्ध्वं भवेन्नाभेस्स्तनमध्यमिति स्मृतम्।
तिर्यगष्टौ कला मध्ये त्रिगुणः परिणाहतः।। ११९
वलीभ्यां सहिता ज्ञेया ताभ्यां रम्या कटी भवेत्।
निषण्णस्योदरायामो द्व्यङ्गुलं लुप्यते पुनः।। १२०
आसनस्य प्रभेदाद्वा द्विचत्वारिंशदङ्गुलम्।
विस्तारो मेहनापीठं षडङ्गुलमिति स्मृतम्।। १२१

## मेढम्

मेढ्रं पञ्चाङ्गुलायाममुन्मानं स्यात् षडङ्गुलम्।
आयामात्कर्णिका ज्ञेया भवेदध्यर्धमङ्गुलम्।। १२२
सप्ताङ्गुलपरीणाहस्तस्यैव परिकीर्तितः।
आयामेन भवेत् स्रोतश्चतुर्यवमिति स्मृतम्।। १२३
एकमात्रं भवेदग्रमायामात्परिकीर्तितम्।

## मुष्कौ

मुष्कौ पञ्चाङ्गुलालम्बावधिकार्धाङ्गुलान्वितौ।। १२४
अध्यर्धद्व्यङ्गुलोत्संधौ विस्तारस्य फलं भवेत्।
संयतौ च सुवृत्तौ च आयतौ च सुपूजितौ।। १२५
आयामात्सवनी ज्ञेया मुष्कसन्धिः द्विगोलकम्।

## पायुः

द्वियङ्गुलं भवेत्पायुः विस्तारायामतस्ततः।। १२६
अष्टाशाङ्गुलं पश्चात् श्रोणीकक्षान्तरं भवेत्।
पुरतो बाहुमूलं स्यात् पृष्ठं तत्र दशाङ्गुलम्।। १२७

## पृष्ठम्

पृष्ठमानं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः।
ककुदश्श्रोणिमध्ये तु मध्ये वंश इति स्मृतम्।। १२८
पञ्चादशकलायामो वंश इत्यभिधीयते।
विस्तारात् द्व्यङ्गुलं निम्नं मध्ये वंशस्य पूजितम्।। १२९
कक्षयोरन्तरं तस्य चतुर्विंशाङ्गुलं भवेत्।
ककुदः पालिकाग्रन्तु अन्तरञ्चतुरङ्गुलम्।। १३०
त्रियवाकृतिसंस्थाने फलके परिकीर्तिते।
अथांसफलके स्यातामायामेऽष्टाङ्गुले स्मृते।। १३१
कक्षं तिर्यक् भवेत्तत्र अष्टाङ्गुलसमन्वितम्।
पृष्ठीफलकयोर्मध्ये तिर्यगष्टाङ्गुलं भवेत्।। १३२
कक्षादूर्ध्वं भवेत्तस्य अङ्गुष्ठस्य समन्ततः।
अङ्गुलीनां तु सर्वासां समं पर्वद्वयं भवेत्।। १३३
आङ्गुलीनान्तु चोन्मानं मूलमग्रं तथैव च।

## अङ्गुल्यः

मध्यमाङ्गुलकोन्मानं यवास्सप्त त्रियङ्गुलम्।। १३४
अग्रन्तु व्यङ्गुलं प्रोक्तं यवैः पञ्चभिरन्वितम्।
षड्यवन्तु नखायामं विस्तारेण चतुर्यवम्।। १३५
नानाप्रदेशिनीं ज्ञेयं त्रिमात्रं षड्यवाधिकम्।
अग्रं द्वियङ्गुलं प्रोक्तं यवाधिकसमन्वितम्।। १३६
नखायामः प्रदेशिन्या यवाः पञ्चेति च स्मृंताः।
अनामिकाया उन्मानं त्रिमात्रं षड्यवाधिकम्।। १३७

अग्रमानं भवेत्तत्र द्व्यङ्गुलन्तु यवान्वितम्।
यवाः पञ्च नखायामः अध्यर्धन्तु यवत्रयम्।। १३८

कनिष्ठा त्र्यङ्गुला ज्ञेया नाहश्चतुर्यवान्वितः।
चतुर्यवो नखायामः विस्तारस्त्रियवं स्मृतम्।। २३९

अङ्गुष्ठमूलमुन्मानं त्रिमात्रसप्तयवान्वितम्।
अग्रं द्विगोलकं ज्ञेयं समन्तात्परिकीर्तितम्।। २४०

अङ्गुष्ठस्य नखायामो यवास्सप्त प्रकीर्तिताः।
विस्तारेण यवाः पञ्च सर्वतस्समुदाहृताः।। २४१

आनुपूर्व्यात् सुवृत्तास्स्युः अङ्गुल्यः श्लिष्टबन्धनाः।
नखास्सुतनुमात्राश्च मांसभग्नास्सुपूजिताः।। १४२

आयामात्तलपृष्ठन्तु द्विगोलकमिति स्मृतम्।
पृष्ठतोऽङ्गुलिपार्श्वेभ्यः पूर्वेभ्यस्तु पृथक् पृथक्।। १४३

अग्रं द्विगोलकं ज्ञेयं समन्तात्परिकीर्तितम्।
त्रिभागोने भवेतां द्वे द्वे चाङ्गुल्यग्रपर्वणी।। १४४

तलपार्श्वे भवेत्पार्ष्णी बाहुल्यात्त्यंगुली भवेत्।
मांसलं कूर्मपृष्ठन्तु मध्ये निम्नं तलं शुभम्।। १४५

स्पष्टाभिर्मृदुवर्णाभिर्लेखाभिश्चित्रितो भवेत्।
तनुताम्रैर्नखैः स्निग्धैः प्रदीर्घाः श्लिष्टसन्धयः।
यवसन्धानवृद्धिश्च प्रशस्ताङ्गुलयस्स्मृताः (?) ।। १४६

## पादौ-ऊरू

अतः परं प्रवक्ष्यामि पादमानं पृथग्विभोः।
ऊरुमूलमधो नाभेः दशाङ्गुलमिति स्मृतम्।। २४७

जानुमध्यादधस्तात्तु सन्धेश्चैवोत्तरं भवेत्।
ऊरू आयामतो ज्ञेयौ कोलकानि त्रयोदश।। १४८

जानुमध्यस्य गुल्फस्य अन्तरन्तु तयोस्ततः।

## जङ्घा

त्रयोदशकला ज्ञेया जङ्घाऽऽयामप्रमाणतः।। १४९
जङ्घोर्वोस्सङ्गमो जानु मध्ये चैव प्रकीर्तितम्।

## जानु

द्विकलं तत्र जानु स्याद्विस्तारोऽध्यर्धगोलकम्।। १५०
प्रच्छन्नञ्चोन्नतञ्चेति जानु तत्र प्रशस्यते।

## गुल्फौ

विस्तारो गोलकं गुल्फाद् गुल्फं वृत्तं प्रशस्यते।। २५१
पुरस्तादुन्नतञ्चोरुरुत्कृष्टश्च भवेत्ततः।

## सामान्यतः

सुश्लिष्टौ जानुगुल्फौ च ऊरू करिकरोपमौ।। १५२
वृत्तौ चैवोन्नतौ पिण्डौ ऋजुसङ्गात्पुरस्ततः।
उन्मानादूरुमूलन्तु षट्त्रिंशाङ्गुलमिष्यते।। १५३
ऊरुमध्यस्य चोन्मानं भवेदष्टादशाङ्गुलम्।
जङ्घापीठेऽपि चोन्मानं भवेदष्टादशाङ्गुलम्।। १५५
गुल्फादूर्ध्वं भवेज्जङ्घा चोन्मानन्तु दशाङ्गुलम्।
आयामात्तलसन्धिश्च पञ्चाङ्गुलमिहोच्यते।। १५६
अक्षाधस्तात्तलोत्सेधः प्रमाणं चतुरङ्गुलम्।
अक्षात्पीठं भवेत्पार्ष्णिः द्विगोलकसमन्वितम्।। १५७

## अङ्गुलिबन्धः

अक्षात् स्यादङ्गुलीबन्धस्तथा चाष्टाङ्गुलायतः।
अङ्गुष्ठः द्विकलायामः द्विपर्वसहितो भवेत्।। १५८
अङ्गुलीनान्तु विज्ञेयास्त्रिपर्वसहिता यदि।
तलपृष्ठं भवेत्तत्र पञ्चाङ्गुलसमुन्नतम्।। १५९
अङ्गुष्ठमूलपर्यन्तमुत्सेधस्तु त्रियङ्गुलम्।
द्विपर्वणोर्भवेन्मध्यमुच्छ्रयो द्व्यङ्गुलं भवेत्।। १६०
आयामस्तस्य विज्ञेयमङ्गुलं त्रियवाधिकम्।

## नखानि

अग्रपर्वान्नखान्मूलमङ्गुलं द्वियवाधिकम्।। १६१
नखायाममिति प्रोक्तं यवाः पञ्च प्रमाणतः।
तिर्यक् सप्तयवायामं समं तत्र नखाः शुभाः।। १६२
नखादग्रं भवेत्तत्र षड्यवाः परिकीर्तिताः।
अङ्गुष्ठमध्यमुन्मानं त्रियवं पञ्चाङ्गुलान्वितम्।। १६३
आयामात् द्विकला ज्ञेया प्रदेशिनी त्रियवाधिका।
आयामान्मूलपर्यन्तं व्यङ्गुलं परिकीर्तितम्।। १६४
तस्यैव मध्यमं पर्व अङ्गुलं परिचक्षते।
अग्रपर्वनखान्मूलमर्धाङ्गुलमिति स्मृतम्।। १६५
आद्यामस्त्रियवं प्रोक्तं तिर्यक् पञ्चयवो नखः।
चतुर्यवोन्नतं तत्र प्रमाणं परिकीर्तितम्।। १६६
अग्राङ्गुल्याश्च उन्मानं द्विकला त्रियवाधिका।
मध्यपर्वण उन्मानं द्व्यङ्गुलं त्रियवाधिकम्।। १६७

मध्यमाङ्गुलिकायामं द्विगोलकमिति स्मृतम्।
आयामान्मूलपर्यन्तं यवहीनं त्रियङ्गुलम्।। १६८
मध्यपर्व भवेत्तस्य यवहीनं त्रियङ्गुलम्।
मध्यपर्वनखान्मूलमन्तरञ्च चतुर्यवम्।। १६६
नखादग्रं भवेत्तत्र त्रियवं समुदाहृतम्।
अग्राङ्गुल्यास्तथोन्मानं द्वियङ्गुलं षड्यवाधिकम्।। १७०
मध्यपर्वण उन्मानं त्र्यङ्गुलं समुदाहृतम्।
ज्ञेयस्त्वनामिकायामश्चाध्यर्धत्र्यङ्गुलं भवेत्।। १७१
मूलपर्व भवेद्यत्तु यवहीनं त्रियङ्गुलम्।
मध्यपर्व भवेत्तस्य यवहीनाङ्गुलं तथा।। १७२
अग्रपर्वान्नखान्मूलमध्यर्धद्वियवो नखः।
अध्यर्धद्वियवो ज्ञेयः नखस्तिर्यक् त्रयो यवाः।। १७३
नखादग्रं भवेत्तस्य द्वियवं समुदाहृतम्।
अग्राङ्गुल्यास्तथोन्मान द्वयङ्गुलं द्वियवाधिकम्।। १७४
मध्यपर्वण उन्मानं त्र्यङ्गुलं परिकीर्तितम्।
नाहो द्वियङ्गुलं मध्यं यवाः पञ्चाधिकान्विताः।। १७५
आयामस्तु कनिष्ठस्य अध्यर्धन्तु द्वियङ्गुलम्।
आयामान्मूलपर्वन्तु प्रमाणादङ्गुलं भवेत्।। १७६
अधिकार्धं भवेत्तस्य द्वियवं समुदाहृतम्।
अधिकार्धं यवाः पञ्च मध्यपर्वप्रमाणतः।। १७७
अग्रपर्वनखान्मूलं त्रियवं समुदाहृतम्।
अध्यर्धद्वियवं तत्र आयामाद् द्वियवा नखाः।। १७८
अधिकार्धयवं तत्र नखादग्रं प्रमाणतः।
अग्राङ्गुल्यास्तथोन्मानं द्व्यङ्गुलं द्वियवाधिकम्।। १७६

मध्यपर्वण उन्मानं द्व्यङ्गुलं परिकीर्तितम्।
प्रदेशिन्यङ्गुष्ठयोस्तिर्यगन्तरन्तु चतुर्यवम्।। १८०
अङ्गुष्ठात्तु प्रदेशिन्या आयामस्त्रियवो भवेत्।
चतुर्यव प्रदेशिन्या मध्यमाद्धानिरिष्यते।। १८१
षड्यव मध्यमाद्धानिरनाम्न्यास्तु प्रकीर्तितः।
अनाम्न्याः कनिष्ठिकायास्तु अङ्गुलन्तु प्रमाणतः।। १८२
अनाम्न्याः अङ्गुलं हानिः कनिष्ठा चोच्यते पुनः।
अङ्गुलीबन्धविस्तारः त्रिकलस्समुदाहृतः।। १८३
अधस्ततः प्रमाणन्तु पृथक् सर्वं ब्रवीमि वः।
पार्ष्णिः पञ्चाङ्गुलायामा विस्तारस्तावदेव तु।। १८४
त्रितलोग्रतलस्तिर्यगायामश्चतुरङ्गुलः।

## शिरोभागाः

मूर्धा चेत्पादयोर्मध्ये (?) निर्दिष्टश्च प्रमाणतः।। १८५
अखिलं ब्रह्मणोद्दिष्टं प्रदेशं शृणुत द्विजाः।
शिरसो मध्ये तत्रैव बिन्दुं समुपलक्षयेत्।। १८६
बिन्द्वग्रादप्युभौ पार्श्वे बिन्दुपिण्डौ विशेषतः।
कपालस्य समुद्गौ च शिरःपृष्ठे विनिर्दिशेत्।। १८७
बिन्द्वग्रात्पुरतश्चापि मूर्धा चेत्यभिधीयते।
पुरोगं मध्यकेशान्तं मूर्धा च पुरतो विदुः।। १८८
पुरोगसन्धिर्विज्ञेयः पुरोगः प्रयतस्ततः।
कर्णयो रुपरिष्टात्तु कर्णशष्कुलिकौ स्मृतौ।। १८९
केशान्तं मध्यकेशान्तमुक्षेपाद्वर्तते ततः।
तत्पार्श्वयो रुपक्षेपः कूर्चौ कर्णाश्रितौ विदुः।। १९०

## भ्रुवौ

भ्रुवोरुपरि पार्श्वे तु ऋषीके तु विनिर्दिशेत्।
ऋषीकाभ्यन्तरं तिर्यक् ललाटमुपलक्षयेत्।।　　　　१६१
तपनीमध्यमेऽधस्तात् भ्रूसङ्गमिति संस्थितम्।

## पक्ष्माणि

अक्षिप्रच्छादने त्वाहुः पक्ष्मणी चाधरोत्तरे।।　　　　१६२
पक्ष्मोपरि भवेत्तत्र भ्रुवस्तलमिति स्मृतम्।
भ्रुवोरग्रञ्च मध्यञ्च भ्रुवोः पुच्छं तथैव च।।　　　　१६३

## मण्डलानि

वर्म चाभ्यन्तरे ज्ञेयं पक्ष्म शुक्ले प्रमण्डलम्।
शुक्लमण्डलयोर्मध्ये ज्योतिर्मण्डलमिष्यते।।　　　　१६४
अपाङ्गावाधि चाक्ष्णोस्तु बाह्यतः परिकीर्तितम्।
प्रधावकरवीरौ च विज्ञेयावक्षिसंयुतौ।।　　　　१६५

## नासा

नासाग्रं नासिमूलञ्च नासामध्यं तथैव च।
स्रोतस्रोतोन्तरञ्चैव पार्श्वे नासापुटौ विदुः।।　१६६

## ओष्ठौ

उत्तरोष्ठञ्च गोजी च गोजीपार्श्वं तथैव च।
अधरोष्ठञ्च सृक्का च उत्तरा पालिरेव च।।　　　　१६७
अधस्ताच्चाधरौष्ठस्य चिबुकं परिकीर्तितम्।
अधस्ताच्चिबुकस्यापि हनुमध्यं विनिर्दिशेत्।।　　　　१६८

## दन्ताः-दंष्टाः

पुरोदन्ताश्च चत्वारः चत्वारश्चाधरोत्तराः।
तेषां पार्श्वे च दंष्टास्स्युश्चतस्रोऽप्यधरोत्तराः।। १९९
पार्श्वे चैवोपदंष्टाश्च ऊर्ध्वदन्तस्थलं स्मृतम्।
अभ्यन्तरन्तु दन्तानां भवेद्दन्तावरोपणम्।। २००
दन्तमूलन्तु यो बन्धः विज्ञेयं दन्तवन्धनम्।

## हनुबन्धनम्

हन्वग्रे मूलबन्धांश्च निर्विशेद्धनुवन्धनम्।। २०१
जिह्वाग्रश्च पुरस्ताश्च जिह्वामूलनिबन्धनम्।
जिह्वामध्ये च पार्श्वे च कर्णनालनिबन्धनम्।। २०२

## तालुः

ताल्वग्रं तालुमध्यञ्च तालुपार्श्वञ्च निर्दिशेत्।
अभ्यन्तरकपोलञ्च विज्ञेयाश्चौष्ठसन्धयः।। २०३

## कपोलौ

सगदौ च गदाग्रौ च सन्धिदेशगतस्य च।
कपोलौ चाग्रपादौ च कर्णमूलौ विनिर्दिशेत्।। २०४
नेत्रपिण्डौ कपोलौ च गण्डपार्श्वे ततः परम्।
स्रोतसी मध्यकर्णौ च कर्णपिप्पलिके स्मृते।। २०५
आवर्तौ तत्र विजुषौ उत्साधौ तत्र नालकौ।
पूर्वनालञ्च मध्यञ्च पृष्ठनालं ततः परम्।। २०६
गूहात्तु कर्णपृष्ठौ च गूहं तत्र विनिर्दिशेत्।
ग्रीवाहन्वोस्तयोर्मध्ये निर्दिशेत्सगदान्तरम्।। २०७

## गलम्

तत्रैव तु गलं ज्ञेयं गलमन्तरमाश्रितम्।
स्कन्धौ हिक्कान्तरञ्चापि कर्णावप्युपलक्षयेत्।। २०८
पार्श्वयोः कर्णनालन्तु मध्ये तत्र विनिर्दिशेत्।
ककुदं कृकटी चैव पृष्ठं ग्रीवा ततः परम्।।

## जत्रुणी

कण्ठाधस्तात्ततश्चापि जतृणी परिकीर्तिते।
जत्रुमध्यं भवेत्तत्र हिक्कापार्श्वं ततः परम्।। २१०
हिक्काधस्तात्ततश्चापि वक्षोमध्यं विनिर्दिशेत्।
ककुदौ च निसन्धौ च ग्रीवायां पार्श्वतो मतौ।। २११
ककुदात्पार्श्वयोश्चापि जत्रुसन्धिः प्रकीर्तितः।
अधस्तादंसमध्यन्तु कक्षसूत्रादधो भवेत्।। २१२
ततः कक्षसुपार्श्वन्तु कक्षं समुपलक्षयेत्।

## क्रोडः-स्तनपीठम्

वक्षोमध्यादधस्तात्तु क्रोडं सम्यगुदाहृतम्।। २१३
उरोमध्यस्य पार्श्वे तु स्तनपीठं विनिर्दिशेत्।
स्तनपीठस्य पार्श्वे तु स्तनपिण्डौ च चूचुकौ।। २१४

## हृदयम्

क्रोडनाभ्यन्तरञ्चापि हृदयन्तु विदुर्बुधाः।
तनुमध्यञ्च पार्श्वे च नाभेरुपरि निर्दिशेत्।। २१५
नाभिपार्श्वे भवेत्कुक्षिकोष्ठं समुपलक्षयेत्।

## गुह्यस्थानानि

तथैव मेहनापीठं मेहनासन्धिरेव च।। २१६

स्रोतश्च कणिकश्चैव मेहनानि विनिर्दिशेत्।
श्रोण्यग्रे च कटीमध्ये कटिपार्श्वे ततः परम्।। २१७
मुष्कौ च मुष्कबन्धौ च मुष्कान्तरमथोच्यते।
पायुश्च सीवनी चैव मुष्कबन्धादथोच्यते।। २१८

## पृष्ठवंशः

ततः परं पृष्ठवंशं फलकादन्तरं भवेत्।
अथासफलके मूलमध्यमग्रं तथैव च।। २१९
ककुन्दरौ कटीसन्धी स्फिक्पिण्डौ चान्तरं भवेत्।
उभयोः पिण्डयोर्मध्ये पिण्डपार्श्वं ततः परम्।। २२०
स्फिक्पिण्डयोरधस्तात्तु पिण्डसन्धिं विनिर्दिशेत्।
ततः प्रभायाः पीठञ्च नखं नखशिखा भवेत्।। २२१
प्रदेशिनी चाग्रमूलं पृष्ठं समुपकल्पयेत्।

## कोर्परौ

कोर्परस्य बहिः सन्धिं कोर्परार्धं विनिर्दिशेत्।। २२२
पुरस्तान्मणिबन्धञ्च नखाग्रं परिकीर्तितम्।
तलपार्श्वे तलसन्धिं तलपृष्ठं विनिर्दिशेत्।। २२३

## बाहू

बाह्वोरुपरि विज्ञेयं समपीठं समुन्नतम्।
बाह्वोरभ्यन्तरं ज्ञेयं बाहुपिण्डमिति स्मृतम्।। २२४
बाहुपृष्ठञ्च पार्श्वञ्च कक्षपृष्ठं ततः परम्।
बाह्वोरधस्तात्कक्षञ्च बाहुसन्धिं विनिर्दिशेत्।। २२५

ततः प्रभायां वंशस्य पृष्ठं समुपलक्षयेत्।
कोर्परस्य बहिः सन्धी कोर्पराणि विनिर्दिशेत्।। २२६

पुरस्तान्मणिबन्धञ्च नखाग्रं परिकीर्तितम्।
तलपार्श्वे तलसन्धी तलपृष्ठं विनिर्दिशेत्।। २२७

तलमध्यश्च पार्ष्णी च अङ्गुष्ठानि शुकोदरम्।
क्षिप्रमङ्गुष्ठपार्श्वन्तु हृदयं तललेखतः।। २२८

अङ्गुष्ठाग्रञ्च मूलञ्च नखं नखशिखा भवेत्।
प्रदेशिनी चाग्रमूलमग्रं पर्व ततः परम्।। २२९

नखं नखशिखा चैव पृष्ठं पर्व ततो भवेत्।
मध्यमाङ्गुलिपर्वन्तु (?) अग्रं मध्यं विनिर्दिशेत्।। २३०

अनामिकाया अग्रन्तु मूलमग्रं विनिर्दिशेत्।
नखं नखशिखा चैव पृष्ठं पर्व ततः परम्।। २३१

कनिष्ठामध्यमं मूलमग्रं पर्व ततः परम्।
नखं नखशिखा चैव पृष्ठपार्श्वे ततो भवेत्।। २३२

तललेखायताञ्चैव लक्षयेदङ्गुलिं ततः।
अभ्यन्तरनिबद्धन्तु ऊरुमूलं विनिर्दिशेत्।। २३३

परुषञ्चोरुमूलार्धमूरुसन्धिं विनिर्दिशेत्।
नाभ्यन्तरोरुमूलाधः पाण्डुपिण्डौ च लक्षयेत्।। २३४

पाण्डुपिण्डौ पुरस्तात्तु ऊरुं समुपलक्षयेत्।
ऊरुमध्यात्तु पृष्ठन्तु शङ्कुलीत्यभिधीयते।। २३५

वक्तसन्धिर्भवेत्पार्श्वे ऊरुं समुपलक्षयेत्।
ऊरुमध्यादधस्तात्तु ऊर्वोरग्रं विनिर्दिशेत्।। २३६

अग्रादधस्ततश्चापि जानुनी परिकीर्तिते।
जानुमध्यञ्च पार्श्वे च ज्ञेये जानुकपालिके।। २३७

जघनं जानुसन्धेस्तु पृष्ठतश्च विनिर्दिशेत्।
जान्वधस्तात्ततश्चापि जङ्घे समुपलक्षिते।। २३८
पृष्ठसन्धेरधस्तात्तु जङ्घापिण्डे विनिर्दिशेत्।
जङ्घापिण्डे तु पार्श्वे तु इषीके परिकीर्तिते।। २३९
पिण्डाधस्तात्ततश्चापि ज्ञेयं पार्ष्णिशिरस्ततः।
जङ्घाधस्तात्ततश्चापि जङ्घामूलं विनिर्दिशेत्।। २४०
पार्ष्णिसन्धिस्ततोऽधस्तात् पार्ष्णिशीर्षं तथोच्यते।
तलसन्धेस्तु पार्श्वे तु तलाक्षं परिकीर्तितम्।। २४१
सन्ध्योरन्तरतो ज्ञेयं तलकूर्चमिति स्मृतम्।
तलपृष्ठं ततो ज्ञेयं प्रपदं परिकीर्तितम्।। २४२
मण्डलस्य तु विज्ञेयं मध्यमं तस्य तस्य तु।
पुरतस्तलमध्यस्य हृदयं परिकीर्तितम्।। २४३
पार्ष्णिमध्यं ततो विद्यादङ्गुष्ठं हृदयं ततः।
अङ्गुष्ठाग्रञ्च मूलञ्च नखं नखशिखा भवेत्।। २४४
पुरतस्तलमध्ये स्याद्धृदयं परिकीर्तितम्।
प्रदेशिनीमध्यमग्रं नखं नखशिखा विदुः।। २४५
मध्यमा मध्यमाग्रञ्च नखं नखशिखा तथा।
अनामिकाग्रमध्यञ्च नखं नखशिखा तथा।। २४६
कनिष्ठमग्रं मध्यञ्च नखं नखशिखा तथा।
प्रदेशिन्यङ्गुष्ठयोर्मध्ये शङ्कुलीत्यभिधीयते।। २४७
स्थावरा चेति विज्ञेयं दशाङ्गुल्यन्तरं ततः।
रक्तं सम्यक् प्रदेशानां विभागात्तत्र तद्भवः।। २४८
प्रदेशः सङ्ग्रहात् ज्ञेयः चतुश्शतं त्रिसप्ततिः।
व्याख्यातमानुपूर्व्येण विज्ञेयं शास्त्रकोविदैः।। २४९

नाशिष्याय च देयं स्यान्न चावर्षोषिताय च।
एवमेव विधानेन प्रतिमां सम्यगाचरेत्।। २५०
शिष्टं त्वाष्ट्रप्रयोगेण आचार्यः शिल्पिभिस्सह।
ऊहापोहेन वै कुर्याद्युक्तयुक्त्या च कारयेत्।
एवमेव विधानेन कारयेदिति शासनम्।। २५१

## परिषद्देवविचारः

सुपर्णस्य च वीशस्य इन्द्रादीनां यथाक्रमम्।
सर्वेषां परिवारणां भूतानाञ्च यथाक्रमम्।। २५२
उक्तकालं समालोक्य तत्तद्वर्णसमायुतम्।
शिल्पिभिः कृतपर्यन्तं (?) तत्तद्वाहनसंयुतम्।
तत्तद्देवीसमायुक्तं कारयेत्तु विधानतः।। २५३

## स्थाननवककल्पनम्

अतः परं प्रवक्ष्यामि नवस्थानविधिं क्रमात्।
ऋज्वागतन्तु विज्ञेयं पूर्वं तत्र प्रभाषितम्।। २५४
तथार्धज्यागतं ज्ञेयं साचीकृतमथोच्यते।
अध्यर्धाक्षं ततो ज्ञेयं पार्श्वागतमतः परम्।। २५५
ऋज्वागतपरावृत्तमर्धज्यागतमेव च।
साचीकृतपरावृत्तं अध्यर्धाक्षं ततः परम्।। २५६
नवेति वृत्तयो ज्ञेयाः विभागात् परिकीर्तिताः।
अन्योन्यापेक्षया तत्र वृत्तयस्तु पृथक् पृथक्।। २५७
ऋजवस्त्रिविधाः ज्ञेयाः विभागं शृणुतर्षयः।
ऋज्वागतपरावृत्तं पार्श्वागतमिहोच्यते।। २५८

उद्योतपरभागश्च इत्येते त्रिविधाः स्मृताः।

## (२) ऋज्वागतम्

ऋज्वागतं प्रवक्ष्यामि पूर्वं तत्र विनिर्गतम्।। २५९
हिक्काचरणयोर्मध्ये ऊर्ध्वं नाभेस्तथैव च।
एषां सूत्रनिविष्टानां भवेदृज्वागतं पुनः।। २६०
स्थितस्तत्रनिषण्णो वा तत्तु ऋज्वागतं भवेत्।
कर्णमूलाक्षयोः पार्श्वे वृत्तं तत्र त्रियङ्गुलम्।। २६१
कर्णयोरङ्गुली क्षीणा भवेत्कर्णौ निबन्धयेत्।
मानोन्मानौ समौ ज्ञेयौ पार्श्वे तत्र समन्ततः।। २६२
अङ्गानि सममालेख्य कर्तव्यं शास्त्रतो भवेत्।
एवमृज्वागतं ज्ञेयं वृत्तं तत्र विशेषतः।। २६३

## (२) अर्धज्यागतम्

अतः परं प्रवक्ष्यामि अर्धज्यागतमेव च।
कर्णमूलात् क्षयः कार्यः परभागाद्विगोलकम्।। २६४
अनुगण्डे ललाटे च कलार्धन्तु क्षयं नयेत्।
बाहूरसोश्च पार्श्वे च ऊरौ कट्योस्तथैव च।। २६५
हीनन्तु कोलकं सर्वं समन्तात्परिकीर्तितम्।
अर्धज्यागतमित्याहुः वृत्तं तत्र मनोहरम्।। २६६

## (३) साचीकृतम्

साचीकृतं प्रवक्ष्यामि यथावदनुपूर्वशः।
कर्णमूलात् क्षयः कार्यः परः पञ्चाङ्गुलान्वितः।। २३७

नेत्रे कपोले केशान्ते हनू कर्णौ तथैव च।
सर्वत्रापि क्षयं विद्यात् शरीरेऽपि क्षयं तथा।। २६८
संस्थानात् कक्षयोर्ज्ञेयं पञ्चाङ्गुलसमन्वितम्।
अविरोधेन कर्तव्यः प्रत्यङ्गेषु क्षयं तथा।। २६९

## (४) अध्यर्धाक्षम्

अध्यर्धाक्षन्तु विज्ञेयं शृणुध्वं तत्समासतः।
कर्णमूलात् क्षयः कार्यः परभागे त्रिगोलकम्।। २७०
भ्रुवोर्ललाटे नेत्रे च हनौ चापि तथैव च।
स्तनात् क्षयः क्षये ज्ञेयः षडङ्गुलमिति स्मृतम्।। २७१

## (५) पार्श्वागतपरावृत्तम्

पार्श्वमध्ये तु विज्ञेयं मध्यसूत्रं प्रतिष्ठितम्।
पार्श्वागतन्तु विज्ञेयं पार्श्वमेवागतं ततः।। २७२

## (६) ऋज्वागतपरावृत्तम्

प्रवक्ष्यामि यथा प्रोक्तं परावृत्तं समन्ततः।
पृष्ठमध्ये तु तं विद्यान्मध्यसूत्रं प्रतिष्ठितम्।। २७३
ऋज्वागतपरावृत्तमिति तद्वै प्रकीर्तितम्।

## (७) अर्धज्यागतपरावृत्तम्

अर्धज्यागतवृत्तं तत् क्षयं यच्चतुरङ्गुलम्।। २७४
अर्धज्यागतपूर्वन्तु परावृत्तमितीर्यते।

## (८) साचीकृतपरावृत्तम्

साचीकृतपरावृत्ते साचीकृतसमं क्षयम्।। २७५

## (९) अध्यर्धाक्षपरावृत्तम्

अध्यर्धाक्षपरावृत्ते अध्यर्धात् क्षयसङ्क्षयम्।
पार्श्वागतन्तु नवमे तेनैता वृत्तयः स्मृताः (?) ।। २७६
तासां नवानां वृत्तीनामन्योन्यान्तरसम्भवाः।
क्रमेण यवहीनांस्तु वृत्तिभेदांश्च लक्षयेत्।। २७७

## वृत्त्यन्तरणि

अष्ट वृत्यन्तराणिस्युः परावृत्तं समाश्रिताः।
अष्टौ तत्र परावृत्ता अर्धज्यागतमाश्रिताः।। २७८
साचीकृतपरावृत्तास्त्वष्टौ भेदाः प्रकीर्तिताः।
परावृत्ताः तथाऽष्टौ तु अध्यर्धाक्षसमाश्रिताः।। २७९
चतुष्षष्टिस्समाख्याता वृत्तिभेदास्समन्ततः।
वृत्त्यन्तराणि सूक्ष्माणि कर्तव्यानि पृथक् पृथक्।। २८०

## तासु व्यस्तमिश्रभेदः

व्यस्तं मिश्रमिति प्रोक्तं सर्वं द्विविधमुच्यते।
अनुक्तमानुपूर्व्येण सर्वतः परिकीर्त्यते।। २८१
उद्योतपरभागस्थं व्यस्तन्तु परिकीर्तितम्।
व्यस्तं तत्रैव विज्ञेयमध्यर्धाक्षमुदाहृतम्।। २८२
एते त्रयोऽपि विज्ञेयाः व्यस्ता वृत्तिविभागशः।
मिश्रं तस्य विभागन्तु शृणुध्वं मुनिसत्तमाः।। २८३
साचीकृतञ्चाध्यर्धाक्षमर्धज्यागतमेव च।
तत्र ता मिश्रिताः प्रोक्ता ऋज्वागतसमाश्रिताः।। २८४
ऋज्वागतं वा विज्ञेयं साचीकृतमथोच्यते।
अध्यर्धाक्षं भवेद्व्यस्तं पार्श्वागतमतः परम्।। २८५

शिरसा मिश्रिताः प्रोक्ता अर्धज्यागतमाश्रिताः।
चतस्रस्तास्तु विज्ञेया वृत्तयो मिश्रसंज्ञिताः।। २८६
पार्श्वागतं वा विज्ञेयमर्धज्यागतमेव वा।
अध्यर्धाक्षं परावृत्तं साचीकृतमतः परम्।। २८७
साचीकृतपरावृत्तं वृत्तयः परिकीर्तिताः।
शिरसा मिश्रिताः प्रोक्ताः पार्श्वागतसमाश्रिताः।। २८८
एते त्रयोऽपि विज्ञेया वृत्तयः परिकीर्तिताः।
उद्द्योतपरभागस्थं परावृत्तमथोच्यते।। २८९
अर्धज्यागतपृष्ठन्तु व्यस्तमित्यभिधीयते।
उद्द्योतपरभागस्थं परावृत्तमिहोच्यते।
साचीकृतपरावृत्तं मिश्रमित्यभिधीयते।। २९०
अध्यर्धाक्षपरावृत्तं साचीकृतपरोऽपि वा
अर्धज्यागतपृष्ठं वा वृत्तयः परिकीर्तिताः।। २९१
ऋज्वागतपरावृत्तं शिरसा मिश्रिताः स्मृताः।
एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।। २९२
साचीकृतपरावृत्ता अध्यर्धापरास्तथा।
ऋज्वागतपराश्चापि वृत्तयः परिकीर्तिताः।। २९३
शिरसा मिश्रिताः प्रोक्तास्साचीकृतपराश्रिताः।
एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।। २९४
पार्श्वागतञ्चाध्यर्धाक्षं साचीकृतपरन्तु वा।
अर्धज्यागतपृष्ठन्तु शिरसा मिश्रिताः स्मृताः।। २९५
एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।
अध्यर्धाक्षपरावृत्तं साचीकृतपरन्तु वा।। २९६

अर्धज्यागतपृष्ठन्तु वृत्तयः परिकीर्तिताः।
शिरसा मिश्रिताः प्रोक्ता अध्यर्धाक्षं समाश्रिताः।। २९७
एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।
पार्श्वागतञ्चाध्यर्धाक्षं साचीकृतपरन्तु वा।। २९८
अर्धज्यागतपृष्ठन्तु वृत्तयः परिकीर्तिताः।
शिरसा मिश्रिताः प्रोक्ता अध्यर्धाक्षं समाश्रिताः।। २९९
चतस्रस्तास्तु विज्ञेया वृत्तयस्स्युर्विभागशः।
एवं नवभ्यो वृत्तिभ्यः स्थानमन्यन्न विद्यते।। ३००
तिर्यक्ष्वपि च सर्वेषु विविधाकृतिजातिषु।
स्थावरेष्वपि सर्वेषु यज्ञसंज्ञान्वितेषु वै।। ३०१
आसनेषु च हर्म्येषु मण्डपेषु गृहेषु च।
शयनेष्वपि यानेषु शस्त्रादिषु च युक्तितः।। ३०२
विग्रहाणां प्रमाणेन मानोन्मानादिकल्पनम्।
अनुमानप्रमाणेन कुर्याद् वृत्तिं यथाक्रमम्।। ३०३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे भगवत्प्रतिमालक्षणकथनं नाम
चतुर्दशोऽध्यायः।

---------

अथ पञ्चदशोऽध्यायः

---------

## परिषद्देवतालक्षणम्

अतः परं पारिषद्यलक्षणं सम्प्रवक्ष्यते।
इन्द्रादीनां तथाऽन्येषां परिषद्वर्गगामिनाम्।। १

[........................।
नवार्धतालमानेन कुर्यात् बिंबं यथाक्रमम्।। २
हरः सस्यनिभः प्रोक्तस्सुवर्णाम्बरसंयुतः।
तेन भावेन कर्तव्यं वपुर्विष्णोरिव स्मृतम्।। ३
दशतालपरीणाहं नवतालादनन्तरम्।
तन्मध्यमं तदा ग्राह्यं दिव्यं संहननं समम्।। ४
अच्युतस्येवाभरणं ब्रह्मसूत्रं विना तथा।
श्रीवत्सं दिव्यचिह्नञ्च विना रूपं समाचरेत्।।] ५

## दिक्पालाः (इन्द्रः)

आसीनं द्विभुजं कुर्यादासने वज्रपाणिनम्।
स्थितं शच्या महिष्याऽस्य श्रेष्ठमासनमुच्यते।। ६
किरीटं मकुटं तस्य पार्श्वे वर्जितदण्डकम्।
हस्ते तु वज्रं कर्तव्यमासने चेन्निरायुधम्।। ७
इन्द्राणीं दक्षिणे कुर्याद्वामे च च्छन्दगां शुभाम्।
पद्मामिव तथेन्द्राणीमिलामिव च च्छन्दगाम्।। ८
पद्माभूमी यथा विष्णोरिन्द्रस्यैते मते तथा।
घृताच्यलम्बुके चापि कुर्याद्वि परिचारिके।। ९
लोमशञ्च त्रितञ्चैव पूजकौ तौ समर्चयेत्।
माञ्च पुण्यमिव स्थाने दक्षिणे वाम एव वा।। १०
घृताची श्यामवर्णा चालम्बुकोत्पलपत्रभा।
लोमशोऽञ्जनवर्णश्च त्रितो गोधूमसमप्रभः।। ११
पृथक् चेदालयं तस्य परिवारांस्तु कारयेत्।
निर्माल्यधारिणं वीरं रक्तोत्पलदलप्रभम्।। १२

गोपुरागारयोर्मध्ये स्थापयेद्वारणाधिपम्।
स्थापयेच्चापि पर्जन्यं महाशनिसमन्वितम्।। १३
पर्जन्यं श्यामवर्णञ्च सर्वलोकशुभावहम्।
वज्रस्थानसमायुक्तं रथस्थानसमन्वितम्।। १४

## अग्निः

अग्निं कुर्याद्यथान्यायं नवतालेन मानतः।
अग्निं किंशुकवर्णाभं प्रज्वलत्केशसंयुतम्।। १५
हयस्तु वाहनं तस्य रोहितो नाम नामतः।
शङ्खश्च शैषिकस्तस्य कुन्देन्दुसदृशप्रभः।। १६
स्वाहास्वधा उभे देव्यौ मुक्ताहेमनिभे सती।
शक्तिरस्यायुधं दिव्यं सर्वामरपुरोधसः।। १७

## यमः

कृष्णाम्बुदनिभं कुर्याच्छमनं दण्डपाणिनम्।
पाशं वामकरे कुर्याज्जानु च व्रणसंयुतम्।। १८
माता तेन परामृष्टा धात्री मातृसरूपिणी।
मातृशापात्ततः पादो दक्षिणो व्रणसंयुतः।। १९
सर्वाभरणसंयुक्तः कुशेशयविलोचनः।
देवी सत्यव्रता नाम सुता सा कृष्णवर्त्मनः।। २०
कुन्देन्दुसदृशाभा सा वर्णतः परिकीर्तिता।
मुनिः शङ्खिलको नाम पूजकः श्वेत उच्यते।। २१
महिषो वाहनं तस्य व्यालध्वजसमन्वितः।
शैषिकस्त्वचलो नाम यमस्य परिकीर्तितः।। २२

## निर्ऋतिः

त्रिणेत्रो निर्ऋतिर्नीलः शूलपाणिः द्विबाहुकः।
पत्नी च भञ्जनी नाम वर्णतस्सस्यसन्निभा।। २३
शैषिकः कलभो नाम किंशुकाभस्स उच्यते।
शार्दूलो वाहनं तस्य निर्ऋतेः समुदाहृतः।। २४

## वरुणः

वरुणो नीलवर्णश्च रक्ताम्बरधरः शुचिः।
दण्डपाशकरस्तस्य वाहनं गज उच्यते।। २५
शैषिकः पुण्यनामा च देवी च कनका मता।
कनका नाम शर्यातेः गन्धर्वस्य सुता मता।। २६
वरुणस्य प्रिया देवी सती कुन्देन्दुसप्रभा।
ध्वजः सिंहः समारव्यातो मुनिर्वत्सल उच्यते।। २७
. . . . . . . . . . . . . . . . . . . . . . . . . ।
सुप्रतीको बलाकाभो वत्सलोऽग्निसमप्रभः।। २८
सर्वाभरणसंयुक्तो देवो भोगेश्वरो वरः।

## वायुः

जवनश्चाच्छसङ्काशो वायू राजा महानकः।। २९
असिहस्तश्च तं कुर्याद्दिव्यं मकुटमुत्तमम्।
अञ्जना नाम तद्देवी वैदूर्यसदृशप्रभा।। ३०
अर्धासने च तां कुर्याद्वाहनं गज उच्यते।
शैषिको बलको नाम लोहिताक्षश्च शूलधृक्।। ३१

## कुबेरः

इन्द्रनीलनिभो वीरः पीताम्बरधरो युवा।
कार्यः कुबेरो यक्षेशः . . . . . . . . . . . ।। ३२

मकुटः पार्श्वको नाग आयुधं दण्ड उच्यते।
हंसयुक्तो रथस्तस्य वाहनं परिकीर्तितम्।। ३३
देवी यवनला प्रोक्ता सैव ऋद्धिः प्रकीर्तिता।
दमनः पूजकः प्रोक्तः कपिलश्चाङ्घ्रिपूजकः।। ३४
दमनश्चाग्निवर्णस्स्यात्कपिलस्सोमवर्णभाक्।
श्यामस्तु धनिनश्शेषो वर्णतश्श्याम एव सः।। ३५

## ईशानः

पाटलीकुसुमाभस्तु शिवो वृषभवाहनः।
त्रिणेत्रस्तु ध्वजश्चोक्षाः पत्नी रतिजया मता।। ३६
कुण्डाक्षस्य सुता रम्या इन्दीवरनिभा शुभा।
दादीभको नाम मुनिः पूजकः श्वेत उच्यते।। ३७
शैषिको यमजिन्नाम स तु वै पद्मसन्निभः।
शूलञ्च परशुं तस्य आयुधं परिकल्पयेत्।। ३८

## आदित्यः

रुद्रस्यैवापरा मूर्तिः त्रिणेत्रो मकुटी तथा।
बिम्बं मार्ताण्डस्य कुर्यात्पृष्ठे मण्डलसंयुतम्।। ३९
चतुष्पादं कारयेच्च द्विपादमथवा रविम्।
दोर्भिः द्वादशभिर्युक्तं व्याघ्रचर्माम्बरं तथा।। ४०
शुक्लाम्बरधरञ्चापि देवेशं रुक्मलोचनम्।
आसीनं वा स्थितं वापि विधिवत्स्वस्तिकासने।। ४१
यज्ञोपवीतिनं कुर्यात्सप्ताश्वैस्सुदृढैः पुनः।
आयुधैरपि संयुक्तं गदापाशादिशक्तिभिः।। ४२

उल्लोलयन्तं विशिखं स्थाने चेत्सर्वमाचरेत्।
दृष्टिं सानुग्रहं कुर्याद्दत्ताभयकरं पुनः।। ४३
पत्नी सुवर्चला नाम रेणुकेति च यां विदुः।
शैषिकस्त्वमितः प्रोक्तो भास्करस्याग्निसन्निभः।। ४४
मुनिः कनकमाली स्याद्बलिजिच्च विचक्षणः।
वैखानसो मुनिर्धीमान् स्वर्णमाली प्रकीर्तितः।। ४५
बलिजित् वालखिल्यश्च तावुभौ च सितासितौ।
बडबा वाहनं तस्य विश्वरंहेति कीर्तितः।। ४६
सर्वान् केतूंस्तथा कुर्यात्प्रमाणं शुकवर्णिनः।
शुकनासाखुरानश्वान् रुक्मकेशान्तलोचनान्।। ४७
देवी निजगपत्राङ्गा पिङ्गला बडबा मता।
अरुणं वाहनस्थाने कपिलं रुक्मकेशकम्।। ४८
सर्वाभरणसंयुक्तं पादौ . . . . . . . . . . . . . . . ।
उत्पत्यादिकमन्यञ्च मया प्रोक्तं प्रकीर्णकि।। ४९
न लौहं कांस्यकं कार्यं तत्पात्रं परिवर्जयेत्।
स्निग्धं कुसुम्भवर्णञ्च कृत्वा मार्ताण्डमर्चयेत्।। ५०
ध्वजे च शरभं कुर्यात्पृष्ठपादं बलान्वितम्।
नवतालायतो . . . . . . न्यग्रोधपरिमण्डलः।। ५१

## विष्वक्सेनः

अतः परं प्रवक्ष्यामि विष्वक्सेनस्य लक्षणम्।
नवतालायतं बेरं किरीटेन समायुतम्।। ५२
ब्रह्मसूत्रं विना सर्वाभरणैरुपशोभितम्।
आकुञ्च्य दक्षिणं पादं वामं पादं प्रसार्य च।। ५३

जयया सुखमासीनं भार्ययाऽग्निसमप्रभम्।
शक्त्यायुधं दण्डपाणिं पुष्पपाणिं प्रजाहितम्।। ५४
कृत्वाऽर्चयेद्धनार्थी तु पूज्यमानं सदाऽमरैः।
स्थानस्यैवाभिवृद्ध्यर्थं विष्वक्सेनं प्रचक्षते।। ५५

## गरुत्मान्

वेदानामुत्तमां मूर्तिं गरुडं नवतालकम्।
कुर्याद्धाटकवर्णञ्च शुकपिञ्जरवाससम्।। ५६
झल्लरीमेखलाबद्धकिङ्किणीजालशोभितम्।
अङ्गदे कुण्डले कुर्याद्धस्तयोः कर्णयोरथ।। ५७
छन्नवीरोत्तराबन्धं कौबेरमकुटं तथा।
बाह्वोराकुञ्चितौ पक्षौ पञ्चवर्णैश्च सुन्दरौ।। ५८
पक्षयोः कीचकान् कुर्यादर्धायामसुसंयुतान्।
आमध्यबन्धसंयुक्तान् विवृतान् कोर्पराश्रितान्।। ५९
बिन्दुपिञ्जरवर्णाक्तान् पञ्चवर्णैश्च मिश्रितान्।
तथा मरकताभाञ्च नासिकां चित्रकृच्चरेत्।। ६०
तिस्रश्चूडास्समाख्याता मकुटस्य तु शोभनाः।
उपर्युपरि सञ्छन्ना युक्त्या बन्धूकसन्निभाः।। ६१
आसने चासनं तस्य यत्र (वज्र) पीठमुदाहृतम्।
एकं जानुनि पीड्याथ ब्रह्मासनमथापि वा।। ६२
शैशवं नागराजञ्च बाहुलम्बितमाचरेत्।
आमूलश्यामलं रम्यं कुञ्जरं तत्र शैषिकम्।। ६३
तमाभरणवत्कुर्यात् स्मयमानञ्च गर्वितम्।
वाहनानाञ्च सम्पत्तिः गरुडस्थापनाद्भवेत्।। ६४

पदार्थिनाञ्च सर्वेषामितरेषाञ्च सर्वथा।

### वक्रतुण्डः

वक्रतुण्डं तथा कुर्याद्वाह्यगोपुरदक्षिणे।। ६५
एकदन्तयुतं कुर्याद्गजस्येव मुखं चरेत्।
कण्ठादूर्ध्वं गजाकारं बालमौलिसमन्वितम्।। ६६
भूतार्धवामनाकारं प्रवालाभं चतुर्भुजम्।
दक्षिणं साङ्कुशं वामं वज्रमुष्टिधरं परम्।। ६७
गजसाम्रफलोपेतं कदलीफलकाङ्क्षिणम्।
इक्ष्वेकहस्तं कुर्वीत सर्पैश्च परिवेष्टितम्।। ६८
सव्यैकाननमव्यग्रमर्धसाचीकृतेक्षणम्।
वामे चाम्रफलोपेतं सप्तभिर्वाथ पञ्चभिः (?)।। ६६

### अनन्तः

द्वारस्य वामभागे च अनन्तं परिकल्पयेत्।
सुवर्णवर्णं तं शेषं शङ्खक्षीरनिभन्तु वा।। ७०
आनीलाम्बरसंवीतं सर्वाभरणसंयुतम्।
एकजानुसमासक्तमूर्ध्वे मकुटसंयुतम्।। ७१
सिंहासने वा कुर्वीत तथा पद्मासनेऽपि वा।
द्विभुजं नागराजन्तु रक्तनेत्रासिपाणिकम्।। ७२
सुरया सहितं देवमप्सरोभिस्तथैव च।
फणन्तु मध्यमं तस्य भवेत्पञ्चाङ्गुलायतम्।। ७३
अष्टाङ्गुलसमुत्सेधं फणानामानुपूर्व्यतः।
. . . . . . . . . . . . . . . . . . . . . . . . ।। ७४

### अङ्गारकः

शक्तिपाणिस्तथा भौमः वक्रः शैषिक उच्यते।
रक्तः पत्नी शुकजुषा वाहनञ्चाश्व इष्यते।। ७५
श्वेतश्च कृष्णफालश्च कृष्णवालः प्रकीर्तितः।

### शनैश्चरः

कुर्याच्छनिमसिश्यामं शेषपृष्टे विचक्षणः।। ७६
देवीञ्च कुमुदां नाम वराहं वाहनं तथा।

### बृहस्पतिः

कुर्याद्बृहस्पतिं देवं मकुटं पुरिमैर्युतम्।। ७७
कदलीवनमध्यस्थं तारया प्रियया युतम्।
पुष्पश्यामाम्बरो धीमान् भक्तस्तस्यापि पीवरः।। ७८
हंसस्तु वाहनं ज्ञेयं ध्वजो नित्यं कुशः स्मृतः।

### बुधः

तारेयं विष्णुवर्णाङ्गमिलां देवीं समाचरेत्।। ७९
शेषो वसिष्ठको नाम कङ्को वाहनमुच्यते।
ध्वजश्श्येनस्समाख्यातो रवेर्दक्षिणबाहुकः।। ८०

### शुक्रः

काव्यो धिषणतुल्यस्स्याज्जायाऽस्य सुमता मता।
मेघाश्च वाहनं तस्य येऽग्निजा इति कीर्तिताः।। ८१
शेषस्तु सुमदो नाम चिह्नमग्निरुदाहृतः।

### गङ्गा

सर्वाभरणसंयुक्तां गङ्गां कुर्याद्विचक्षणः।। ८२

पीठे कूर्माकृतौ देवीं पद्महस्तां तथाऽऽसने।
घृतञ्चैककरे पद्ममाजिघ्रन्तीं समाचरेत्।। ८३
प्रसारितासनं कुर्यात्तस्या न स्थानमिष्यते।
शाकुरिः शैषिकस्तस्या वाहनं हंस इष्यते।। ८४
स्त्रीणां ध्वजस्तु हंसस्स्यात् कलिपत्नीपतेः सदा।

## चन्द्रः

आत्रेयं हरिवत्कुर्याच्छ्रितं मण्डलमाचरेत्।। ८५
मिश्ररुक्मनिभं श्वेतमिश्रमाहितकं स्मृतम् (?)।
राजानं द्विभुजं कुर्यादिन्द्रमौलिसमन्वितम्।। ८६
ताराञ्च रोहिणीं कुर्याद्दक्षिणे चास्य चासने।
वामे च फल्गुनीं कुर्यात्पद्माभूमी यथा हरेः।। ८७
इषुधी चाक्षये तस्य चक्रस्थानेऽभिपूजयेत्।
अश्वा हिरण्यरोमाणः श्वेताश्चाष्टौ प्रकीर्तिताः।। ८८
प्रवालपादनासास्ते शुकपिञ्छखुरा वराः।
शशाकृतिस्तस्य चोर्ध्वे दक्षिणे सूत्रशीर्षतः।। ८९
लक्ष्मभागसमायामकिणं वामे तथोपरि।
पुरुषोक्तन्तु सर्वाङ्गं द्विभुजं पीनबाहुकम्।। ९०
शुभसंहननं कुर्यात्सोमं नित्यं मुदाऽन्वितम्।
तारार्थं युध्यमानन्तु देवेन्द्रेणानुयायिना।। ९१
प्राहरत्किल तं युद्धे शूलेन वृषवाहनः।
जहाराच्छिद्य तं शूलं मध्ये प्राप तु लक्षणम्।। ९२
तदा प्रभृति सोमस्य किणं शिरसि दक्षिणे।
अपलायनमिच्छेच्चेदर्चयेदिन्दुमुत्तमम्।। ९३

रथस्तु वाहनं नाम स्वयं द्रुहिणनिर्मितम्।
स्थापयेत्तं खगस्थाने तस्य चेदालयः कृतः।। ९४
अश्वान् समर्पयेत्तत्र मन्त्रैरेतैरुदाहृतैः।
सुखञ्च जयदं शक्तिं विशोकं युद्धपारगम्।। ९५
हृष्टं सम्राजमानन्दमष्टौ सम्पूजयेद्धयान्।
विमलं पुष्यकञ्चैव मुनी तौ पूजने स्मृतौ।। ९६
सितं श्यामाम्बरं कुर्याद्विमलं पुण्यगर्भितम्।
अमलः पुष्यको ज्ञेयः सोम उक्तस्समासतः।। ९७

## श्रीः

पद्मपीठे समासीनां मण्डले चोर्ध्वकर्णिके।
तथा प्रसारितकरां देवीं धृतकुशेशयाम्।। ९८
शातकुम्भमयैः कुम्भैः सिच्यमानां दिशां गजैः।
अथवा शयनारूढां क्रीडन्तीं सह विष्णुना।। ९९
मानोक्तेन तु मानेन श्रीदेवीं कारयेत्सुधीः।

## रोहिण्यः

रोहिणीः कारयेत्सर्वाः भूमिवद्भूषणैर्युताः।। १००
सङ्क्रीडमानास्तास्सर्वा भूषणैस्समलङ्कृताः।
मयूररथ्यो रोहिण्यः कृकलासध्वजप्रियाः।। १०१
सुमुखा नन्दिनी माया कीकसा च सुलोचना।
वाहिनी यायिनी कामा शैष्यस्सर्वाः प्रकीर्तिताः।। १०२
अक्षञ्च लोहिताक्षञ्च कुर्यात्तासाञ्च रक्षणे।
अर्चयित्वा तु तास्सर्वा रक्षयेच्च विशेषतः।। १०३

सर्वास्ताः पिञ्जवत्यश्च पुष्पहस्ताः प्रमोदनाः।
शुक्लकञ्चुकसंयुक्ताः नित्यं लोकप्रसादकाः।

## धात्री

कुर्याद्धात्रीं महारौद्रीं दंष्ट्राभ्यां समलङ्कृताम्।। १०४
बालमौल्युत्तरासङ्गां सान्त्रशूलाञ्च षड्भुजाम्।
रक्तोग्रनयनापाङ्गीं भ्रूभङ्गविकटोग्रकाम्।। १०५
स्त्रीणामिव च तद्वक्त्रमतिरौद्रं समाचरेत्।
कपालपाशहस्ताञ्च रक्तकुञ्चितमूर्धजाम्।। १०६
उग्रपीठे समासीनामट्टहाससमन्विताम्।
बेरं कुर्याद्यथायोग्यं तस्याश्चेदालयं पृथक्।। १०७

## ज्येष्ठा

त्रिपीठकाख्ये पीठे तु ज्येष्ठा कुर्याद्विचक्षणः।
प्रसारासनगां स्थाने दैविके मानुषे चरेत्।। १०८
वामहस्तेन सम्पूर्णं हरन्तीं निधिभाजनम्।
दक्षिणं पुष्पहस्तञ्च किञ्चिल्लम्बोदरीं शुभाम्।। १०९
सरक्तपुष्पवस्त्रान्तामतिपीनचलस्तनीम्।
तस्याश्च दक्षिणे पुत्रं तस्या बाहुप्रमाणातः।। ११०
पीतं वृषभकं नाम शुकवर्णहिताम्बरम्।
सहासने ततस्तस्या दण्डपाणिं समुन्नतम्।। १११
वृषभस्य शिरस्तस्य पूर्वोक्तं किञ्चिदुन्नतम्।
वामे च मैञ्जलिं तस्याः सुतां परमलालिताम्।। ११२
अर्धसाचीकृतापाङ्गामर्धासनसमाहिताम्।
रक्तनीलपरीताङ्गीं रक्तोत्पलकरां पराम्।। ११३

पादमेकं प्रसार्यैकमाकुञ्च्य परिकल्पयेत्।
तेषां पृष्ठे तथा कुर्याद्व्याजिन्यौ दक्षिणे क्रमात्।। ११४
सारोचितां सरुचिरां कुर्यात् स्थाने यथाक्रमम्।
पृथक् चेदालयं तस्या वाहनं खरयुग्रथः।। ११५
खराणाञ्चैव पञ्चाशत् रथे तस्याः प्रकीर्तिताः।
कृष्णः काको ध्वजो ज्ञेयः नितम्बा चैव शैषिकी।। ११६
परिवारः खरास्तस्याः षोडश स्युर्दुरासदाः।
आलेख्यास्ते क्लृप्तबिम्बाः सर्वलोकस्य नाशकाः।। ११७
पिशाचसमकायास्ते नित्याञ्चा भोज्यभोजनाः।
.......................।। ११८

## निद्रा

निद्राया लक्षणं वक्ष्ये तां कुर्यादष्टबाहुकाम्।
शङ्खचक्रधरां स्थाने आकुञ्चितपदां तथा।। ११९
शूलासिचापसहितां गदापाशादिधारिणीम्।
शुकं सुरुचिरे स्थाने स्थितमादाय वामगम्।। १२०
तनुकां पद्मके पीठे स्थापयेदिति शासनम्।
माहिषे तु शिरस्येव तां देवीं स्थापयेत्क्रमात्।। १२१
रम्यां सुलोचनापाङ्गां कृष्णकुञ्चितमूर्धजाम्।
तन्वीञ्च कुचभारोग्रां सूक्ष्मकर्णां त्रिलोचनाम्।। १२२
काम्याभरणसर्वाङ्गीं दृष्टकन्यासुवेषगाम्।
लतावलयसम्बद्धां झल्लरीभिस्सुसंवृताम्।। १२३
कौबेरमौलिसंयुक्तामतिसुन्दरगात्रकाम्।

व्याजिन्यौ ते तथा कुर्यात्कुन्दबन्धूकसन्निभे।
ख्यातीशपुण्ययोः स्थाने सुमनामञ्जनां तथा।। १२५

तस्याश्च कौशिकी नाम शैषिकी परिकीर्तिता।
कौशिकी श्वेतवर्णा स्यात्सुमना पीतका तथा।। १२६

अञ्जनाञ्जनसङ्काशासुशोभास्साक्षमालिकाः।
वहने वाहनं तस्याः सिंहः कृष्णमृगस्तथा।। १२७

सिंहः प्रभञ्जनो नाम कृष्णः सार उदाहृतः।
दक्षिणोत्तरयोस्तस्या विन्यसेदिति शासनम्।। १२८

ध्वजश्चास्यास्समाख्यातस्स्वस्तिकः सिंहलक्षणः।
नीलोत्पलदलो नाम भूतग्राही च वीजकः।। १२९

भूतः पङ्गुपदो नाम रुक्मवर्णोऽरुणेक्षणः।

## (सप्तर्षयः)-भृगुः

नवार्धतालमानेन माञ्च कुर्याञ्चतुर्भुजम्।। १३०

ब्राह्ममासनमासीनं ब्रह्माञ्जलिकरद्वयम्।
अङ्के वामे तथोत्तानं प्रसृतं तस्य चोपरि।। १३१

हस्तञ्च दक्षिणं तस्य चोपर्युत्तानमाचरेत्।
नासाग्रे प्रसृता दृष्टिर्योगदृष्टिरिति स्मृता।। १३२

दक्षिणे चोर्ध्वगे हस्ते कलशं मम कारयेत्।
वामे शिक्यञ्च संशुद्धं ब्रह्मदण्डञ्च वैणवम्।। २३३

जातिहिङ्गुलिकाभं वै मुखञ्च मकुटे जटाम्।
ताम्रास्यनयनं कुर्यात्सम्मुखे मृगचर्म च।। १३४

शुष्कवल्कलवस्त्रञ्च मुनिभिस्सह वा विना।
परिवारैश्च सहितं विना चेन्मद्गृहे तथा।। १२५

समृद्धिश्च धनश्चोभौ . . . . . . . . . . . . . . . . . . ।
एतौ सस्यजपावर्णौ व्याजनौ कुकुराक्षकौ।। १३६
देवी सरस्वती चान्या ब्रह्मश्रीः परिकीर्तिता।
किञ्चार्धमासनं तस्याः कुर्यात्तु पृथगेव वा।। १३७
शैषिकञ्चार्चयेन्नित्यं प्रियव्रतमपाक्षिकम्।
मन्त्रांस्तान् वाहनं कुर्याद्यावन्तस्स्युस्समाहिताः।। १३८
स्थापने मम नक्षत्रं कुर्यात्प्रोष्ठपदोत्तरम्।
उत्तरां फल्गुनीञ्चाथ पौर्णमासीञ्च सप्तमीम्।। १३९
मुनीन् सर्वान् समासीनान् सम्भूतीशादिकान् समान्।
तदा द्विबाहुकान् स्थाने सर्वलोकपितामहान्।। १४०
पितॄन् देवान् धारयतः तपसा सर्वमानुषान्।
द्याञ्च गां लोकचक्षूंषि सदा गह्वरवाहनान्।। १४१
जङ्गमान् स्थावरानन्यान् तपसा तारयिष्यतः।
लब्धप्रसादास्ते विष्णोः जगत्पालनतत्पराः।। १४२
तस्मात्तानर्चयेन्नित्यं सर्वलोकैकशान्तये।
अनावृष्टिगदोत्पातवह्नितोयविषादिकम्।। १४३
विलुम्पनञ्च प्रोद्भूतदैविकं भयमष्टधा।
नश्यन्ति दोषा यत्रैते पूज्यन्ते मुनयः क्रमात्।। १४४

## सप्तर्षयः पत्न्यश्च

मरीचिः पुलहश्चैव पुलस्त्यः क्रतुरेव च।
वसिष्ठोऽत्रिरहञ्चेति मुनयस्सप्तकीर्तिताः।। १४५
सम्भूतिश्च क्षमा चैव प्रीतिस्सन्नतिरेव च।
ऊर्जाख्यात्यनसूयाश्च ऋषिपत्न्यः प्रकीर्तिताः।। १४६

पत्न्यस्ता क्रमशः प्रोक्ताः कुर्याद्वि विरहासने।

## गविष्ठः (आकाशः)

गविष्ठं पद्मसङ्काशं कुर्याद्वि पीतवाससम्।। १४७
सर्वाभरणसंयुक्तं मकुटं दैविकं तथा।
बेरं सुखासने कुर्याद्गविष्ठस्य परं क्रमात्।
गविष्ठो दण्डपाणिस्स्यादसिपाणिरपि स्मृतः।। १४८

## पृषदश्वः (वायुः)

श्यामस्तु पीतको वायुः पूर्वं कौसुम्भकाम्बरः।
. . . . . . . . . . . . . . . . . . . . . . . . ।। १४९

## आभुरण्यः (अग्निः)

आभुरण्यो नीलवासाः हरिपिञ्जरमूर्धजः।
तं कुर्यान्मध्यमे तस्य वामे कुर्यात्तु गह्वरम्।। १५०

## गह्वरः (जलम्)

तृतीयप्रकृतिं कुर्याद् गह्वरञ्चोत्पलप्रभम्।
हरिपिञ्जरवस्त्रन्तं भूतानाञ्च चतुर्गुणम्।। १५१

## मेदिनी

सर्वेषां वामतः कुर्यान्मेदिनीं वामलोचनाम्।

## पञ्चभूतानां स्थानानि

एकासनान् कुञ्चितापसव्यपादान् समाचरेत्।। १५२
आभुरण्यं गह्वरञ्च शक्तिपाणी समाचरेत्।
गविष्ठपत्नी विख्याता विधिना सत्यलोचना।। १५३

वायोश्च चलिका नामाऽभुरण्यस्य च सङ्ख्यका।
त्रयाणामपि देवीनां पृथक् स्थानं विधीयते।। १५४

## विद्या

विद्यां चतुर्भुजां कुर्याद्रक्तां धृतकुशेशयाम्।
दक्षिणे त्वक्षमालाञ्च करे वामे कमण्डलुम्।। १५५
ज्ञानमुद्रां दक्षिणाधः करे वामे च पुस्तकम्।
एकं प्रसारिणं कुर्यात्सुरूपां शैषिकीं तथा।। १५६
पुष्करा च विशोका च व्याजिन्यौ परिकीर्तितौ।
पुष्कराङ्कुशसङ्काशा विशोका दुग्धवर्णिनी।। १५७
विश्वपाद्गालवौ चैव पूजकौ तु मुनीश्वरौ।
विश्वपादञ्जनाभस्तु भाभो गालव उच्यते।। २५८
उग्रं भीमं महाभूतं विकटं दण्डपाणिनम्।
कालाम्बुदाभं कृत्वा तु तलके स्थापयेदिति।। १५९

## स्कन्दः

स्कन्दं पलाशपुष्पाभं षड्भुजं वा चतुर्भुजम्।
बालमौलिसमायुक्तं विकचप्रीतिवाचकम्।। १६०
देवयानीञ्च तत्पार्श्वे स्थाने चेन्न समाचरेत्।
आसने दक्षिणे तेन चासित्वान्योन्यवीक्षणे।। १६१
अर्धसाचीकृतं देव्याः तस्यार्ध भर्तुरिष्यते।
सर्वेषामपि देवानामासनञ्चैव दैविके।। १६२
देवी श्यामनिभा तस्य देवयानी वराङ्गना।
दुहिता सा हि धर्मस्य नित्यं धर्मपरायणा।। १६३

तस्यालये तु विधिना सुसेनं स्थापयेत्क्रमात्।
सुसेनोऽञ्जनवर्णस्स्याच्छूलहस्तो गदायुधः।। १६४
वाहनं हस्तिनं कुर्यान्मयूरं वा यथोचितम्।
नवहस्तनिभं कुर्यादुत्सेधस्सप्तहस्तकः।। १६५
आयामार्धं ततः पादाः शेषं नाह उदाहृतः।
प्रदेश . . . . न्नतो विद्याच्छिरसो मस्तकं तयोः।। १६६
नाहेनार्धपरीणाहः पादहीनन्तु गात्रयोः।
गात्रार्धपरिणाहो वा पादहीनः करोर्ध्वकः।। १६७
भूमिलम्बं तथा कुर्यात्करं वालमनुच्छ्रितम्।
मानं नखानां तत्रैव चतुरङ्गुलमिष्यते।। १६८
भागान्तराणां तेषां वै सर्वं बोद्धव्यमित्यथ।
तयोर्मानं यथेभस्य मानं कुर्याद्द्वयङ्कुरम्।। १६९
इभानामेव सर्वेषां मानमित्थमुदाहृतम्।
ऐरावतं विनाऽन्येषां नीलो वर्णः प्रकीर्तितः।। १७०

## ऐरावतहस्ती

स्याद्द्वादशकरायामो मितं करिपतेः सदा।
सतालनवहस्तः स्यादुत्सेधः सर्वसम्मतः।। १७१
प्रवालाभश्चतुर्दन्तः श्वेतवर्णो गजाधिपः।
दन्ताश्च युग्मसंस्थाना युगलाश्शोभना मताः।। १७२
परिणाहादिकं तेषामूर्ध्वं युक्त्या समाचरेत्।

## नीलहस्ती

तथा च नीलहस्ती स्यादिन्द्रनीलनिभश्शुभः।। १७३

वराहस्य महाविष्णोर्वाहनं परिकीर्त्यते।
पञ्चहस्तायतं पृष्ठे सत्रिपञ्चार्धदेहकम्।। १७४
तस्यार्धमूर्ध्वकर्णस्य नाहस्तस्य षडङ्गुलम्।
अग्रभागपरीणाहे शिरव्यास्य ? त्वङ्गुलास्तु षट्।। १७५
गोलकं विस्तृतं तस्य तुण्डं वा चतुरङ्गुलम्।
भुजमात्रेक्षणे कुर्याद्भुजमात्रे उभे तले।। १७६

## मयूरः

पञ्चाक्षकाः समाख्याताः सुन्दराः पञ्चवर्णकाः।
मयूरा ये प्रदृश्यन्ते तथा प्रकृतमानकाः।। १७७
दिव्याश्चेदधिकं मानं देहानाञ्च समाचरेत्।
हस्तं पादं तथाऽऽयामत्रितयं तत्समं स्मृतम्।। १७८
चूडा षडङ्गुलं प्रोक्तं विस्तारः कोलकं भवेत्।
गोलकोत्सेधसौन्दर्यं वीक्ष्य कुर्याद्विचक्षणः।। १७९

## चक्रम्

कुर्याच्चक्रं नराकारं चक्रचूलीसमन्वितम्।
चक्रं बहिर्मुखं कुर्याच्छिरोङ्गारान्गिसन्निभम्।। १८०
पादहीनं वैनतेयाद्धीन (?) मस्यार्धमेव वा।
आस्थानमण्डपस्थाने स्थापयेद्दैविके क्रमात्।। १८१
तस्माद्ध्वजस्य स्थाने च कुर्याद्बिम्बं यथाक्रमम्।

## ध्वजस्थाने गरुडः

ध्वजस्थं गरुडं कुर्यादासनेऽर्पितपादकम्।। १८२
आकुञ्चितं वामपादं सुप्रसारितबाहुकम्।

अष्टाङ्गुलं पुष्पनालं प्रभूतप्रतिभं महत्।
पुष्पप्रेक्षमुखं कुर्यात्सानन्द्रं स्मेरगर्वितम्।। १८४
एष ग्रामहितः प्रोक्तः जयार्थञ्चान्य उच्यते।
जानुनाऽऽपीडय पीठन्तु सव्येनान्येन वा तथा।। १८५
वज्रं वा विजिघृक्षन्तमुग्रदृष्टिं चरेदिति।
पद्मे पद्मासनासीनं सुखं ध्यायन्तमव्ययम्।। १५६
ऋषीणाञ्च हितार्थाय कुयदिवं विचक्षणः।
अशक्तस्तु ध्वजविधेः मण्डपे सम्यगर्चयेत्।। १५७
गर्भस्थं स्वामिनं दृष्टा ध्वजं कुर्यादिति स्थितिः।

## शङ्खः

जलजं चक्रवत्कुर्यान्मकुटे शङ्खसंयुतम्।। १५८
तद्वर्णञ्चैव युक्त्या वै नीलवाससमच्युतम्।
यूथाधिपस्य पीठे वै बिम्बं कुर्याद्विचक्षणः।। १५६
बिम्बञ्चेत्क्रियते तस्य यमकं पीठमुच्यते।
स्थले पादासने चैव कर्तव्यं तदधस्स्थले।। १६०
पूर्वञ्च पश्चिमे कुर्यात्पश्चिमं वृत्तकं विदुः।
वृत्तञ्चाप्यधिरुह्यैवं दण्डपाणिर्बहिर्मुखः।। १६१
चतुरश्रे तथा चोर्ध्वे भूतान् सर्वांश्च कारयेत्।

## साधारण्येन तालप्रस्तारकथनम्

अत ऊर्ध्वं प्रवक्षयामि सामान्यप्रस्तरक्रमम्।। १६२
दशतालं सार्धनवमष्टसप्ताथ षट् क्रमात्।
पञ्चतालं चतुस्तालं त्रितालञ्चाभिधीयते।। १६३

ब्रह्मा विष्णुर्हरश्चेति त्रयस्ते दशतालकाः।
इन्द्रो रविस्तथा स्कन्दो नवार्धमितमानकाः।। १९४
इतरे लोकपालाश्च नवतालमितास्स्मृताः।
मानुषाकृतयः शुद्धा न्यग्रोधपरिमण्डलाः।। १९५
अष्टताला नरा ज्ञेया जघन्याः सप्ततालकाः।
षड्भिः कुब्जास्समाख्याताः पञ्चतालास्तु वामनाः।।१९६
चतुस्तालास्तथा भूताः त्रितालाः किन्नराः स्मृताः।
मुखं तालं यवञ्चैव द्वादशाङ्गुलसंज्ञकाः।। १९७
दशतालं तु विज्ञेयं सविंशतिशताङ्गुलम्।
एवं ज्ञात्वा तु कर्तव्यं चिन्तयित्वा यथार्हकम्।। १९८

## तलभेदेन विमानानां प्राशस्त्यम्

अतः परं प्रवक्ष्यामि विमानन्यासलक्षणम्।
उत्तमं मध्यमञ्चैव तथाऽधममिति क्रमात्।। १९९
एकैकं त्रिविधं कृत्वा नवधा मार्ग उच्यते।
पुनस्तदेवमेकैकं त्रिविधं त्रित्रिकं क्रमात्।। २००
सप्तविंशतिधा भेदो विमानानामुदीर्यते।
यत्प्रोक्तं द्वादशतलमिति तत्स्यादमानुषम्।। २०१
इन्द्रादिलोकपालानामर्चनार्हन्तु शार्ङ्गिणः।
न हि सप्ततलादूर्ध्वं किञ्चिदस्तीह भूतले।। २०२

## शिलानिर्माणप्रशंसा

चिरकालार्चनं काङ्क्षन् नेष्टकाभिः क्रियाश्चरेत्।
यावच्छक्यं दृढं कुर्याच्छिलाभिः निर्मितिं सदा।। २०३

भविष्यदर्थमुद्दिश्य युगशक्तिं विचिन्त्य च।
उत्तमन्तु मनुष्याणां पञ्चभूमिर्विधीयते।। २०४
पञ्चहस्तप्रमाणन्तु विष्णोस्तदधमाधमम्।
सर्वेषामेव देवानां त्रिहस्तमधमाधमम्।। २०५
तस्माद्धीनं न कर्तव्यं देवानामिति हि श्रुतम्।
स्थानं विनाऽधिपादीनां मण्डपं वा विधीयते।। २०६
पञ्चहस्तमथाऽऽरभ्य आपञ्चदशहस्ततः।
अधमं त्रिकमत्रैव योजयेत्सर्वकर्मसु।। २०७
त्रयोदशमथाऽऽरभ्य पञ्चविंशतिकादधः।
मध्यमं त्रिकमिष्टं स्याद्यथा शक्यं तथाऽर्पयेत्।। २०८
एकविंशतिमारभ्य पञ्चविंशतिकावधि।
उत्तमं तत्र कर्तव्यं त्रिकमित्यभिधीयते।। २०९
अधमे चोत्तमं कुर्याद्यदि कुर्यात्तदुत्तमम्।
उत्तमे चाधमं कुर्यान्न कुर्यादिति शासनम्।। २१०

## प्रकारान्तरेण तलभेदेन तरतमभेदः

तलप्राकारचूडाभिः परिवारार्चनादिभिः।
विन्यासभेदं वक्ष्यामि शृणुध्वमृषिसत्तमाः।। २११
अधमं स्यादेकतलं विमानं पूजने स्मृतम्।
मध्यमं द्वितलं प्रोक्तं त्रितलञ्चोत्तमं भवेत्।। २१२
यत्रैव शयनं प्रोक्तं तत्र चोत्तममुच्यते।
वराहनारसिंहाद्या यत्र यत्र प्रकल्पिताः।। २१३
उत्तमं तत्र कर्तव्यमिति शास्त्रस्य निश्चयः।
एकप्राकारसंयुक्तमधमं परिकीर्तितम्।। २१४

द्विप्राकारसमायुक्तं मध्यमञ्चाभिधीयते।
त्रिप्राकारं विशेषेण ह्युत्तमन्तु विदुर्बुधाः।। २१५
एको द्वावधिका यत्र प्राकारास्तत्र चोत्तमम्।
गोपुरं चूलिकाञ्चापि प्रमुखे प्रमुखे चरेत्।। २१६
पञ्चगोपुरसंयुक्तंमुत्तमोत्तममुच्यते।
चत्वारि त्रीणि द्वे चैकमिति ह्रासः क्रमाद्भवेत्।। २१७
समालोच्य यथाशक्ति यथार्हं परिकल्पयेत्।
यत्रैव परिवारास्स्युः तत्र रक्षा प्रकीर्तिता।। २१८
अनपायिगणानान्तु रक्षां कुर्यान्न वा दृढम्।
वीश एवाधमे स्थाप्यः मध्यमे चक्रसंयुतः।। २१९
उत्तमे ध्वजसंयुक्तः त्रिष्वेवं क्रम उच्यते।
कर्तुश्शक्तिरथेच्छा चेत्सर्वांत्सर्वत्र कारयेत्।। २२०
राजराष्ट्राभिवृद्ध्यर्थं मानतः कृतमुत्तमम्।

## अनपायिनां स्थानम्

वीशं प्रतिमुखं कुर्यादन्यथा तु विपर्ययः।। २२१
चक्रन्तूभयधा कुर्याद्बुद्ध्या बुद्ध्वा तु कारयेत्।
न कुर्यादिककक्ष्यायां पृथक्कक्ष्या विधीयते।। २२२
अनन्तः शुभ उद्दिष्टः अनपायिषु सर्वथा।
अनपायिविहीने तु सर्वं दुष्टं भविष्यति।। २२३
ईशानसोमयोर्मध्ये विष्वक्सेनालयं चरेत्।
विष्णोः प्रियतरश्शान्तः अनपायिगणाधिपः।। २२४
तत्स्थाने तं प्रकुर्वीत स्थानमन्यत्परित्यजेत्।
उत्तमे मध्यमे चास्य कल्पयेदर्हमालयम्।। २२५

सेनापतिं चरेद्बाह्यावरणे सर्वरक्षकम्।
ब्रह्मपद्मविधानेन यत्र शङ्कुः प्रतिष्ठितः।। २२६
ब्रह्मस्थानं तत्प्रधानं सर्वदेवेष्वयं विधिः।
चतुरश्रेष्वायतेषु मन्दिरेषु निबोधत।। २२७
चतुरसूत्रसंयोगं ब्रह्मस्थानस्य लक्षणम्।
तद्बास्तु ब्रह्मणः स्थानं तत्पश्यन्ति दिवौकसः।। २२८
परिवारैस्समाविष्टे मध्यमे चैव कारयेत्।
यत्र यत्रैव मध्यं स्यात्तत्तद्ब्राह्ममिति स्थितिः।। २२९
मध्यस्थानं विभज्यैव परिवारान् प्रकल्पयेत्।
दूरे समीपे वा युक्त्या प्रतिसूत्रं प्रकल्पयेत्।। २३०
एकस्यां दिशि तान् सर्वान् सम्यक् प्रतिपदं चरेत्।
मित्रस्य बलिपीठन्तु मध्यमं ब्राह्ममुच्यते।। २३१
बलिस्थानं ध्वजस्थानं चक्रस्थानं तथैव च।
तथा चूलिकमध्याद्वा मत्वा सम्यक् समाचरेत्।। २३२
अधमेषु न कर्तव्यं ब्रह्मस्थानं विधानतः।
अधमे सम्प्रयोगे तु स्थलगर्भस्य पार्श्वतः।। २३३
प्रासादे मण्डपे वाऽपि लभ्यते यत्र चान्तरम्।
देवं शैषिकसंयुक्तमर्चयेदिति कल्पनम्।। २३४
अधमाधममित्याह भगवान् विखना मुनिः।
शैषिकं गरुडञ्चैव द्वावेवाधममध्यमे।। २३५
दिग्देवान् सम्प्रकल्प्यैव रविणा सह संयुतान्।
पूर्वोक्तस्थाननिहितानेकादश समर्चयेत्।। २३६
अधमोत्तममित्याहुः मुनयश्शास्त्रकोविदाः।
द्वितीयावरणे त्वेवं भौमादीनां यथाक्रमम्।। २३७

स्थानं सम्यक् प्रकल्प्यैव पूर्वोक्तेन विधानतः।
अर्चयेन्नित्यमेवन्तु मध्यमाधममुच्यते।
ग्रन्थान्तरेषु ज्ञातव्यं मध्यमाधमतः परम्।। २३८

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे परिषदालयलक्षणकथनं नाम
पञ्चदशोऽध्यायः।।

----------

अथ षोडशोऽध्यायः

----------

## प्रतिष्ठाविधिः-आचार्यलक्षणम्

अतः परं प्रवक्ष्यामि स्थापनक्रममुत्तमम्।
स्थापनारम्भकाले तु यजमानोऽथ भक्तिमान्।। १
वैखानसविदो विप्रान् नमस्कृत्य स्वदैववत्।
तेषु ज्ञानोत्कटं ज्ञात्वा नमस्कृत्य स्वदैववत्।। २
वैखानसेन सूत्रेण निषेकादिक्रियान्वितम्।
विप्रं स्वाध्यायसंयुक्तं गृहस्थं लक्षणान्वितम्।। ३
शौचाचारविधिं तद्वत्सन्ध्यौपासनमेव च।
औपासनं वैश्वदेवं जपहोमव्रतानि च।। ४
वैखानसेन विधिना कुर्वाणं शान्तमानसम्।
श्रद्धाभक्तिसमायुक्तं सर्वकर्मसु निश्चलम्।। ५
आहुतीनां पदार्थज्ञमग्निकार्यपरायणम्।
भूम्याद्येकादशविधिक्रमज्ञं भगवत्परम्।। ६
पुष्टगात्रं सुसम्पन्नं जितेन्द्रियमकल्मषम्।
युवानं स्थविरं वाऽथ ज्ञानिनं कर्मकारिणम्।। ७

सर्वलक्षणसम्पन्नं वृणुयात्कारको गुरुम्।
यजमानो गुरुश्चैव देवदेवं प्रणम्य च।। ८
यजमानस्तूक्तकाले गुरवे दक्षिणां ददेत्।
स्वदेववन्नमस्कृत्य कार्यारम्भमुपक्रमेत्।। ९
उक्तलक्षणसम्पन्नानृत्विजो वृणुयात्सतः।

## मुहूर्तकालः

अयने चोत्तरे कुर्यात्कार्यारम्भं हरेः क्रतोः।। १०
मासानां फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव वा।
तौ मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।। ११
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।
पूर्वपक्षे प्रकुर्वीत कृष्णपक्षे त्रिथाऽद्यके।। १२
त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ।
श्रवणे वारुणे चैव मैत्रे वा वसुदैवते।। १३
अन्यस्मिन् पुण्यनक्षत्रे प्रशस्ते श्रुतिचोदिते।
युग्माश्च तिथयस्सर्वाः प्रशस्ता विष्टिवर्जिताः।। १४
गुरुभार्गवसौम्यानां वारा ग्राह्याः शुभाश्च ते।
चरराशिं विवर्ज्यैव स्थिरराशिं प्रगृह्य च।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।। १५

## अङ्कुरार्पणम्

अतः परं प्रवक्ष्यामि विधिना चाङ्कुरार्पणम्।
भूपरीक्षादिकं कर्म यस्मिन्नहनि कारयेत्।। १६
तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।। १७

अङ्कुरार्पणकार्यार्थं पालिकादीन् समाहरेत्।
पालिकाः कुम्भकांश्चापि शरावानपि सङ्ग्रहेत्।। १८

## पालिकादीनां लक्षणम्।

बिम्बेन कौतुकेनेव समोच्चः पालिका मताः।
तदर्धमाना वा कुर्यात्तालमात्रमिताश्च वा।। १९
ध्रुवबेरमुखायामं पालिकायामविस्तरम्।
तदर्धं मूलविस्तारं क्रमशो ह्रासयेद्बुधः।। २०
तच्चतुर्थैकहीनस्तु छिद्रकुम्भः प्रमाणतः।
त्रिभागादेकभागस्तु कुम्भद्वारस्य चोच्छ्रयः।। २१
आयामात्तिगुणो नाहः द्वारो भाग उदाहृतः।
पञ्चद्वारसमायुक्तान् छिद्रकुम्भान्विशेषतः।। २२
षडङ्गुलसमुत्सेधान् शरावानपि सम्भरेत्।
विस्तारादि शरावाणां पालिकासममुच्यते।। २३
एवमाहृत्य यत्नेन सम्यग्दग्धं मनोहरम्।
ब्राह्मणो यजमानश्चेत् गृह्णीयात्तानि षोडश।। २४
क्षत्रियो द्वादशाष्टौ तु वैश्यस्तानि सुसम्भरेत्।
चत्वारि शूद्रो गृह्णीयात्पालिकादीनि वै पृथक्।। २५
एवमाहृत्य यत्नेन पश्चाद्बीजानि चाहरेत्।
कङ्कुमुद्गयवांश्चैव निष्पावान् सर्षपानपि।। २६
आतपेनाथ संशोष्य सारभूतानि सम्भरेत्।
जले तु निक्षिपेत्तानि यावदङ्कुरदर्शनम्।। २७

## रात्रावङ्कुरार्पणम्

न प्रीतये भगवते कृतमहन्यङ्कुरार्पणम्।
तस्मात्सर्वप्रयत्नेन कुर्यान्निश्यङ्कुरार्पणम्।। २८

प्रदोषे वाऽर्पणं कुर्यादङ्कुराणां विशेषतः।

## अङ्कुरवेदिः

आलयात्पुरतो वाऽपि उत्तरे वा मनोरमे।। २९
मण्डपेऽष्टस्तम्भयुते चतुरश्रे सुविस्तृते।
ऊर्ध्वेऽलङ्कारसहितवितानेन स्वलङ्कृतम्।। ३०
मण्डलान्युपलिप्याऽलङ्कुर्याद्वर्णैस्तु पञ्चभिः।
व्रीहिभिस्तण्डुलैर्वाऽत्र पीठं सम्यक्प्रकल्पयेत्।। ३१
मध्ये ब्रह्माणमुद्दिश्य षोडशाङ्गुलमायतम्।
त्रिवेदिसहितं पीठं कुर्यात्कर्माङ्गुलोच्छ्रयम्।। ३२
प्राच्यां शेषं समभ्यर्च्य वक्रतुण्डञ्च दक्षिणे।
पङ्क्तीशं पश्चिमेऽभ्यर्च्य सोमञ्चैव तथोत्तरे।। ३३
विष्वक्सेनञ्च तत्रैव पूजयेच्च यथाविधि।
इन्द्रादीशानपर्यन्तं जयादीरपि चार्चयेत्।। ३४
भागोन्नतं द्वादशाङ्गुलायतं तिसृभिस्तथा।
वेदिभिस्सहितं कुर्यात्पीठान्येषां पृथक् पृथक्।। ३५

## देवतापदानि

मध्ये ब्रह्माणमावाह्य ब्रह्माणञ्च समर्चयेत्।
देवानन्यांश्चार्चयेत्तु तत्तत्पूजाक्रमेण ह।। ३६

## उत्तमाधमविवेकः

निवेदनसमायुक्तं सर्वेषामुत्तमं भवेत्।
षण्णां ब्रह्मादिदेवानामर्चनं मध्यमं भवेत्।। ३७
ब्रह्मणे विनिवेद्यान्यदेवानां बलिदापनम्।
अधमो मार्ग उद्दिष्ट इति प्रोवाच पूर्वजः।। ३८

## पालिकादिस्थापनम्

एवं कृत्वा तु यत्नेन पालिकादीन् प्रगृह्य च।
मृद्भिर्वा सिकताभिर्वा पालिकादीन् प्रपूरयेत्।। ३९
करीषैर्वा पूरयित्वा बीजान्याहृत्य वै ततः।
पङ्क्तेरुत्तरतः स्थाप्य पालिकादींश्च पूजयेत्।। ४०
ब्रह्मणः परितः स्थाप्य पालिकादीन् विचक्षणः।
पालिकासु च सर्वासु मेदिनीमर्चयेत्क्रमात्।। ४१
छिद्रकुम्भेषु राकाञ्च शरावेषु पृथुष्टुकाम्।
आवाह्याभ्यर्च्य चार्घ्यान्तं बीजानि च समर्पयेत्।। ४२

## बीजावापनम्

नववस्त्रपरीधानस्सोत्तरीयाङ्गुलीयकः।
गुरुर्वा गुरुपत्नी वा यजमानोऽथवा पुनः।। ४३
यजमानस्य पत्नी वा वापयेदङ्कुरान् पृथक्।
शूद्रश्चेद्यजमानस्तु गुरुरेव समर्पयेत्।। ४४
'सोमं राजान' मित्युक्त्वा वापनं समुदाहृतम्।
तत्काले तूर्यघोषैश्च जयशब्दैस्समन्वितम्।। ४५
'वारीश्चतस्र' इत्युक्त्वा
तोयं तत्र समर्पयेत्।
ततो वस्त्रैस्समाच्छाद्य
तानि गुप्ते विनिक्षिपेत्।। ४६
पुण्याहं वाचयेत्तत्र विधिनैव यथाक्रमम्।
यजमानो मुदा युक्तो गुरवे दक्षिणां ददेत्।। ४७

## सम्भाराहरणम्-यज्ञपात्राणि

अत ऊर्ध्वं प्रवक्ष्यामि द्रव्याणामत्र सङ्ग्रहम्।
अश्वत्थञ्च शमीजातं सर्वयत्नेन सम्भरेत्।। ४८
त्वगादींत्संव्यपोह्यैव काष्ठं सम्यक् प्रगृह्य च।

## अग्निमन्थनसाधनानि

पट्टिकामधरां कुर्याच्चतुर्विंशद्भिरङ्गुलैः।। ४९
उत्सेधो भाग उद्दिष्टः विस्तारस्तु षडङ्गुलः।
ऊर्ध्वपट्टीञ्च तन्मानामवक्रां सम्प्रगृह्य च।। ५०
दण्डं चतुर्विंशायामं द्वादशाङ्गुलनाहकम्।
अधरारणिं तु हरिणीमूर्ध्वाञ्चैव हुताशनम्।। ५१
दण्डञ्च विष्णुरूपञ्च कल्पयित्वा विचक्षणः।
एवं संसाध्य यत्नेन गुप्ते तानि विनिक्षिपेत्।। ५२

## यज्ञपात्रदारूणि

पलाशबिल्वखदिरद्रुमैः पात्रान्तराणि च।
कल्पयेच्च स्रुवादीनि यज्ञोपकरणानि वै।। ५३

## स्रुवः

द्विप्रादेशं स्रुवं कुर्यात्प्रादेशपरिमण्डलम्।
प्रादेशपरिणाहन्तु स्रुवमूलतले विदुः।। ५४
आनुपूर्व्येण सङ्क्षिप्तं मूलाद्गीवान्तमाचरेत्।
तदर्धाग्रपरीणाहः बिलादर्वाग्विधीयते।। ५५
गोलकं बिलविस्तारः माषाच्छादनगर्तकः।
एवं स्रुवं प्रकुर्वीत त्रिभागं परिकल्प्य च।। ५६

## जुहूः

द्वितालमात्रमायामः तदर्धं नाह उच्यते।
एवं मूलं प्रकुर्वित पद्मस्य मुकुलोपमम्।। ५७
भागं पद्मं समुद्दिष्टं मूले चाग्रमुदाहृतम्।
मूलादर्धपरीणाहं दण्डाग्रे तु विचक्षणः।। ५८
अग्रे चाष्टाङ्गुलायामं तलं सम्यक्समाचरेत्।
उभौ पार्श्वे च तन्मानं त्रिकोणञ्चाग्रसंयुतम्।। ५९
भित्तिपार्श्वं प्रकुर्वीत एकाङ्गुलमुदाहृतम्।
निम्नं विस्तारमुद्दिष्टं क्रमेणाग्रं क्षयं चरेत्।। ६०
शेषं तलं प्रकुर्वीत सर्वं युक्त्या समाचरेत्।
एवं जुहूं प्रकुर्वीत दर्वीं पश्चात्समाचरेत्।। ६१

## दर्वी

द्वितालमात्रमायामं घनमेकाङ्गुलं भवेत्।
अग्रे षडङ्गुलायामं विस्तारं भाग उच्यते।। ६२
मूलं पञ्चाङ्गुलायामं तदर्धं विस्तृतं भवेत्।
अग्रान्मूलान्तरञ्चैव मध्ये गोलकमुच्यते।। ६३
अग्रान्मध्यात् क्षयं कुर्यान्मूलान्मध्यात् क्षयञ्चरेत्।
शेषं युक्त्या प्रकुर्वीत दर्वीञ्चैव विचक्षणः।। ६४

## उपजुहूः

द्वितालमात्रमायामं तदर्धं नाह उच्यते।
एवं मूले प्रकुर्वीत अग्रञ्चैव तदर्धकम्।। ६५
ऊर्ध्वं प्रादेशमात्रन्तु चतुरश्रं समन्ततः।
भित्तिरेकाङ्गुलं प्रोक्तमुन्नतं तु तदर्धकम्।। ६६

मध्ये प्रादेशमात्रन्तु नाहं वै वर्तुलाकृतिम्।
निम्नं चतुर्यवं प्रोक्तं क्रमान्निम्नं विचक्षणः।। ६७
ऊर्ध्वं षडङ्गुलायामं त्रियश्रं मुकुलोपमम्।
घृतधारां प्रकुर्वीत वर्तुलां मुकुलाकृतिम्।। ६८
यवद्वयसुविस्तारं तदर्धं निम्नमुच्यते।
उपजुह्वास्समुद्दिष्टमिति प्रोवाच पूर्वजः।। ६९

## समिधः-आज्यम्

वटबिल्वपलाशानां न्यग्रोधाश्वत्थयोरपि।
अपामार्गौदुम्बरयोः शम्याश्च समिधः पृथक्।। ७०
अष्टाधिकशतं कुर्यात्प्रतिहोममयं क्रमः।
सहस्रमाज्यसंयुक्ताः सभ्यस्य समिधः स्मृताः।। ७१
यत्नेन चाहरेदाज्यं कापिलं गव्यमेव च।

## तोरणानि

तोरणानि च कुर्वीत चतुर्दिक्षु यथाक्रमम्।। ७२
अश्वत्थं पूर्वतः कुर्यात्पैतृकं दक्षिणे तथा।
पश्चिमे क्षीरवृक्षञ्च वटवृक्षमथोत्तरे।। ७३
पञ्चहस्तसमुत्सेधं द्विहस्तयुतविस्तृतम्।
मध्ये त्रिशूलं कुर्यात्तु एकारत्निप्रमाणतः।। ७४
अथवा कारयेद्विद्वान् पादायामं विचक्षणः।
पादयोरन्तरं तस्य विस्तारः समुदाहृतः।। ७५
एवं यज्ञालये प्रोक्तस्तोरणानां विधौ विधिः।
गोपुरेषु विमानेषु तोरणानि समाचरेत्।। ७६

अश्वत्थेनैव कुर्याद्वा तत्तद्द्वारप्रमाणतः।
एषामालभे चाश्वत्थं गृह्णीयाद्विधिकोविदः।। ७७

## दर्भमाला

दर्भमाला च कर्तव्या दर्भैः छिन्नैः समायतैः।
द्वितालमात्रं तं दर्भं लम्बनार्थं विहाय च।। ७८
प्रक्षिप्य दर्भौ द्वौ तु मध्ये पर्वणि पर्वणि।
दर्भैः शिष्टाङ्गभागैस्तु रज्जुं कुर्यात्प्रदक्षिणम्।। ७९
एवं संवर्तिताग्रैस्तु दर्भमालाऽनुपालिता।
'ग्रहतारागणास्सर्वे रज्ज्वग्रे तु समर्चिताः।। ८०
परिरक्षन्तु देवा हि दर्भमालागणे स्थिताः।
पिशाचदैत्यरक्षांसि विधूय परितस्त्विह।। ८१
सन्ध्याकाले तानि देवाः कालचक्रे स्थितानि वै'।
इत्युक्ता नित्यकार्येषु दर्भस्थानमपेक्ष्य च।। ८२
दैविकं कर्म कुर्वीत रक्षार्थं दर्भमालया।

## यागशालाविधिः

अतः परं प्रवक्ष्यामि यज्ञशालाविधिं परम्।। ८३
प्रमुखे दक्षिणे वापि यज्ञशालां प्रकल्पयेत्।
षोडशस्तम्भसंयुक्तां मध्ये पादविवर्जिताम्।। ८४
पादैर्द्वादशभिर्युक्तां कूटं वा परिकल्पयेत्।
पादान्तरं चतुर्हस्तं चतुर्दिक्षु यथाक्रमम्।। ८५
एकहस्ततलोत्सेधं तलं कृत्वाऽतिसुन्दरम्।
तोरणैः पूर्णकुम्भैश्च अलङ्कुर्यान्मनोहरम्।। ८६

तन्मध्ये स्थण्डिलं कृत्वा चतुर्हस्तप्रमाणतः।
एकहस्ततलोत्सेधं चतुरश्रं विधानतः।। ८७
तदर्धमथवा कुर्याद्बिम्बाध्यर्धमथापि वा।
अथवा कारयेद्विद्वान् प्रपां लक्षणसंयुताम्।। ८८
देवालयस्य परितः प्रपां कृत्वा विशेषतः।
वितानेन समाच्छाद्य स्थूणाश्चाऽऽवेष्टय यत्नतः।। ८९
मुक्तादामपताकादिसर्वालङ्कारसंयुतम्।
दर्भमालापरिक्षिप्तं तोरणैश्चाप्यलङ्कृतम्।। ९०
कृत्वैव यज्ञवाटन्तु पश्चाद्बिम्बन्तु शोधयेत्।

## बिम्बशुद्धिक्रमः

नवबिम्बप्रतिष्ठा चेत् बिम्बशोधनमुच्यते।। ९१
आलयस्योत्तरे पार्श्वे कुर्यात्कूटं प्रपान्तु वा।
चतुर्हस्तायतां दिक्षु प्रत्येकं चतुरश्रकाम्।। ९२
चतुर्हस्तसमायुक्तां चतुर्हस्तोच्छ्रयां तथा।
तालोत्सेधं तलं तत्र वास्तुहोमार्थमिष्यते।। ९३
मण्डपं वा प्रपां वाऽथ विमानाभिमुखे तथा।
कारयेदधिवासार्थमक्ष्युन्मेषाय कर्मणे।। ९४
सर्वेषां मण्डपानाञ्च प्राकारस्यालयस्य च।
स्तम्भवेष्टनवस्त्रैश्च नानावर्णपरिष्कृतैः।। ९५
अलङ्कारक्रियां कुर्याद्वाद्यघोषपुरस्सरम्।

## कौतुकस्य पीठसङ्गतः

कुत्वाऽङ्कुरार्पणं रात्रौ प्रभातेऽर्चां नवां यदि।। ९६

कौतुकं बेरमादाय पीठं कृत्वा सलक्षणम्।
पश्चात् शिल्पिनमाहूय सम्पूज्याभरणाम्बरैः।। ९७

तदर्चायास्तु पीठे तु मध्ये च परितस्तथा।
पञ्च स्थानानि निम्नानि शिल्पिना परिकल्पयेत्।। ९८

तेषां मध्ये पदे रत्नं 'ब्रह्मा देवा' दिना न्यसेत्।
ऐन्द्रे वज्रं सुसन्न्यस्य याम्ये वैदूर्यमेव च।। ९९

वारुणे स्फटिकं न्यस्य सौम्ये मौक्तिकमेव च।
तत्तन्मन्त्रं समुच्चार्य तत्तद्दिक्षु सुसन्न्यसेत्।। १००

एवं रत्नानि विन्यस्य पञ्चस्थानेषु मन्त्रवित्।
ताम्रेण शिल्पिना तानि समाच्छाद्य दृढं पुनः।। १०१

तस्मिन् पीठे क्रमेणैव शिल्पिनाऽर्चां सुयोजयेत्।
दृढं संयोज्य तं पीठे निश्छिद्रमचलं चरेत्।। १०२

## अधिवासविधिः

नदीतटाकवापीषु देवागारसमीपतः।
जलेऽधिवासनं कृत्वा रक्षां सर्वत्र कारयेत्।। १०३

दर्भमालासमायुक्तं परित्राणसमन्वितम्।
जलं क्षीरोदधिं स्मृत्वा वैष्णवं मन्त्रमुच्चरन्।। १०४

वस्त्रयुग्मं समास्तीर्य देव्योर्देवस्य वै पृथक्।
प्राक्शिरः शाययेद्देवं विष्णुसूक्तं समुच्चरन्।। १०५

देव्यौ च शाययेत्पश्चात् तत्तन्मन्त्रमुदीरयन्।
पञ्चाहं त्रियहं वापि एकाहमथवा तथा।। १०६

## पञ्चगव्याधिवासादिः

पश्चाद्देवेशमादाय पञ्चगव्येऽधिवासयेत्।
जलद्रोणीं पूरयेच्च पञ्चगव्यप्रयोगतः।। १०७

जलद्रोण्या अलाभे तु अवटं वापि खानयेत्।
आलयाद्दक्षिणे पार्श्वे उत्तरे वा मनोरमे।। १०८

बिम्बाध्यर्धप्रमाणेन आयतं चतुरश्रकम्।
विस्तारं तु तदर्धं स्यात् बिम्बदघ्नञ्च निम्नकम्।। १०९

पञ्चगव्यैस्तु सम्पूर्य पुष्पाक्षतसमन्वितम्।
कुशदर्भसमायुक्तं गन्धधूपसमन्वितम्।। ११०

एवं संसाध्य यत्नेन विष्णुसूक्तं समुच्चरन्।
शाययेद्देवदेवेशं प्राक्शिरः प्रयतात्मवान्।। १११

द्व्यहं तथैवमेकाहं पञ्चगव्येऽधिवासयेत्।
पश्चाद्देवेशमादाय कुशोदे शाययेत्तथा।। ११२

चलेषु नवबिम्बेषु कृत्वा चैवाक्षिमोचनम्।
पश्चाज्जलाधिवासादि कुर्यादित्येव शासनम्।। ११३

## अक्ष्युन्मोचनम्- (अमन्त्रकम्)

प्रतिष्ठोक्तदिनात्पूर्वं त्रियहे वै ध्रुवे नवे।
शिल्पशास्त्रोक्तविधिना शिल्पिना चाक्षिमोचनम्।।११४

कारयित्वा गुरुः धीमान् दृष्टिमण्डलमार्गतः।
दृष्टिमण्डलमध्ये तु यूकामात्रं व्यपोहयेत्।। ११५

अमन्त्रकञ्च यत्सर्वं शिल्पिना कारयेत्क्रमात्।
वस्त्रैराभरणैस्सर्वैः पूजयित्वा तु शिल्पिनम्।। ११६

## पीठमानम्

तस्मिन् काले ततः कुर्याज्जीवस्थाने विधानतः।
गर्भालये ब्रह्मभागे प्राणपीठमुदाहृतम्।। ११७

अर्चापीठप्रमाणं स्यात् प्रतिदिक् चतुरङ्गुलम्।
ऊर्ध्ववेद्यास्तु विस्तारो द्वादशाङ्गुलमुन्नतिः।। ११८
भागावनतमेकैकं भागविस्तारसंयुतम्।
एवं त्रिवेदिसहितमर्चनापीठमाचरेत्।। ११९
श्रीभूमी तु समुद्दिश्य दक्षिणोत्तरयोः क्रमात्।
एवमेव प्रकुर्वीत सहैव पृथगेव वा।। १२०
बहुबेरप्रतिष्ठा चेत्तत्तत्स्थाने विशेषतः।
तत्तत्पीठप्रमाणेन चैवं पीठानि कल्पयेत्।। १२१

## विमानशुद्धिः

अथ शुद्धिक्रियामार्गं वक्ष्ये देवविमानयोः।
विमानशुद्धिं वक्ष्यामि प्रथमं विधिना बुधाः।। १२२
श्वेतश्लक्ष्णसुधाक्षोदैः स्थूलं स्थाने तु पूर्वतः।
आलेपनं प्रकुर्वीत बालस्थाने मृदा तथा।। १२३
शिल्पिकर्मसमाप्तिञ्च शिल्पशास्त्रक्रमेण तु।
कृत्वा च शिल्पिनं पूज्य विमानञ्चाङ्कणं तथा।। १२४
संशोधयेत्पुनस्तत्र गोभिः शुद्धिञ्च कारयेत्।
विमानाङ्कणमाक्षिप्य दूर्वाग्रान् सतृणानपि।। १२५
पलालञ्चापि निक्षिप्य पात्राणि सजलानि च।
पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा।। १२६
समतीते दशाहे तु धेनूनां निकरैर्गवाम्।
देवालयाङ्कणे चैव शुद्ध्यर्थं शोधयेत्तदा।। १२७
रात्रौ देवालयस्थानां गवां दुग्धं न चाहरेत्।
दुग्धपानादिसन्तृप्तैः वत्सकैः कृतवल्गितैः।। १२८

वत्सपीतस्तनाग्रेभ्यः संसृतक्षीरबिन्दुभिः।
गोरोमभिः सफेनैश्च गोशकृन्मूत्रसञ्चितैः।। १२६
शुद्धं भवति तत् स्थानं गावः शुद्धाश्शुभा मताः।
गोभिः शुद्धिञ्च कृत्वा तु कुर्याद्ब्राह्मणभोजनम्।। १३०
गर्भगेहे बहिर्वापि ब्राह्मणान् भेजयेत्तदा।
चतुर्विंशति पञ्चाशच्छतं वाप्यधिकं ततः।। १३१
पवित्रमिति सम्प्रोक्तं तस्थाने भोजयेत्ततः।
भोजनानन्तरं तेषामुच्छिष्टं परिशोधयेत्।। १३२

## बिम्बशुद्धिः

बिम्बशुद्धिं प्रवक्ष्यामि ध्रुवकौतुकयोस्ततः।
वर्णयुक्ते ध्रुवे तत्र चित्राभासे विशेषतः।। १३३
तदालयकृतेनापि वास्तुहोमेन वै तथा।
अङ्गहोमेन चेष्टेन पुण्याहं प्रोक्षणं चरेत्।। १३४
द्विजेभ्यो रुक्मदानेन यथाशक्ति कृतेन तु।
भोजनेन च विप्राणां बेरशुद्धिर्विधीयते।। १३५
शिल्पिनन्तु विसृज्यैव पश्चात्कार्यं समाचरेत्।
परेऽह्नि कार्यं मन्त्रेण गुरुणा चाक्षिमोचनम्।। १३६
अक्षिमोचनमुद्दिष्टं बेरशुद्ध्यर्थमादितः।

## श्रामणकाग्निकुण्डकल्पनम्

पूर्वन्तु वास्तुहोमार्थमालयस्य तथोत्तरे।। १३७
स्थण्डिलञ्चोपलिप्यैव अलङ्कुर्यात्तु वर्णकैः।
सागरङ्गमनद्यादावाहृत्य सिकताः शुभाः।। २३८

द्वादशाङ्गुलमुत्सेधं तावद्घनमनिन्दितम्।
द्वात्रिंशदङ्गुलायामं चतुरश्रं समन्ततः।। १३९
ततो मध्येऽवकाशः स्याच्चतुर्विंशतिकाङ्गुलम्।
अवगाढन्तु तस्यैव द्वादशाङ्गुलमिष्यते।। १४०
ततः कुर्याद्बहिर्वेदिं द्विचत्वारिंशदङ्गुलैः।
उत्सेधो भाग उद्दिष्टः ऊर्ध्ववेद्या विधानतः।। १४१
मध्यवेद्यास्तु विस्तारः पञ्चाङ्गुल इति स्मृतः।
उत्सेधो भाग उद्दिष्टः मध्यवेद्याः प्रकीर्तितः।। १४२
ततः कुर्यादधोवेदिं पञ्चाशद्भिरथाङ्गुलैः।
उत्सेधो भाग उद्दिष्टः विस्तारस्तु द्विगोलकः।। १४३
दक्षिणे ब्रह्मणः पीठं षोडशाङ्गुलमायतम्।
चतुरश्रं समं कुर्यात् भागोन्नतिसमन्वितम्।। १४४
तस्य पश्चिमभागे तु पितृस्थानं प्रकल्पयेत्।
षोडशाङ्गुलमायामः उन्नतं गोलकं भवेत्।। १४५
शूर्पाकारञ्च कृत्वा तु दक्षिणाग्रं प्रकल्पयेत्।
उत्तरे सोममुद्दिश्य षोडशाङ्गुलमायतम्।। १४६
भागोन्नतं प्रकुर्वीत समवृत्तं तु पीठकम्।
वेदिप्रमाणं कर्तव्यं सीवनीक्षतचन्द्रवत्।। १४७
एवं श्रामणकं कुण्डं कृत्वाऽथाग्निञ्च साधयेत्।

## अग्निमन्थनम्

आलयात्पुरतो वाऽपि उत्तरे वा मनोरमे।। १४८
स्थण्डिलञ्चोपलिप्यैव वर्णालङ्कारमाचरेत्।
धान्यराशिञ्च संस्तीर्य दर्भानुपरि संस्तरेत्।। १४९

अरणी द्वे सुसन्न्यस्य पूजयेत्तु यथाविधि।
अर्चयेदधरारण्यां हरिणीं विष्णुवल्लभाम्।।　　१५०
विष्णुमभ्यर्चयेद्दण्डे ऊर्ध्वारण्यां हुताशनम्।
आचार्यः प्राङ्मुखः स्थित्वा योजयित्वाऽथ मन्त्रवित्।।१५१
रज्जुं मौञ्जीमयीं कृत्वा त्रिवृतां शेषमर्चयेत्।
'जातवेद' इति प्रोच्य मन्थनं सम्यगाचरेत्।।　　१५२
जपन् वैश्वानरं सूक्तमरण्यां मन्थनं चरेत्।
यावदग्निसमुत्पत्तिः तावद्वै मन्थनं भवेत्।।　　१५३
उत्पन्नमग्निमादाय 'अयन्त' इति चोच्चरन्।
परितस्तु करीषाद्यैः योजयित्वाऽथ युक्तितः।।　　१५४
इन्धनानि सुनिक्षिप्य जातमग्निं सुरक्षयेत्।

## ऋत्विग्वरणम्

त्रियहं द्वियहं वाऽपि एकाहं वा विधानतः।।　　१५५
उपवासञ्च कृत्वा तु ऋत्विजः प्रयतास्तथा।
स्नात्वा स्नानविधानेन जप्त्वा सूक्तानि वै क्रमात्।।　१५६
प्राणायामसहस्रन्तु कुर्युस्सर्वे जितेन्द्रियाः।
शतञ्चाष्टसमायुक्तं कुर्युर्वाऽत्र समाहिताः।।　　१५७
ब्रह्मयज्ञञ्च कृत्वा तु स्वकीयाग्नीनुपास्य च।
ध्यात्वा नारायणं देवं समासीनं यतव्रताः।।　　१५८
तत्काले यजमानस्तु सर्वांस्तान् सम्प्रणम्य च।
'अथावनीद' मन्त्रेण मण्डलान्युपलिप्य च।।　　१५९
'अस्त्वासन' मिति प्रोच्य आसनान्युपलिप्य च।

पवित्रं वज्रसंयुक्त 'मग्निमीलेति' मन्त्रतः।
ऋत्विजः प्राशयित्वा तु पायसेन घृतेन च।। १६१
'शन्नो दे' वीति मन्त्रेण पश्चादाचमनं ददेत्।
यजमानश्च तत्काले स्वयं भोजनमाचरेत्।। १६२
तान् पश्चाद्यजमानस्तु तत्तत्कार्ये नियोजयेत्।
पूर्वोक्तगुणसम्पन्नाश्चत्वारो मूर्तिधारकाः।। १६३
होमेषु षोडश प्रोक्ताः सर्वकर्मसु निश्चलाः।
एको हौत्रे समुद्दिष्टः एको वै स्नापने तथा।। १६४
अक्षिमोचनकार्यार्थं द्वावत्र वृणुयात्तथा।
सर्वदेवार्चनार्थन्तु चत्वारस्सम्प्रकीर्तिताः।। १६५
एवमाहृत्य यत्नेन पूजयित्वा पृथक् पृथक्।
कृत्वा शास्त्रोक्तविधिना भगवन्तमनुस्मरन्।। १६६
ध्यायन्नासीत तद्रात्रौ यजमानस्सदा हरिम्।
प्रभाते च स धर्मात्मा सूत्रोक्तेन विधानतः।। १६७
स्नात्वा स्नानविधानेन आचार्यः स्थापकैस्सह।
देवालयं शनैर्गत्वा प्रदक्षिणमथाचरेत्।। १६८
मृष्टसिक्तोपलेपाद्यैः संस्कुर्याद्देवतागृहम्।
अक्ष्युन्मोचनमुद्दिश्य वास्तुहोमं समाचरेत्।। १६९

## समन्त्रकाक्ष्युन्मेषप्रयोगः

अक्ष्युन्मेषमथो वक्ष्ये कौतुकस्य ध्रुवस्य च।
कृत्वाऽङ्कुरार्पणं रात्रौ प्रभाते मध्यमेऽहनि।। १७०
प्रासादस्योत्तरे पार्श्वे कृते श्रामणकेऽनले।

सूत्रोक्तेन विधानेन भूमियज्ञं यजेत्क्रमात्।
पर्यग्निञ्चैव कृत्वा तु बिम्बपार्श्वे विशेषतः।। १७२
पञ्चगव्यैः समभ्युक्ष्य गायत्र्या प्रणवाद्यया।
स्थानशुद्धिं ततः कृत्वा पुण्याहं वाचयेत्क्रमात्।। १७३

## औपासनाग्निकुण्डकल्पनम्

देवालयस्य परितः कुण्डमौपासनं चरेत्।
स्थण्डिलञ्चोपलिप्यैव वालुकाभिः प्रपूरयेत्।। १७४
द्वात्रिंशदङ्गुलायामं चतुरश्रं समन्ततः।
षडङ्गुलसमुत्सेधं स्थलं सम्यक् प्रकल्प्य च।। १७५
तत्र मध्येऽवकाशः स्याच्चतुर्विंशतिकाङ्गुलम्।
अवगाढन्तु तस्यैव भागमात्रमुदाहृतम्।। १७६
तद्वाह्ये बाह्यवेदिस्स्याच्चत्वारिंशद्भिरङ्गुलैः।
उत्सेधो विस्तरश्चैव भागमात्रं प्रवक्ष्यते।। १७७
ब्रह्मसोमपितृस्थानकल्पनं विधिना चरेत्।
द्वादशाङ्गुलमायामं चतुरश्रं समन्ततः।। १७८
उत्सेधो भाग उद्दिष्टः ब्रह्मस्थानस्य कारयेत्।
तस्य पश्चिमभागे तु पितृस्थानं प्रकल्पयेत्।। २७९
द्वादशाङ्गुलमायाममुन्नतं गोलकं भवेत्।
शूर्पाकारं तु कृत्वा तु दक्षिणाग्रं प्रकल्पयेत्।। १८०
उत्तरे सोममुद्दिश्य स्थानं वृत्तं समाचरेत्।
द्वादशाङ्गुलमायाममुन्नतं गोलकं भवेत्।। १८१
वेदिप्रमाणं कर्तव्यं सीवनीक्षतचन्द्रवत्।
अक्षिमोचनमुद्दिश्य चैवमौपासनं चरेत्।। १८२

## अक्ष्युन्मेषहोमः

आघारं विधिवत्कृत्वा मथितेनैव वह्निना।
अङ्गहोमञ्च हुत्वा तु कापिलेन घृतेन वै।। १८३
तदलाभेऽन्यगव्येन माहिषाजाविकं विना।
मूर्धादि पादपर्यन्तमङ्गं प्रत्येकमुच्चरन्।। १८४
स्वाहान्तं योजयित्वा तु देवेशं मनसा स्मरन्।
विष्णुसूक्तञ्च जुहुयाद्व्याचाहृत्यन्तमतः परम्।। १८५
सुपुष्टाङ्गां सवत्साञ्च गामेकां स्थापयेत्पुरः।
तिलराशिं तथा धान्यराशिं सम्मृत्य भक्तितः।। १८६
देवस्याभिमुखे कृत्वा पश्चाद्वर्णं प्रगृह्य च।
सुवर्णेन कृतेनैव पात्रे तूलिकयाऽन्विते।। २८७
देवस्य दक्षिणे पार्श्वे उत्तराभिमुखः स्थितः।
पटप्रच्छादनं कृत्वा ध्यायन् षण्मण्डलाधिपान्।। २८८
पक्ष्म वर्म तथा रक्तशुक्लकृष्णानि चिन्तयन्।
तथा ज्योतिर्मण्डलञ्च यानि षण्मडलानि वै।। १८६
पृथिव्यापस्तथा तेजो वायुराकाश इत्यपि।
परमात्मेति च ज्ञेया ये ते षण्मण्डलाधिपाः।। १६०
विष्णुसूक्तं गुरुर्जप्त्वा अक्ष्युन्मोचनमारभेत्।
वैष्णवं सूक्तमुच्चार्य ज्योतिर्मण्डलमाचरेत्।। १६१
'श्रिये जाते' ति मन्त्रेण श्रीदेव्याश्चाक्षिमोचनम्।
मेदिनी मन्त्रमुच्चार्य मेदिन्याश्चाक्षिमोचनम्।। १६२
तत्तन्मन्त्रं समुश्चार्य परिवाराक्षिमोचनम्।
प्रतिष्ठोक्तदिनात्पूर्वं द्वितीये वा समाहितः।। १६३

आचार्यो मन्त्रसंयुक्तमाचरेदक्षिमोचनम्।
पश्चादग्निं विसृज्यैव आदित्यं प्रणमेद्बुधः।। १९४

## दर्शनद्रव्यदर्शनम्

प्रच्छन्नपटमाबद्ध्य देवस्याग्रे विशेषतः।
सौवर्णादिषु पात्रेषु घृतं मधु तथा दधि।। १९५
क्षीरञ्च पृथगाहृत्य प्रत्येकं प्रस्थसम्मितम्।
द्रव्याणि दर्शनीयानि देवस्याग्रे विनिक्षिपेत्।। १९६
अष्टौ धान्यानि च पृथक् राशीः कृत्वाऽग्रतः पृथक्।
पटमुत्सार्य काले तु जयशब्दसमन्वितम्।। १९७
वाद्यघोषसमायुक्तं देवेशं सम्प्रणम्य च।
दर्शयेद्देवदेवस्य द्रव्यं द्रव्यं समाहितः।। १९८
जप्त्वा गोदानसूक्तन्तु सवस्त्रां कांस्यदोहनाम्।
स्वर्णशृङ्गां रौप्यखुरां सवस्त्रां गां प्रदर्शयेत्।। १९९
आचार्यं पूजयित्वा तु वस्त्राभरणकुण्डलैः।
शिष्यांश्च पूजयेत्तद्वद्वस्त्रयुग्माङ्गुलीयकैः।। २००
हिरण्यपशुभूम्यादि गुरवे दक्षिणां ददेत्।
ब्राह्मणान् भोजयित्वा तु तर्पयेद्दक्षिणादिभिः।। २०१

## वास्तुहोमः (वास्तुपुरुषलक्षणम्)

प्रतिष्ठोक्तदिनात्पूर्वं द्वितीये वा तृतीयके।
आलयस्योत्तरे पार्श्वे वास्तुहोम उदीरितः।। २०२
(वास्तुहोमप्रसङ्गे तु वास्तुपूरुष उच्यते)
कल्पयेद्वास्तुपुरुषं दशतालेन मानतः।। २०३

आलये गोपुरे चैव मण्डपे चाङ्कणेऽपि वा।
यावान् विस्तार उद्दिष्टः तावांस्तस्याङ्गमुच्यते।। २०४
द्वौ वास्तुपुरुषौ ज्ञेयौ चलाचलविभेदतः।
प्राक्च्छिरोऽधोमुखो मुख्यः भूमिस्थस्स तु सर्वदा।।२०५
स स्थाणू रुद्रदेहात्मा शर्व इत्यभिधीयते।
तस्योपरि च यश्शेते चलस्सर्वप्रभुर्वरः।। २०६
मध्याह्ने प्राक्च्छिराश्शेते स सायं दक्षिणाशिराः।
निश्यर्धे पश्चिमशिराः प्रातरुत्तरदिक्च्छिराः।। २०७
सदाऽम्बरमुखो भूत्वा सङ्क्रमेत्सङ्क्रमक्रमात्।
एवं विज्ञाय मनसा वास्तुहोमं समाचरेत्।। २०८
आलयस्योत्तरे कुर्याद्वास्तुकुण्डं विचक्षणः।
मण्डपे मध्यमे कुर्याद्गोपुरे च तथैव च।। २०९
प्रासादस्योत्तरे कुर्यात् स्थण्डिलं चतुरश्रकम्।
गोमयेनोपलिप्यैव वर्णालङ्करणं चरेत्।। २१०
वास्तुपूरुषरूपन्तु कल्पयित्वा विचक्षणः।
कुण्डं श्रामणकं तस्य पूर्वोक्तेन विधानतः।। २११
कुक्षिप्रदेशे कुर्वीत धनधान्यविवृद्धये।
बाहुप्रदेशे कुर्वीत पुत्रपौत्राभिवृद्धये।। २१२
नाभेरधःप्रदेशे तु वास्तुकुण्डं न कारयेत्।
कुण्डमेवं कल्पयित्वा साधितेनैव चाग्निना।। २१३
आघारं विधिवत्कृत्वा अदितेन्वादिभिः क्रमात्।
परिस्तीर्य तु मन्त्रज्ञः पश्चादग्निं प्रणम्य च।। २१४
समिद्भिर्मूलमध्याग्रघृताक्ताभिर्यजेत्ततः।
'भूमियज्ञाय स्वाहे' ति 'यज्ञदेवे' ति च क्रमात्।। २१५

'मेदिनी-देवी' 'समुद्रेति-श्रृङ्गे-वायुपरी' ति च।
व्याहृत्यन्तञ्च हुत्वा तु उल्कया चाग्निमाहरेत्।। २१६
'अहमग्नेऽग्निमि' त्युक्त्वा मूलबिम्बस्य पार्श्वतः।
गर्भालये च सर्वत्र तथा चैवार्धमण्डपे।। २१७
स्नपनालये च कुर्वीत गोपुरे च तथैव च।
प्राकारादिषु सर्वत्र प्रादक्षिण्यक्रमेण वै।। २१८
दर्शयित्वा विधानज्ञः पश्चादग्निं विसर्जयेत्।
पञ्चगव्यं समादाय मृत्पात्रे तु विशेषतः।। २१९
प्रोक्षयेत्कुशकूर्चेन 'अणोरणीया' निति मन्त्रतः।
मूलबिम्बस्य परितः दर्शयित्वा च सर्वशः।। २२०
पुनः कृत्वा तु पुण्याहं तत्र प्रोक्षणमाचरेत्।
पश्चादग्निं समासाद्य परिस्तीर्य च पावकम्।। २२१
'ये ते शत-मुदुत्तम-मयाश्चाग्ने' ति च क्रमात्।
'आपस्सृजन्तु' ति चत्वारो हूयन्ते वारुणाः स्मृताः।।२२२
'विश्वेदेवस्य' इत्युक्ता 'विश्वे अद्य' ततः परम्।
वैश्वदेवञ्च हुत्वा तु वैष्णवञ्च सुहूयताम्।। २२३
'अतो देवा-इदं विष्णुः-त्रीणि पदा विचक्रमे।
विष्णोः कर्माणि-तद्विष्णोः-तद्विप्रास' इति ब्रुवन्।।२२४
'रुद्रमन्यञ्च' हुत्वा तु 'त्र्यम्बक'ञ्च ततः परम्।
'ब्रह्म जज्ञान' मित्युक्ता 'हिरण्यगर्भ' इति ब्रुवन्।।२२५
'मिश्रवासस' इत्युक्त्वा 'युवमेतानि' हूयताम्।
'अग्नीषोमविमं' प्रोच्य 'आन्यं दिव' इतीरयन्।। २२६
हुत्वा 'बृहस्पति' रिति 'बृहस्पतिस्सोम' मित्यपि।
[illegible]

'त्रातारादी'स्ततो हुत्वा ऐन्द्रमन्त्रांस्त्रयोदश।
'यमो दाधार-नमस्ते' ति यममन्त्रौ हुनेत्तथा।। २२८
'मित्रस्य चर्षणी' ति 'मित्रो जना' निति ब्रुवन्।
'प्रसमित्रे' ति हुत्वा तु व्याहृन्यन्तं पृथक् पृथक्।। २२९
एवं हुत्वा विधानेन अन्ततः परिषेचयेत्।

## विमानाङ्गहोमः

विमानञ्चेन्नवं तत्र विमानाङ्गाहुतीर्यजेत्।। २३०
उपानाय जगत्यै च कुमुदायेति हूयताम्।
वल्लिकायै च हुत्वा तु 'खण्डायेति' ततः परम्।। २३१
पट्टिकायै ततो हुत्वा ताटिकायै ततः परम्।
कर्कर्यै चैव हुत्वा तु कुम्भायेति ततः परम्।। २३२
फलकायै च हुत्वा तु कपोताय ततः परम्।
ग्रीवाया इति हुत्वा तु स्कन्धग्रीवाय इत्यपि।। २३३
स्थूपिकायै च हुत्वा तु व्याहृत्यन्तं पृथक् पृथक।
जयादीनपि हुत्वा तु विष्णुसूक्तं हुनेत्ततः।। २३४
वास्त्वग्नौ वास्तुहोमञ्च जुहुयात्तत्र तत्र तु।
अन्तहोमं ततो हुत्वा आदित्यं प्रणमेत्क्रमात्।। २३५

## अग्न्यायतनम्-कुण्डलक्षणम्

अ.त ऊर्ध्वं प्रवक्ष्यामि अग्न्यायतनलक्षणम्।
शय्यास्थानस्य पूर्वे तु कुण्डं श्रामणकं चरेत्।। २६६
पूर्वोक्तेन विधानेन ऐन्द्रे चौपासनं चरेत्।
धनुराकृतिकं कुर्याद्याम्ये वेदिद्वयान्वितम्।। २३७

त्रिंशदङ्गुलसम्भ्रान्त्या कृते वृत्तेऽर्धभाजिते।
अवाचीनेन चार्धेन कल्पितो धनुराकृतिः।। २३८
अन्वाहार्याग्निरुदितः क्षेत्रमौपासनाग्निवत्।
उत्सेधं विस्तृतिञ्चैव भागं वेद्याः समाचरेत्।। २३९
ब्रह्मसोमपितृस्थानान्याहरेदुक्तमार्गतः।
द्वादशाङ्गुलमायामः उन्नतं भाग उच्यते।। २४०
अन्तरं भाग उद्दिष्टः पैतृकं गोलकं चरेत्।
पश्चिमे वृत्तकुण्डः स्याद्वेदिद्वयसमन्वितः।। २४१
अथाष्टादशभिः सार्धैरङ्गुलैश्च भ्रमीकृते।
वृत्ते तदूर्ध्ववेदिस्स्यात् वृत्तकुण्डस्य मानतः।। २४२
उत्सेधो विस्तृतिश्चैव वेद्योर्भागं प्रचक्षते।
ब्रह्मसोमपितृस्थानान्युक्तमार्गेण कारयेत्।। २४३
त्रिकोणञ्चोत्तरे कुर्यान्मेखलाद्वयसंयुतम्।
सपादत्रियवैर्युक्ताष्टचत्वारिंशदङ्गुलैः।। २४४
भुजमानयुतः कुण्डस्त्रिभुजस्त्वावसत्थ्यकः।
विस्तार उन्नतञ्चैव वेद्योर्भागं प्रचक्षते।। २४५
शेषञ्च पूर्ववत्कुर्यादग्निकुण्डं विशेषतः।
सभ्यस्य दक्षिणे कुर्यात्पौण्डरीकं क्रमाद्बुधः।। २४६
द्वादशाङ्गुलमुत्सेधं समवृत्तं प्रकल्पयेत्।
अथाष्टादशभिस्सार्धैरङ्गुलैश्च भ्रमीकृते।। २४७
वृत्तं तदूर्ध्ववेदिस्स्यात्पौण्डरीकानलस्य वै।
उत्सेधो विस्तृतिश्चैव ऊर्ध्ववेद्या द्विगोलकम्।। २४८
निम्नमष्टाङ्गुलं कुर्याच्छिष्टं मृद्भिश्च पूरयेत्।
मध्यवेद्यास्समुत्सेधं भागमात्रं प्रचक्षते।। २४९

विस्तारो भाग उद्दिष्टो मध्यवेद्यास्तथैव च।
अधोवेद्यास्समुत्सेधश्चतुरङ्गुलमेव च।। २५०
रसाङ्गुलन्तु विस्तारः दलैष्षोडशभिर्युतः।
ब्रह्मसोमपितृस्थानान्याचरेत्पूर्ववद्बुधः।। २५१
कुर्यादौपासनाग्निञ्च प्रमुखे वीशशेषयोः।
इन्द्रादिलोकपालानामालयास्सन्ति यत्र वै।। २५२
अग्निमौपासनं कुर्यात्तत्तदालयसम्मुखे।
भूतस्थाने प्रकुर्वीत भूतपीठस्य पूर्वतः।। २५३
एवं कुण्डानि निर्माय पश्चादग्निं सुसाधयेत्।

## स्नानश्वभ्रम्

देवालयस्य पुरतः स्नापनार्थं विचक्षणः।। २५४
मण्डपं वा प्रपां वाऽपि शालां वा कूटमेव वा।
कारयित्वा विधानेन मध्ये श्वभ्रञ्च कारयेत्।। २५५
अर्चापीठप्रमाणाद्धि प्रतिदिक् चतुरङ्गुलम्।
हित्वाऽवकाशमौपासनाग्निवत् श्वभ्रमाचरेत्।। २५६

## शालालङ्कारः

श्वभ्रस्य परितः कुर्यात्पङ्क्तिं किष्कुप्रमाणतः।
पञ्चकिष्कुप्रमाणं वा यथालाभमथापि वा।। २५७
द्वितालविस्तृताञ्चैव सङ्गतां गोलकोन्नताम्।
तण्डुलैर्व्रीहिभिर्वाऽपि पङ्क्तिं सम्प्रतिकारयेत्।। २५८
चतुर्द्वारसमायुक्तां द्वितालां तालमानतः।
दर्भमालाञ्च परितः पादाग्रेष्ववलम्बयेत्।। २५९

वितानेन समाच्छाद्य स्थूणानां वेष्टनं चरेत्।
मुक्तादामपताकाद्यैरलङ्कुर्याद्विशेषतः।। २६०
द्वारतोरणसंयुक्तं पूर्णकुम्भसमन्वितम्।
क्रमुकैः कदलीभिश्च इक्षुकाण्डैरलङ्कृतम्।। २६१
एवं सुसाध्य यत्नेन गृहीत्वा कलशानि च।
संशोध्याऽऽम्लादिना शुद्धतोयेनाऽऽवेष्ट्य तन्तुना।। २६२
पूरयित्वा ततो द्रव्यैः शरावैश्च पिधाय वै।
संसाध्यैवमलङ्कारैः पश्चात्संस्थापयेद्बुधः।। २६३

## सप्तकलशस्नपनप्रयोगः-कलशन्यासप्रकारः

द्रव्यपूर्णानि कलशान्यादाय विनयानतः।
उभाभ्यामपि हस्ताभ्यामुक्तस्थानेषु सन्न्यसेत्।। २६४
ऐशान्ये पञ्चगव्यन्तु ईशानेन्द्रान्तरे घृतम्।
इन्द्राग्न्योरन्तरे चैव न्यसेन्मधु यथाविधि।। २६५
दधि न्यसेदथाग्नेय्यां यमाग्न्योरन्तरे पयः।
यमनीलान्तरे गन्धं नैर्ऋत्यामक्षतोदकम्।। २६६
नीलवारुणयोर्मध्ये स्थापयेत्तु कुशोदकम्।
वरुणोदानयोर्मध्ये सन्नयसेच्च फलोदकम्।। २६७
रत्नोदकञ्च वायव्ये जप्योदं वायुसोमयोः।
ईशानसोमयोर्मध्ये न्यसेत्सर्वौषधीजलम्।। २६८
उपस्नानानि सर्वेषां तत्तद्वामे सुसन्न्यसेत्।
एवं विन्यस्य कलशान्यधिदेवांत्समर्चयेत्।। २६९
वस्त्रैरावेष्ट्य कलशान्यूर्ध्वं पुष्पाणि निक्षिपेत्।
यागस्थानं समासाद्य कुण्डेष्वैन्द्रादिषु क्रमात्।। २७०

आघारं विधिवत्कृत्वा मथितेनैव वह्निना।
परिवाराग्निषु तथा सर्वेष्वाघारमाचरेत्।। २७१
एवं कृत्वा विधानेन पश्चात्कार्यं समाचरेत्।
अधिवासगतं देवमासाद्यैवानुमान्य च।। २७२
पूर्वालङ्कृतवस्त्रादीन् समुद्धार्याप्रमादतः।
तत उद्धृत्य देवेशमाम्लेन परिशोधयेत्।। २७३
वस्त्रैराभरणैस्स्रग्भिरलङ्कृत्यार्चयेत्क्रमात्।

## कुम्भवेदिः

आलयाभिमुखे चैव मण्डलञ्चोपलिप्य च।। २७४
पञ्चवर्णैरलङ्कृत्य धान्यराशिं प्रकल्पयेत्।
तण्डुलानुपरि न्यस्येत्पुष्पाणि च तथाऽक्षतान्।। २७५
तत्र देवञ्च संस्थाप्य पाद्याद्यर्घ्यान्तमर्चयेत्।
नववस्त्रपरीधानः सोत्तरीयस्स्वलङ्कृतः।
तस्मिन् काले गुरुर्धीमान् कुम्भपूजां समाचरेत्।। २७६

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे भगवत्प्रतिमालक्षणकथनं नाम
षोडशोऽध्यायः।

----------

अथ सप्तदशोऽध्यायः

----------

## कुम्भपूजाविधिः

अथ वक्ष्ये कुम्भपूजाविधिं विस्तरतो विभोः।
शृणुध्वमवधानेन ऋषयः संश्रितव्रताः।। १

द्वात्रिंशत्प्रस्थसम्पूर्णं सम्यक् दग्धं मनोहरम्।
पक्वबिम्बफलाकारं कुम्भमादाय वै नवम्।। २
सूत्रेण वेष्टयित्वा तु यवान्तरविधानतः।
नादेयं जलमाहृत्य तत्कुम्भं तत्र शोधयेत्।। ३
धूपयित्वा विधानेन सर्वैर्गन्धैर्विशेषतः।
वस्त्रपूतेन नादेयजलेन परिपूरयेत्।। ४
उशीराद्यैः परिमलैः द्रव्यैस्संवास्य विन्यसेत्।

## रत्नादिक्षेपणम्

न्यसेत्पुष्पाक्षतादीनि नवरत्नानि च न्यसेत्।। ५
पद्मरागञ्च वज्रञ्च वैदूर्यं मौक्तिकं तथा।
प्रवालेन सहैतानि पञ्च रत्नानि निर्दिशेत्।। ६
पुष्परागं मरकतं गोमेदञ्चेन्द्रनीलकम्।
पञ्चरत्नैश्च पूर्वोक्तैर्नव रत्नानि निर्दिशन्।। ७
नवरत्नयुतं तोयं देवेशस्यास्पदं यतः।
अष्टमङ्गलसंयुक्तं गजतार्क्ष्यसमायुतम्।। ८
कूर्मरूपसमायुक्तं पञ्चायुधसमन्वितम्।
ब्राह्मणानां हितार्थन्तु स्रुक्स्रुवौ च कमण्डलुम्।। ९
अन्यानि यज्ञभाण्डानि स्युः सुवर्णकृतानि तु।
अङ्कुशं क्षत्रजातानामस्त्रशस्त्रसमन्वितम्।। १०
छत्रचामरसंयुक्तं ध्वजं कनकनिर्मितम्।
वैश्यानान्तु तुलां कुर्यात् शूद्राणां युगलाङ्गले।। ११
सुवर्णेनैव कृत्वा तु कुम्भपूजार्थमाहरेत्।
कुम्भं वेद्यां विनिक्षिप्य वस्त्रयुग्मेन वेष्टयेत्।। १२

पल्लवैः पुष्पमालाभिरलङ्कारैश्च भूषयेत्।
कूर्चञ्च तत्र निक्षिप्य कुम्भं संसाधयेद्बुधः।। १३
देवस्याभिमुखे न्यस्य धान्यवेद्युपरि क्रमात्।
कुम्भस्य दक्षिणे पार्श्वे उपविष्टस्सुखासने।। १४
उदङ्मुखस्सन्नाचार्यो ध्यानमाविश्य यत्नतः।
विष्णुसूक्तं जपन्नेव कुम्भे रत्नादि विन्यसेत्।। १५
पादौ भूमिस्पृशौ कृत्वा स्वस्तिकेनैव बन्धयेत्।
वाममुत्तानकं कुर्यात्करं पश्चाच्च दक्षिणम्।। १६

## ध्यानप्रकारः

एवं ब्रह्माञ्जलिं कृत्वा देवदेवमनुस्मरन्।
निवातगतनिष्कम्पप्रदीप इव निश्चलः।। १७
नयने नासिकाग्रे च विन्यसेत् सुसमाहितः।
प्रणवो धनुश्शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।। १८
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्।
द्वे तत्वे ब्रह्मणस्स्यातां मूर्तञ्चामूर्तमेव च।। १९
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते।
अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत्।। २०
यथा सर्वगतस्याग्नेऽरण्यां सन्निधिर्भवेत्।
मन्थनेन तथा विष्णोः ध्यानात्कुम्भे तु सन्निधिः।। २१
एकधा बहुधा तद्वत् शतधा च सहस्रधा।
प्रादुर्भावात्तु दृश्येत सोपाधिस्तु मणिर्यथा।। २२
उपरागवशाद्यद्वत् विशुद्धस्स्फटिको मणिः।
भिन्नरूपाणि भजते तथा विष्णुस्सनातनः।। २३

यथाऽग्निरिन्धनैरित्थो महान् भूत्वा प्रकाशते।
तथा ध्यानेन्धनेनेत्थो विष्णुस्सर्वगतः प्रभुः।। १४

व्योमाकारस्तथा चान्यदृक्स्वरूपं भजेत्तथा।
निर्गुणं गुणभाक्तेन कल्पयन्तीह केचन।। २५

निस्सङ्गो निर्गुणश्चैव चित्स्वभावो ह्ययोनिजः।
निरौपम्यो निगूढात्मा काष्ठेऽग्निरिव हि स्थितः।। २६

एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः।
जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः।। २७

वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः।
अभेदव्यापिनो वायोस्तथा तस्य महात्मनः।। २८

शकुनीनामिवाकाशे जले वारिभुवामिव।
पदं तस्य न दृश्येत तत्त्वज्ञानविदो विदुः।। २९

भ्रान्तचित्तस्य चात्माऽपि तथैकस्सन् पृथक् पृथक्।
नीलपीतादिभेदेन यथैकं दृश्यते नभः।। ३०

इदं सञ्चिन्त्य मनसा ध्यायेत्साकारमात्मनः।
तत्र सर्वमिदं प्रोतमोतञ्चैवाखिलं जगत्।। ३१

ततो जगत् जगत्तस्मिन् स जगच्चाखिलं तथा।
क्षराक्षरमयो विष्णुः बिभर्त्यखिलमीश्वरः।। ३२

आत्मानमस्य जगतो निर्लेपमगुणामलम्।
ध्यायेच्च कौस्तुभमणिं सुरूपं हरिवक्षसि।। ३३

श्रीवत्ससंस्थानवरमनन्तञ्च समाश्रितम्।
प्रधानं बुद्धिमप्यस्य गदारूपं समाहितम्।। ३४

भूतादिमिन्द्रियादिञ्च द्विधाऽहङ्कारमीश्वरे।
ध्यायेद्वै शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्।। ३५

चलस्वरूपमत्यन्तं जवेनान्तरितानिलम्।
चक्रस्वरूपञ्च मनो ध्यायेद्विष्णुकरे स्थितम्।। ३६

पञ्चवर्णा तु या माला वैजयन्तीति चक्रिणः।
तां भूतहेतुसङ्घातं भूतमालां विचिन्तयेत्।। ३७

यानीन्द्रियाणि शिष्टानि बुद्धिकर्मात्मकानि वै।
शररूपाण्यशेषाणि तानि ध्यायेज्जनार्दने।। ३८

बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम्।
विद्यामयन्तु तत् ज्ञानमविद्याकर्मसंज्ञितम्।। ३९

अस्त्रभूषणसंस्थानं स्वरूपं रूपवर्जितम्।
मायारूपं तथा ध्यायेच्छ्रेयसे प्राणिनां हरेः।। ४०

कलाकाष्ठानिमेषादि दिनर्त्वयनहायनैः।
कालस्वरूपरूपं तं ध्यायेद्विष्णुं समाहितः।। ४१

भूर्भुवस्स्वर्महश्चैव जनोलोकस्तथैव च।
तपस्सत्यमिति ध्यायेल्लोकमूर्तिधरं हरिम्।। ४२

देवमानुषपश्वादिस्वरूपं प्रभुमव्ययम्।
भूतमूर्तिधरं ध्यायेत्सर्वाधारं सनातनम्।। ४३

ऋचो यजूंषि सामानि तथैवाथर्वणानि च।
इतिहासोपवेदाश्च वेदान्तेषु तथोक्तयः।। ४४

वेदाङ्गानि समस्तानि मन्वादिगदितानि च।
शास्त्राण्यशेषाण्यास्थानान्यनुवाकाश्च वै क्वचित्।। ४५

काव्यालापाश्च ये केचिद्गीतकान्यखिलान्यपि।
शब्दमूर्तिधरस्यैतद्वपुर्ध्यायेन्महात्मनः।। ४६

यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र च क्वचित्।
सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः।। ४७

यत्र सर्वं यतस्सर्वं यस्सर्वं सर्वतश्च यः।
सर्वगत्वादनन्तस्य स एवाहमिति स्थितिः।। ४८
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने।
अहमेवाक्षयो नित्यः परमात्मा न संशयः।। ४९
एवं सञ्चिन्तयेद्विष्णुमभेदेनाऽऽत्मनो गुरुः।
तन्मयत्वमनुप्राप्य आत्मसूक्तं जपेत्क्रमात्।। ५०

## आवाहनप्रकारः

आवाहनक्रमेणैव तत आवहनं चरेत्।
देव्यौ च परिषद्यांश्च तत्रैवावाहयेत्क्रमात्।। ५१
नवबेरप्रतिष्ठा चेदेवं वै कारयेद्बुधः।
पुनः प्रतिष्ठा चेद्विद्वान् कुम्भं संसाध्य पूर्ववत्।। ५२
पुराणबिम्बात्तच्छक्तिं ध्यात्वा कुम्भे सुसन्न्यसेत्।

## कुम्भस्य शालाप्रवेशः

सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।। ५३
स्तोत्रध्वनिसमायुक्तं शकुनसूक्तसमन्वितम्।
कुम्भं सङ्गृह्य शिरसा आचार्यः पुरतो व्रजेत्।। ५४
पश्चाद्देवं समादाय व्रजेयुर्मूर्तिधारकाः।
धामप्रदक्षिणं कृत्वा गत्वा वै स्नपनालयम्।। ५५
श्वभ्रमध्ये प्रतिष्ठाप्य विष्णुसूक्तं समुच्चरन्।
श्वभ्रस्य दक्षिणे पार्श्वे न्यसेत्कुम्भं यमान्तरे।। ५६
शिष्टानि सर्वकार्याणि यथोक्तानि समाचरेत्।

## स्नापनप्रकारः

शङ्खे वा शुक्तिकायां वा तोयं संसाध्य मन्त्रतः।। ५७

प्रोक्षयित्वा तु कलशानधिदेवांत्समर्चयेत्।
पाद्याद्यर्घ्यान्तमभ्यर्च्य देवेशं मनसा स्मरन्।। ५८
आचार्यः शिष्यसहितो वस्त्राभरणभूषितः।
'वसोः पवित्र' मित्युक्ता स्नापयेत्पञ्चगव्यकैः।। ५९
'अग्न आयाहि' मन्त्रेण घृतेन स्नापयेद्विभुम्।
'अग्निमीले' ति मन्त्रेण मधुना स्नापयेद्धरिम्।। ६०
'इषे त्वोर्जे' त्वेति जपन् दध्ना संस्नापयेत्तथा।
'शन्नो देवी' ति मन्त्रेण क्षीरेण स्नापयेत्ततः।। ६१
'अभित्वा शूर' इत्युक्ता गन्धोदेन समाचरेत्।
'इमा ओषधय' इति स्नापयेदक्षतोदकैः।। ६२
'जपन् द' त्वेति मन्त्रेण स्नापयेत्तु फलोदकैः।
'चत्वारि वा' गिति जपन् कुशोदेनाभिषेचयेत्।। ६३
'तत्पुरुषायेति' मन्त्रेण रत्नयुक्तेन वारिणा।
'पूतस्तस्ये' ति मन्त्रेण जप्योदेन ततः परम्।। ६४
सर्वौषध्युदकेनैव 'चत्वारीति' समुच्चरन्।
यैर्द्रव्यैः स्नापयेद्देवं पूर्वं तैः प्रोक्षयेद्धटम्।। ६५
उपस्नानेषु सर्वेषु 'वारीश्चतस्रः' उच्चरेत्।
प्रतिद्रव्यं विशेषेण पाद्याद्यर्घ्यान्तमर्चयेत्।। ६६
पश्चात्प्लोतेन विमृजे 'न्मित्रस्सुपर्णु' उच्चरन्।
नववस्त्रैरलङ्कृत्य भूषयेदपि भूषणैः।। ६७
दिव्यगन्धैरलङ्कृत्य नाभेरूर्ध्वञ्च सर्वतः।
हेमपुष्पैरलङ्कुर्यान्मुक्तादामभिरन्वितैः।। ६८
नानावर्णसमायुक्तैः भूषयेत्पुष्पदामभिः।
पाद्याद्यर्घ्यान्तमभ्यर्च्य प्रणम्यैवानुमान्य च।। ६९

पन्थानं शोधयित्वाऽद्भिः सलाजैः कुसुमैस्तिलैः।
अलङ्कुर्यात्पताकाभिः विविधैः पुष्पदामभिः।। ७०
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
समुच्छ्रितैः ध्वजैः छत्रैः धूपाद्यैस्सुसमायुतम्।। ७१
यन्त्रारूढाश्च नृत्येरन् अप्सरोवत् स्त्रियोऽग्रतः।

## प्रभूतबलिः

द्रोणं द्रोणार्धकं वाऽपि आढकं वा स्वशक्तितः।। ७२
माषद्वयसमायुक्तं कुलत्थनिष्पावसंयुतम्।
पाचयित्वा विधानेन कटाहे निर्वपेद्बुधः।। ७३
लाजैश्च तिलचूर्णैश्च अपूपैस्सक्तुभिस्सह।
पुष्पतोयसमायुक्तं कूर्चयुक्तं सहाक्षतम्।। ७४
प्रभूतबलिमाहृत्य प्रक्षिपेत्सर्वसन्धिषु।
चतुष्कोणे त्रिकोणे च द्विकोणे चैव सर्वतः।। ७५
भूतयक्षपिशाचेभ्यो नागेभ्यो राक्षसैस्सह।
मध्यादि चोत्तरान्तञ्च निर्वपेदिति शासनम्।। ७६
तोयं दत्वाऽथ पूर्वं तु पश्चात्पुष्पं तथैव च।
बलिं दत्वा गुरुर्धीमान् ततस्तोयं समावपेत्।। ७७
सन्धौ सन्धौ च सर्वत्र एवमेव प्रदापयेत्।
पश्चाद्देवं समादाय याने त्वारोप्य यत्नतः।। ७८
'रथन्तरं' समुच्चार्य रथमारोपयेद्धरिम्।
आरोप्य शिबिकायां वा वैष्णवं मन्त्रमुश्चरन्।। ७९
भक्तैः परिवृतो गुच्छेच्छाकुनं सूक्तमुच्चरन्।
पश्चाद्ग्रामं प्रविश्यैव कुर्याद्ग्रामप्रदक्षिणम्।। ८०

पश्चादालयमाविश्य यागस्थाने सुसन्न्यसेत्।
एवं कर्तुमशक्तश्चेत्कुर्याद्धामप्रदक्षिणम्।। ८१
बिम्बगौरवमुद्दिश्य नाचरेद्वा प्रदक्षिणम्।
यन्त्रेण योजयित्वा तु देवागारं प्रवेशयेत्।। ८२

## शयनालङ्करणम्

यागस्थानस्य मध्ये तु स्थण्डिले शयनं चरेत्।
मण्डलञ्चोपलिप्यैव वर्णैस्संस्कृत्य पञ्चभिः।। ८३
ब्रीहिभिस्तण्डुलैश्चापि परिपूर्य समन्ततः।
तस्योपरि विधानेन बैल्वं फलकमाक्षिपेत्।। ८४

## पञ्च शयनानि

अण्डजैर्मुण्डजैश्चैव लोमजैश्चर्मजैस्तथा।
वामजैश्च क्रमेणैव उपर्युपरि संस्तरेत्।। ८५
अण्डजन्तु विजानीयात् पक्षिणां पिञ्छसम्भवम्।
कार्पासशाल्मलादीनि मुण्डजन्तु विदुर्बुधाः।। ८६
आविकन्तु मृगाणान्तु रोमजं रोमजं स्मृतम्।
सिंहव्याघ्रादिजन्तूनां चर्म चर्मजमुच्यते।। ८७
पट्टवस्त्रादिनिचयं वामजं परिकीर्तितम्।
अलाभे त्वण्डजादीनां प्रत्येकं वस्त्रमास्तरेत्।। ८८

## अष्टमङ्गलादिन्यासः

एवं संस्तीर्य मन्त्रज्ञो 'वेदाहं' मन्त्रमुच्चरन्।
ऐन्द्राद्यैशान्यपर्यन्तं श्रीवत्सादीन् न्यसेत्क्रमात्।। ८९
पूर्णकुम्भांश्च परितस्त्वङ्कुरांश्च विशेषतः।
दीपांश्च परितो न्यस्येत् धान्यपीठे विचक्षणः।। ९०

आयुधानि न्यसेत्तद्वत् धान्यपीठे समन्ततः।
ततः सङ्कल्प्य शयनं पश्चाद्देवं प्रणम्य च।। ९१

सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
ब्रह्मघोषसमायुक्तं शकुनसूक्तसमन्वितम्।। ९२

पूर्ववत्कुम्भमादाय देवेशसहितं क्रमात्।
शयने देवमारोप्य कुम्भञ्चात्रैव स्थापयेत्।। ९३

देव्यौ च स्थापयेत्पश्चात् दक्षिणोत्तरयोः क्रमात्।
कुम्भञ्च पुरतो न्यस्य वैष्णवं मन्त्रमुच्चरन्।। ९४

पाद्याद्यर्घ्यान्तमभ्यर्च्य देवेशं मनसा स्मरेत्।

## प्रतिसरबन्धः

सौवर्णं तान्तवं वाऽथ कृत्वा प्रतिसरं बुधः।। ९५

हेमादिपात्रे सन्न्यस्य शालितण्डुलपूरिते।
वाद्यघोषसमायुक्तं स्वस्तिसूक्तसमन्वितम्।। ९६

देवालयं परीत्यैव देवस्य पुरतो न्यसेत्।
पुण्याहं वाच्य तत्काले विधिवन्मन्त्रपूर्वकम्।। ९७

स्वस्तिसूक्तं समुच्चार्य स्पृशेत्प्रतिसरं तथा।
उच्चरन् 'स्वास्तिदा' मन्त्रं कुर्यात्कौतुकबन्धनम्।। ९८

ध्रुवोऽस्ति चेद्विमानस्थः बध्नीयात्पूर्वमेव तत्।
देव्योश्च वामकरयोः बध्नीयाद्विधिवत्ततः ९९

विमानं प्रथमं यत्र बद्ध्वा प्रतिसरं ततः।
सूत्रं त्रिवृतमादाय पादमूले विशेषतः।। १००

दर्भमालाञ्च परितः प्रादक्षिण्यक्रमेण वै।

## शायनम्

'यद्वैष्णवं' समुच्चार्य शयने शाययेद्धरिम्।। १०१

यद्दिग्द्वारं विमानं स्यात्कुर्यात्तद्दिशि वै शिरः।
कृत्वोपधानं शिरसः तथा कृत्वा च पादयोः।। १०२
उत्तराच्छादनं कुर्याद्वासोभिरभितस्तथा।
बहुबेरप्रतिष्ठा चेत्स्नापनादीन् पृथक् चरेत्।
बहुभूमिप्रतिष्ठा चेत्प्रत्येकं कुम्भमाहरेत्।। १०३

## हौत्रप्रशंसनम्

अत ऊर्ध्वं प्रवक्ष्यामि हौत्रकल्पं यथाक्रमम्।
यजमानो गुरुञ्चापि ऋत्विजश्चापि पूजयेत्।। १०४
प्रत्येकं वस्त्रयुग्मेन तथा पञ्चाङ्गभूषणैः।
सुवर्णपशुभूम्यादीन् गुरवे दक्षिणां ददेत्।। १०५
राजा दद्यात्तु गुरवे दक्षिणां विंशतिं शतम्।
ग्रामश्चेत्पादहीनन्तु दद्यादाचार्यदक्षिणाम्।। १०६
इतरे दद्युरधमं निष्काणमेकविंशतिम्।
पादाधिकं पञ्चनिष्कं स्थापकानां पृथक् पृथक्।। १०७
अन्येषामृत्विजां दद्यात् निष्कत्रयपथा पृथक्।
पश्चाद्धोतारमाहूय सम्पूज्यार्घ्यादिभिस्ततः।। १०८
आचार्यं कृतकार्यन्तु नमस्कुर्यात्स्वदैववत्।
होता चैव तु तत्काले पादौ प्रक्षाल्य चाचमेत्।। १०९
'सभ्यस्यैव तु पूर्वस्मिन् देशे तिष्ठेत् कृताञ्जलिः।
आध्वर्यु 'होतरे' हीति वदेदग्निं प्रणम्य च।। ११०
'अध्वर्यो देवते' त्यादि होता ब्रूयादुपांशु तु।
पश्चादाचम्य होता वै कूर्चमादाय पाणिना।। १११
पश्चिमाभिमुखो भूत्वा प्रणवोच्चारपूर्वकम्।
'नमः प्रवक्त इत्यादीन् पठेन्मन्त्रान् समाहितः।। ११२

स्वनाम गोत्रसहितं संयोज्य विधिपूर्वकम्।
'हिं भूर्भुवस्सुव' रिति तत्काले प्राङ्मुखश्शुचिः।। ११३
हौत्रक्रमेण वै होता शंसेद्धौत्रं विधानतः।
ओङ्कारन्तु यदा होता प्रवदेत्क्रमवित्तदा।। ११४
श्रुत्वाऽध्वर्युरथौङ्कारं तदन्ते समिधः क्षिपेत्।
अध्वर्युणा नियुक्तस्तु होताऽऽवाहनमुच्चरेत्।। ११५
'आयातु भगवा' नुक्त्वा विष्णुमावाहयेत्ततः।
क्रमाद्देव्यौ पारिषद्यान् नाम्नैवावाहनं चरेत्।। ११६
आवाहने चतुर्मूर्तिविधिरेवं प्रपठ्यते।

## आवाहनप्रकारः-सर्वदैवत्यक्रमः

'विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम्' ।। ११७
'श्रियं धृतिं पवित्रीञ्च प्रमोदादायिनी' मिति।
'हरिणीञ्चैव पौष्णीञ्च श्रोणीमिति मही' मिति।। ११८
'ब्रह्माणं प्रजापतिञ्च पितामहमिति क्रमात्।
'हिरण्यगर्भ' मित्युक्त्वा विधिनाऽऽवाहयेत्तदा।। ११९
'रुद्रञ्चोमापतिञ्चैव गोपतिं शर्व' मित्यपि।
'मार्कण्डेयञ्च पुण्यञ्च पुराणममितं' तथा।। १२०
'पद्मापितरं धातृनाथं ख्यातीशं भृगु' मेव च।

## द्वारदेवाः

'धातारं दम्भिनञ्चेति सनिलं गन्धवं' तथा।। १२१
'विधातारञ्च कीनाशं मुरुण्डं न्यर्ण' मेव च।
'भूतिं भुवङ्गमुत्सङ्गं पीठञ्चैव समाह्वयेत्।। १२२

'पतङ्गमुत्करञ्चेति अपदानं कपर्दिनम्' ।
'पतिरं बलिदञ्चेति मध्यगं वङ्कुरं' तथा।। १२३
'वरुणं तेजिनञ्चेति दंशिनञ्च तरस्विनम्'।

## द्वारपालाः

'मणिकं महाबलञ्चेति विमलं द्वारपालकम्' ।। १२४
'सन्ध्यां प्रभावतीञ्चेति ज्योतीरूपां दृढव्रताम्'।
'तापसं सिद्धिराजञ्च सर्वदोषविवर्जितम्।। १२५
सहस्राश्वमेधिन' मिति तापसं सम्यगाह्वयेत्।
'वैखानसं तपोयुक्तं सिद्धिदं सर्वदर्शिनम्'।। १२६
'किष्किन्धं बहुमर्दञ्च बहुसेनं दृढव्रतम्'।
'तीर्थमुद्वाहकञ्चैव सर्वयोग्यमुदावहम्'।। १२७

## श्रीभूतः-दिक्पालाः

'श्रीभूतं श्वेतवर्णञ्च वैष्णवं मुखपालिनम्'।
'इन्द्रं शचीपतिञ्चेति पुरुहूतं पुरन्दरम्'।। १२८
'अग्निं जातवेदसमिति पावकञ्च हुताशनम्'।
'यमञ्च धर्मराजञ्च प्रेतेशमिति च ब्रुवन्।। १२९
'मध्यस्थ' मिति चोक्त्वा तु धर्मराजं समाह्वयेत्।
'आरम्भाधिपतिञ्चेति निर्ऋतिं नील' मेव च।। १३०
'सर्वरक्षोधिप' मिति निर्ऋतिञ्च समाह्वयेत्।
'वरुणं प्रचेतसमिति रक्ताम्बरमिति क्रमात्।। १३१
यादस्पति' मिति गुरुर्वरुणं सम्यगाह्वयेत्।
'जवनं भूतात्मकं वायुमुदान'ञ्च समाह्वयेत्।। १३२

'कुबेरं धन्यं पौलस्त्यं यक्षराज'-मिति क्रमात्।
'ईशानमीश्वरञ्चैव देवञ्चेति भवं' तथा।। १३३

## आदित्यादयः

'आदित्यं भास्करञ्चैव सूर्यं मार्ताण्डमेव च।
विवस्वन्त' मिति प्रोच्य भास्करं सम्यगाह्वयेत्।। १३४
'अङ्गारकञ्च वक्रञ्च रक्तञ्चैव धरासुतम्'।
'सूर्यपुत्रञ्च मन्दञ्च रैवत्यञ्च शनैश्चरम्'।। १३५
'पीतवर्णं गुरुं तैष्यं बृहस्पति' मिति क्रमात्।
'बुधं श्यामञ्च सौम्यञ्च श्रविष्ठाज' मिति क्रमात्।।१३६
'शुकञ्च भार्गवं काव्यं परिसर्पिण' मित्यपि।
'नलिनीं जाह्नवीञ्चैव गङ्गां वै लोकपावनीम्'।। १३७
'वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्र' मिति क्रमात्।
'भवञ्च शर्वमीशानं क्रमात्पशुपतिं तथा।। १३८
उग्रं रुद्रञ्च भीमञ्च महादेव' मितीरयेत्।
'जगद्भुवं यजद्भुवं विश्वभुवमिति क्रमात्।। १३९
रुद्रभुवं ब्रह्मभुवं भुवद्भुव' मुदीर्य च।
'पुरुषं सत्यमित्युक्त्वा अच्युतञ्चानिरुद्धकम्।। १४०
'धात्रीं महोदरीं रौद्रीं महाकाली' मिति क्रमात्।
'भूर्ज्येष्ठायिनीमिति च भुवर्ज्येष्ठायिनीमिति।। १४१
सुवर्ज्येष्ठायिनीमिति कलिराजायिनीमिति।
कलिपत्नी' मिति तथा ज्येष्ठां वै सम्यगाह्वयेत्।। १४२
'रौद्रीं कात्यायनीञ्चैव वैष्णवीं विन्ध्यवासिनीम्'।
'कुण्ठिनीं नन्दिनीञ्चैव धरिन्नीं रजतप्रियाम्'।। १४३

'ग्रन्थिनीं वेगिनीञ्चैव प्रजयाञ्च प्रबर्हिणीम्'।
'कृच्छिणीं शाखिनीञ्चैव वाहिनीं योक्त्रिणी' मिति।।१४४
'कुष्ठिनीं जारिणीञ्चैव छर्दिनीञ्च प्रवाहिणीम्'।
'विकारिणीं दामिनीञ्च बैसिनीं विद्युता' मिति।। १४५
'ददृणीमिन्दुकरीञ्चैव सौमनसीं प्रविद्युताम्'।
'इन्द्रियविकारिणीञ्चैव अर्वन्तीञ्च समाह्वयेत्।। १४६
गङ्गावाणीं सृजन्ती' ञ्च चतुर्मूर्तिभिराह्वयेत्।

## सप्तर्षयः

'पद्मापितरं धातृनाथं ख्यातीशं भृगुमेव' च।। १४७
'सम्भूतीशं मरीचिञ्च शोचिष्मन्तमिति क्रमात्।
पौर्णमासभृत' ञ्चेति मरीचिं सम्यगाह्वयेत्।। १४८
'क्षमाधवञ्च पुलहं कर्दमाद्यं महाधृतिम्'।
'पुलस्त्यं प्रीतिभर्तारं वशङ्करमिति क्रमात्।। १४९
दान्तो नीराज' मित्युक्त्वा चाह्वयेच्च विधानतः।
'सिद्धिराजं निष्कसूनुं सन्नतीशं क्रतुं' तथा।। १५०
'ऊर्जापतिं राजपूर्वं वसिष्ठं वाक्पतिं' तथा।
'अत्रिं नियामकञ्चैव सत्यनेत्रगुरुं तथा।। १५१
अनसूयापति' ञ्चेति चतुर्मूर्तिभिरह्वयेत्।
'गविष्ठं त्रैष्टुभञ्चेति गुह्यमाकाश' मेव च।। १५२
'असुं समीरणञ्चेति वायुञ्च पृषदश्वकम्'।
'वीतिहोत्रमाभुरण्यं शुद्धमग्नि' मितीरयेत्।। १५३
'पवित्रममृतं तोयं गह्वर' ञ्चेति वै क्रमात्।
'हरिणीञ्च तथा पौष्णीं क्षोणीमथ मही' मिति।। १५४

'सिद्धिं वाणीं ब्रह्मपत्नीं सरस्वती' मिति चाह्वयेत्।
'श्रियं धृतिं पवित्रीञ्च प्रमोदा(धा)यिनी' मिति च।। १५५
'न्यक्षं दधित्यकञ्चैव पीवरं चार्यकं' तथा।
'विवस्वन्तञ्च भरतं विश्वकर्माण' मित्यपि।। १५६
'मरीचिमन्त' मित्युक्त्वा आह्वयेत विचक्षणः।
'मित्रमित्वरमित्युक्त्वा राजिष्मन्तं रमणकम्'।। १५७
'महीधरञ्च क्षत्तारमुर्वरोहञ्च शेवधिम्'।
'हविरक्षकमाग्नेयं शैलूषं पचनं' तथा।। १५८
'सर्वेश्वरं जगन्नाथं चामुण्डं सर्वतश्चरम्'।
'ब्रह्माणीं पिङ्गलाञ्चेति गौरीं वै सर्वतोमुखीम्'।। १५९
'सरित्प्रियां विश्वरूपामुग्राञ्चैव गणेश्वरीम्'।
'वैशाखिनीं खण्डिनीञ्च गायत्रीं षण्मुखी' मिति।। १६०
'विश्वगर्भां विषोर्मिणीं कृष्णाञ्च द्रुहिणी' मिति।
'वाराहीं वरदामुर्वीं विषहां वेदधारिणीम्' (?)।। १६१
'पुष्परक्षकं हरितमधिवासञ्च फुल्लकम्'।
'बलिरक्षकञ्च दण्डञ्च सर्वज्ञं सममेव' च।। १६२
'विष्वक्सेनञ्च शान्तञ्च हरञ्चैवामितं' तथा।
'वक्रतुण्डमेकदंष्ट्रं विकटञ्च विनायकम्'।। १६३
'गरुडं पक्षिराजञ्च सुपर्णञ्च खगाधिपम्'।
'नागराजं सहस्रशीर्षमनन्तं शेष' मित्यपि।। १६४
'सुदर्शनञ्च चक्रञ्च सहस्रविकचं' तथा।
'अनपायिन' मिति च सुदर्शनमथाऽऽह्वयेत्।। १६५
'जयमत्युच्छ्रितं धन्यं ध्वज' मित्याह्वयेद्ध्वजम्।
'पाञ्चजन्यञ्च शङ्खञ्च अम्बुजं विष्णुप्रिय' मिति।। १६६

'यूथाधिपं नित्यमुग्रं महाभूताख्यमेव' च।
'पाकोऽर्जुनं हस्तमगं अक्षहन्तं तथैव च।। १६७
विष्णुभूत' ञ्चेति देवानाह्वयेद्विधिवद्बुधः।
सभ्याध्वर्युश्च तत्काले दक्षिणप्रणिधौ जले।। १३८
विष्णुमूर्त्यादिरुद्रान्तं चतुर्मूर्तिविधानतः।
'आवाहया' मीत्युक्त्वा तु तत्तद्देवमनुस्मरन्।। १३९
आवाहयेत्ततः पश्चादुत्तरप्रणिधौ जले।
धात्रादिविष्णुभूतान्तान् देवानन्यान् समाह्वयेत्।। १७०
आवाहयेदन्यदेवान् तत्तद्धोमेषु च क्रमात्।

## जुष्टाकारस्वाहाकारौ

आवाहनक्रमेणैव चतुर्थ्यन्तेन वै पृथक्।। २७१
जुष्टाकारं तथा कुर्यात्तत्क्रमेणाहुतीर्यजेत्।

## अग्निध्यानम्

तदा कुण्डगतं वह्निं ध्यायेदेवं गुरूत्तमः।। १७२
पश्चिमाभिमुखं देवमतिरक्तांशुकं परम्।
कुण्डमध्ये समासीनं ब्राह्ममासनमास्थितम्।। १७३
स्वाहास्वधायुतं देवं सर्वदेवात्मकं विभुम्।
ज्वालाकेशं शिखाजिह्वं सप्तार्चिभिरलङ्कृतम्।। १७४
द्विभुजन्तु तदा ध्यायेत्तस्मिन्नग्नौ हुनेत्सदा।

## होमकालः

अशब्दं भिद्यमानेषु दीप्तेष्वग्निकणेषु च।
यदा हुते घृते वह्निः स्वयमेवोद्गतोऽर्चिषा।। १७६
समुज्ज्वलति निर्धूमे हुनेदाहुतिरुत्तमा।
एवं सर्वत्र होमेषु ध्यायन्नग्निं हुनेद्धविः।। १७७

## यज्ञपात्रग्रहणे विशेषः

मध्येऽङ्गुष्ठानामिकयोः समाङ्गुल्योः स्रुवं तथा।
प्रदेशिनीमध्यमे च स्रुवस्याधः प्रसार्य च।। १७८
कनिष्ठाङ्गुलिं विसृज्यैव गृह्णीयाद्धोमकर्मणि।
चतुरङ्गुलप्रमाणञ्च यथा च्छिन्नं स्रुवं तथा।। १७९
घृतं स्रुवेण सङ्गृह्य मन्त्रमुच्चार्य सर्वकम्।
'स्वाहे' त्युक्त्वा हुनेदग्नौ तं तं देवं हृदा स्मरन्।। १८०
अङ्गुष्ठानामिकाभ्याञ्च तथा मध्यमया सह।
घृताक्तां समिधं गृह्य प्रागग्रं जुहुयाद्विधिः।। १८१
मन्त्रान्ते पूर्ववद्धोमं जुहुयाज्जातवेदसि।
न्यग्रोधफलमात्रन्तु गृह्णीयात् सघृतं चरुम्।। १८२
जुहुयाद्विधिना वह्नौ पूर्वोक्तेन क्रमेण वै।
सभ्याग्निसाधको वह्निं ज्वलितं सम्प्रणम्य च।। १८३
लाजैः सतिलचूर्णैश्च अपूपैस्सक्तुभिः सह।
आज्येन मिश्रितं सर्वं प्रतिहोमं हुनेत् शुचिः।। १८४
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च।
पूरयित्वा जुहूं पश्चाद्देवदेवमनुस्मरन्।। १८५
हुनेद्विंशतिकृत्वस्तु व्याहृत्यन्तं तथा पृथक्।
एवं सभ्ये पौण्डरीके महाशान्तिरथोच्यते।। १८६

सर्वदोषोपशमनी सर्वकर्मसमृद्धिदा।

## पौण्डरीके महाशान्तिः

दधि क्षीरञ्च लाजांश्च कापिलञ्च घृतं तथा।। १८७
समभागान् सुसङ्गृह्य हुनेत्पद्मानले गुरुः।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च।। १८८
अग्निहोत्रहवण्या तु जुहुयात्पुरुषं स्मरन्।
सर्वान् कामानवाप्यैव सायुज्यं प्राप्नुयान्नरः।। १८९
इन्द्रादीशानपर्यन्तमालयं परितः स्थितान्।
ध्यात्वा दिगीशान्मनसा तत्तन्मन्त्रैः पृथक् पृथक्।। १९०
व्याहृत्यन्तन्तु जुहुयात्प्रत्येकं विंशतिं गुरुः।
सभ्याध्वर्युस्तु तत्काले परिषिच्य च पावकम्।। १९१
पञ्च वारुणमन्त्रांश्च चित्तादींश्च यथाक्रमम्।
अभ्यातानान् राष्टभृतः यद्देवादीन् विशेषतः।।१९२
जुहुयाद्विधिवत्सर्वान् व्याहृत्यन्तं पृथक् पृथक्।

## सर्वदेवार्चनम्

पश्चात्समर्चयेद्देवान् स्वनामपदपूर्वकम्।। १९३
विष्णुं पूर्वं समभ्यर्च्य श्रीभूमिसहितं क्रमात्।
दक्षिणे मार्कण्डेयञ्च वामे ख्यातीशमेव च।। १९४
दक्षिणे भित्तिमाश्रित्य स्थितं ब्रह्माणमर्चयेत्।
उत्तरे भित्तिमूले च ईश्वरञ्च समर्चयेत्।। १९५

## द्वारदेवाः

कवाटदेवान् धात्रादीनर्चयेत्क्रमतः पृथक्।

(भृतिञ्च वामभागे तु पतङ्गं दक्षिणे तथा (?) )।
ऊर्ध्वे पतङ्गमभ्यर्च्य भुवङ्गञ्चाधरेऽर्चयेत्।। १९७
पतिरं दक्षिणे स्तम्भे वरणञ्चोत्तरेऽर्चयेत्।

## द्वारपालाः

द्वारे च प्रथमे पालं मणिकं मुनिमर्चयेत्।। १९८
द्वारवामेऽर्चयेत् देवीं मणिकस्य प्रभावतीम्।
द्वितीयद्वारपालौ च तापसं दक्षिणेऽर्चयेत्।। १९९
वामे सिद्धिदमभ्यर्चेत् किञ्चिद्द्वारसमीक्षकौ।
अथवा शङ्खचक्रे च केषाञ्चित्पक्ष उच्यते।। २००
यत्र यत्र तु यो द्वारः भविष्यति कवाटवान्।
तत्र तत्र कवाटेशान् धात्रादीन् षट् समर्चयेत्।। २०१

## श्रीभूतादयः

सोपानमध्ये श्रीभूतं प्राङ्मुखं सम्यगर्चयेत्।
इन्द्रं रुद्रं श्रियञ्चैव शैलूषञ्चाग्निमेव च।। २०२
एतान् देवान् समभ्यर्चेत् पश्चिमाभिमुखान् क्रमात्।
अङ्गारकं गुहञ्चैव दुर्गां वै यममेव च।। २०३
शनैश्चरं रोहिणीश्च सप्तमातॄरपि क्रमात्।
एतान् दक्षिणतः कुर्यादुत्तराभिमुखान् क्रमात्।। २०४
नैर्ऋते निर्ऋतिञ्चैव बृहस्पतिमतः परम्।
धात्रीं विष्णुञ्च वरुणं बुधं ज्येष्टां तथैव च।। २०५
पुष्परक्षकवायू वै पश्चिमे सम्यगर्चयेत्।
एतानभ्यर्चयेद्यत्नात् प्राङ्मुखानेव सर्वभा।। २०६

शुक्रं सप्त ऋषींश्चैव गङ्गाञ्चैव विशेषतः।
पञ्च भूतांश्चार्चयेत्तु विष्वक्सेनं ततः परम्।। २०७
एतानुत्तरपार्श्वे तु पूजयेद्दक्षिणामुखान्।
ईशानञ्चैव दण्डञ्च सिद्धिञ्चैव तथाऽर्चयेत्।। २०८
ऐन्द्रद्वारस्य वामे तु पश्चिमाभिमुखान् क्रमात्।
ईशानं बलिरक्षञ्च तथा देवीं सरस्वतीम्।। २०६
ऐन्द्रद्वारस्य वामे तु अर्चयेत्पश्चिमामुखान्।

### न्यक्षादयः

प्राच्यां न्यक्षं समभ्यर्च्य विवस्वन्तञ्च दक्षिणे।। २१०
मित्रं वै पश्चिमे भागे उत्तरे च महीधरम्।
विमाने कल्पयेदेतान् तत्तदाशामुखान् क्रमात्।। २११
गोपुरागारयोर्मध्ये वाहनं (?) सम्यगर्चयेत्।

### वक्रतुण्डादयः

गोपुरस्य बहिः प्राच्यां वक्रतुण्डन्तु दक्षिणे।। २१२
वामेऽर्चयेन्नागराजमिति धर्मो व्यवस्थितः।
गोपुरात्तु बहिः प्राच्यां चक्रञ्चैव समर्चयेत्।। २१३
ध्वजं पश्चात्समभ्यर्च्य शङ्खञ्चैव ततः परम्।
यूथाधिपं समभ्यर्च्य तत्स्थाने च यथाक्रमम्।। २१४
भूतस्थाने द्वितीये तु विष्णुभूतं समर्चयेत्।
मूलस्थानप्रतिष्ठा चेत् पारिषद्यसमन्वितम्।। २१५
अथवा पूजयेद्विद्वान् पारिषद्यान् पृथक् पृथक्।
उत्तमं वस्त्रसंयुक्तं पूजनन्तु पृथक् पृथक्।। २१६

हविरन्तं तथा तेषां पूजनं मध्यमं भवेत्।
अर्घ्यान्तमधमं प्रोक्तमिति वेदानुशासनम्।। २१७
अथवा यागशालायाः परितः सम्प्रपूजयेत्।
एवमेव प्रकुर्वीत पूर्वद्वारे विशेषतः।। २१८
सत्यादि दक्षिणे द्वारे
पश्चिमे त्वच्युतादिकम्।
उत्तरे चानिरुद्धादि
योजयित्वा तु बुद्धिमान्।। २१८
एवं कृत्वा विधानेन प्रतिद्वारं विशेषतः।
स्थानं प्रदक्षिणीकृत्य प्रयतेनान्तरात्मना।। २२०
शयानं देवमासाद्य प्रणम्यैवानुमान्य च।
'सुवर्भुवर्भूस्थ' इति मूर्धानं नाभिमेव च।। २२१
पादौ च देवदेवस्य संस्पृशेत्क्रमविद्बुधः।

## सहस्राहुतिहोमः

अध्वर्युरथ तत्काले सभ्याग्निं परिषिच्य च।। २२२
सहस्राहुतिमन्त्रैस्तु घृतेन जुहुयात्ततः।
'स्वस्ति चैवेति जुहुयात्प्रजापतय इत्यपि।। २२३
अग्निर्धीमतये चेति आदित्येभ्यश्च होमयेत्।
विश्वेभ्यो देवेभ्य इति मरुद्गणेभ्य' इत्यपि।। २२४
षड्भिरेतैर्होममन्त्रैर्महाव्याहृतिभिः सह।
दशमन्त्रैस्समाहत्य शतवारं हुतैर्भवेत्।। २२५
सहस्राहुतिसंज्ञोऽयं होमस्सर्वार्थसाधकः।
एवं ह्यसङ्कुलैर्मन्त्रैरावर्त्य शतशः क्रमात्।। २२६

व्याहृत्यन्तञ्च जुहुयात् देवेशं मनसा स्मरन्।

## पारमात्मिककल्पः

विष्णुमुद्दिश्य यत्नेन विष्णुसूक्तं हुनेत्तदा।। २२७

अतो देवादिभिर्हुत्वा जुहुयात्पारमात्मिकम्।

एवं हुत्वा तु मन्त्रज्ञो ध्यायेद्वै विष्णुमव्ययम्।। २२८

'शं सा नियच्छ' त्विति च 'भूयाम' इति च क्रमात्।

'मेदिनी-देवी-समुद्र-श्रृङ्गे-वायुपरी-विष्णुपत्नी'मिति।। २२९

'चिरायुषेति हुत्वा तु पुण्यौघ' ञ्च ततः परम्।

'पद्मापित्रेति हुत्वा तु भृगवे' इति हूयताम्।। २३०

'ब्रह्म जज्ञान' मिति च 'हिरण्यगर्भस्समे' ति च।

'रुद्रमन्यं-त्र्यम्बक' मिति रुद्राय होमयेत्।। २३१

'द्यावापृथिव्यो' रिति च 'यस्याः श्रिय' इतीर्य च

'तस्थुषो धृत्या' इति च 'य एष' इति हूयताम्।। २३२

हुने 'द्वितत्य विश्वञ्च-यो नो भी' ति च हूयताम्।

एते धात्रादिमन्त्रास्स्युः तैर्होमः परिकीर्तितः।। २३३

'मुनीन्द्र ब्रह्मनित्या' येति मणिकाय हुनेत्तथा।

'सन्ध्यायै मुनिपत्न्यै' इति सन्ध्यामनुर्भवेत्।। २३४

'तापसाय वैखानसाय' इति मन्त्रौ तु तापसौ।

'किष्किन्धाय-तीर्था' येति किष्किन्धाय हुनेत्ततः।। २३५

'त्रातारमिन्द्र' मिति च 'महान्-महानिन्द्रो नृव' दिति।

'भुवस्त्वमिन्द्र-इत्येन्द्रसानसिं-प्रससाहिषे।। २३६

अस्माकमिन्द्रोऽभूदिन्द्रो-द्यौर्व्योम भू' रिति।

'इन्द्रं प्रणवन्त-मितीन्द्रो-वृत्रमिन्द्रो-बभूव' च।। २३७

'इन्द्रोऽस्माक' मितीन्द्राय हुनेन्मन्त्रान् त्रयोदश।
'अग्निर्मूर्धा दिव' इति 'अयमग्नि' श्च वह्नये।। २३८
'यमो दाधार-नमस्ते' द्वौ तु याम्यमनू स्मृतौ।
'वसवः प्रथमो देव' इति 'सहस्राक्षश्च' नैर्ऋतेः।। २३९
'ये ते शतमुदुत्तम-मयाश्चाग्न इतीर्य च।
आपस्सृज' न्त्विति हुनेच्चत्वारो वारुणाः स्मृताः।। २४०
'मिश्रवासस-एता' नित्येतौ वैश्रवणौ यजेत्।
'ईशान-ईशईशित्रे' तीशानाय च हूयताम्।। २४१
(एवं हुत्वा विधानेन परिस्तीर्य च पावकम्।)
'उदुत्यं जातवेदसं-चित्रं देवे' ति हूयताम्।। २४२
'ममाग्न' इ 'त्यहमग्नेः-अग्न आयाहि' भिः हुनेत्।
शनैश्चराय जुहुया 'त्प्रभुर्देवो-ग्रहाधिपः'।। २४३
'बृहस्पतिः' हुनेदादौ द्वितीयञ्च 'बृहस्पतिः।
बृहस्पते अतिय' दिति 'उपयामे' ति हूयताम्।। २४४
'श्रविष्ठजो यस्तद्विष्णोः-तद्विप्रासो विपन्यवः'।
'प्रजापते' ति हुत्वा तु 'सुभूस्स्वय' मिति क्रमात्।।२४५
'भूभामि' नीति हुत्वा तु 'इष्टगामिनि' मन्त्रकम्।
'सोम यास्ते-याते धामे' ति सौम्यमन्त्रद्वयं हुनेत्।।२४६
'रुद्रमन्यं-त्रियम्बकं' रुद्राय 'जगद्भुवमुदीर्य च'।
'जगद्भुवः-सुब्रह्मण्यः-सुब्रह्मण्यो-जगद्भुवः'।। २४७
'जगद्भुवश्च-षण्मात्रान् स्कन्दाय च सुहूयताम्।
'अतो देवा-इदं विष्णु' रिति मन्त्रौ तु वैष्णवम्।। २४८
'या ब्रह्मचारिणी' त्येव 'सा चारुजन्मे' ति च।
'काल्यै च जुहुयादेतौ द्वौ मन्त्रौ च ततः परम्।। २४९

'यैषाऽमराणां गुरवे-याम्यानि' द्वौ ततः परम्।
'जातवेदस' इति तथा 'सनः पर्षदती' ति च।। २५०
'तामग्निवर्णा' ञ्च ततो 'दुर्गां देवी' मिति क्रमात्।
'अग्नेत्वमि' ति 'पू' श्चेति 'विश्वा' नीति ततः क्रमात्।। २५१
'अग्ने अत्रिवन्मनसा-पृतनाजित' मित्यपि।
'सनः पर्ष' दिति दुर्गायै सूक्तं दौर्गं हुनेद्बुधः।। २५२
'नन्दिन्याऽपोऽथ शाखा भू-देवीप्रवाहिणीति च
बिसिनीभूता-प्रविद्युता-गङ्गावाणी' तथैव च।। २५३
'विद्यां नो-माता ह्यमेया-आयामह' मिति क्रमात्।
'यया सतः सत्य' मिति 'प्रसविण्यङ्ग' इत्यपि।। २५४
'याभ्यो हि तप्त' मित्युक्त्वा 'या मानसे' ति वै क्रमात्।
जुहुयाद्रोहिणीभ्यश्च मन्त्रानेतान् क्रमेण वै।। २५५
'यतस्स्वमासी' दिति च 'अस्मा अस्मा' दिति क्रमात्।
भार्गवौ जुहुयादेतौ ततश्चाङ्गिरसौ यजेत्।। २५६
'कस्याऽङ्गिराऽभू' दिति च 'विस्मापयति' च क्रमात्।
'व्यावर्धते' यः-सस्मार 'इति तौ पुलहाय वै।। २५७
'य एषोदान-आनन्दरो पौलस्त्यौ प्रकीर्तितौ।
'प्रप्रायशो-ये निःष्यन्ता' क्रतोर्मन्त्रौ प्रकीर्तितौ।। २५८
'यो नो वसिष्ठ-स्सप्ते' ति वासिष्ठौ सम्प्रकीर्तितौ।
'य आनसूयेश' इति 'य एष' इति चात्रये।। २५९
'स एकोऽभूद्दिवा निशं-यस्त्रैष्टुभ' इति क्रमात्।
'प्रकम्प्य-यो मातरि श्वा' इति मन्त्रौ ततो हुनेत्।। २६०
'वृषाकपेरिह' इति 'ओजो' भीति ततो मनू।
'आपो विश्व' ञ्च 'चातुर्य' मिति मन्त्रौ ततः परम्।।२६१

'तयाऽदित्या निर्विशन्ति-तत्त्रीण्येषे' ति च क्रमात्।
खवाय्वग्न्यम्बुभूमीनां मन्त्रास्स्युः तान् क्रमाद्धुनेत्।। २६२
'पावकानो-महो अर्णः' धिषणायै मनू हुनेत्।
'शं सा नियच्छ' त्विति च 'भूयाम' इति वै ततः।। २६३
'य उत्तमोऽग्नेः पथा यं' इति न्यक्षस्य कीर्तितौ।
'यमर्पयन्ति-यस्संहरे' ति वैवस्वतौ स्मृतौ।। २६४
'ऋचामधीशो-नीता' मित्येतौ मैत्रौ प्रकीर्तितौ।
'येनैष्टे' च 'समू' ह्येति क्षत्तुर्मन्त्रौ प्रकीर्तितौ।। २६५
'चरुं पचेद्यः-छुल्लयां' हि हविरक्षकदैवतौ।
चामुण्डस्य तथा रौद्रौ जुहुयाद्विधिवत्ततः।। २६६
'चतुर्मुखी' ति हुत्वा तु 'या लोके' ति च हूयताम्।
'त्रिणेत्रधारी' च तथा 'चिह्नञ्चे' ति च हूयताम्।। २६७
'ज्वालामाला-बालान् हरी' षाण्मुख्यौ परिकीर्तितौ।
'युगे युगे-सर्वं रमे' ति वैष्णव्यौ जुहुयाद्बुधः ।। २६८
'कल्पेष्वन्तेष्विति' तथा वाराह्यै जुहुयात्ततः।
'सा स' र्वेति च 'माले' ति तथेन्द्राण्यै प्रकीर्तितौ।। २६९
'चण्डी हरी' ति 'मोही' ति काल्यै च जुहुयाद्बुधः।
मातॄणामथ हुत्वा तु वैघ्नञ्चैव यजेत्क्रमात्।। २७०
पुष्परक्षकमुद्दिश्य 'धाता-फुल्ले' त्यतः परम्।
फुल्लाय च ततो हुत्वा बलिरक्षकाय च हूयताम्।। २७१
'विश्वान् बलिं' 'सौर्यहित' इत्युक्त्वा च सुहूयताम्।
'आग्नेयः-प्रेक्ष्याम' इति वैष्वक्सेनौ प्रकीर्तितौ।। २७२
'शतधारं-कदापिसृजत' इत्येतौ गारुडौ स्मृतौ।
'धर्मौघमादौ-योगन्धर' न्निति इभास्यस्य मनू स्मृतौ।। २७३

'यमर्पयन्ति-शन्नो निधत्तां' इति शेषमनू स्मृतौ।
'भूमाननोऽग्ने-वन्द्यो न' इति सौदर्शनौ स्मृतौ।। २७४
'आसाग्र-ओजो बलाय' द्वौ ध्वाजौ परिकीर्तितौ।
'तन्मा यशोऽग्र' इति च 'अस्मादि' त्यम्बुजाय वै।। २७५
'भूतानां-भूतो भूतेषु-अक्षहन्त' इति त्रयः।
'ये भूताश्च' चतुर्थस्स्युः भूतमन्त्रान् क्रमात् हुनेत्।। २७६
जुहुयाद्व्याहृतिञ्चान्ते तं तं देवमनुस्मरन्।
पुरुषसूक्तञ्च हुत्वा तु विष्णुसूक्तं ततः परम्।। २७७
यद्देवादींश्च जुहुयाद्विष्णुसूक्तं तथाऽन्ततः।

## प्रधानेतराग्निषु होमः

आहवनीये तु तत्काले पुरुषसूक्तं सुहूयताम्।। २७८
अन्वाहार्ये च होतव्यं विष्णुसूक्तं विशेषतः।
गार्हपत्ये विधानेन ब्राह्मञ्चैकाक्षरादि च।। २७९
आवसत्थ्ये च होतव्यं रुद्रसूक्तं ततः परम्।
पौण्डरीके च जुहुयात्पारमात्मिकमेव च।। २८०
सभ्यञ्च पौण्डरीकञ्च विनाऽन्याग्नीन् विसर्जयेत्।
नृत्यैर्गीतैश्च वाद्यैश्च रात्रिशेषं नयेत्क्रमात्।। २८१

## स्थापनदिनारम्भकृत्यम्

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन सूक्तानि च जपेत् क्रमात्।। २८२
ततः प्रविश्याग्न्यगारं कुशाक्षतसमायुतः।
पुष्पैर्गन्धैस्तथा धूपैः दीपैरपि विशेषतः।। २८३

स्थापनार्थं कृतं पीठं गोमयेनोपलिप्य च।
पञ्चगव्यैस्समभ्युक्ष्य रत्नादीनि समाहरेत्।। २८४
ब्रह्मस्थानं समासाद्य श्वभ्रं कुर्याच्च यत्नतः।
द्वादशाङ्गुलमायामं चतुरश्रं विक्षचणः।। २८५
मध्ये निम्ने तु तस्यैव उक्तमानं सुबुद्धिमान्।
पूर्वोक्तेनैव मार्गेण रत्नन्यासं समाचरेत्।। २८६
क्षौमेनाच्छाद्य रत्नानि सुधया परिपूरयेत्।

## महाशान्तिहोमः

यज्ञशालां ततो गत्वा देवेशं सम्प्रणम्य च।। २८७
पश्चादब्जाग्निमासाद्य परिषिच्य च पावकम्।
श्वेताब्जानां शतं गृह्य कापिलेन घृतेन वै।। २८८
आप्लुत्य विष्णुगायत्र्या जुहुयात् भक्तिसंयुतः।
रक्ताब्जं बिल्वपत्रञ्च पूर्ववज्जुहुयाद् बुधः।। २८९
हुत्वा पुरुषसूक्तेन वैष्णवं जुहयात्ततः।
यद्देवादींस्ततो हुत्वा ब्राह्ममैन्द्रञ्च वारुणम्।। २९०
रात्रिसूक्तं ततो हुत्वा विश्वजित्सूक्तमेव च।
सारस्वतञ्च जुहुयान्महाशान्तिरियं भवेत्।। २९१
एवं हुनेत् महाशान्तिं समस्तदुरितापहम्।
सर्वदोषोपशमनं सर्वकामसमृद्धिदम्।। २९२
सर्वद्रव्यैश्च सम्पूर्णा सा क्रिया सुक्रिया भवेत्।
अध्वर्युश्चैव तत्काले अग्निमानम्य चादरात्।। २८३
सभ्येऽग्नौ वैष्णवं हुत्वा पञ्चविंशतिवारकम्।
समिद्घृताभ्यां चरुणा व्याहृत्यन्तं हुनेत् पृथक्।। २९४

इन्धनानि च निक्षिप्य अग्निञ्च परिरक्षयेत्।

## देवोद्धरणम्-अलङ्करणञ्च

शय्यास्थं देवमासाद्य प्रणम्यैवानुमान्य च।। २९५
सुप्तं हरिं भक्तियुतः प्रणवेन प्रबोधयेत्।
'उत्तिष्ठ सुमहाबहो ब्रह्माद्यैरभिवन्दित!।। २९६
प्रजानां रक्षणार्थं त्वं भवस्वेह जनार्दन!'
इत्येवमुक्त्वाऽऽचार्यो वै देवमुद्धृत्य वै तथा।। २९७
विमोच्य वस्त्राभरणजातान्यन्यानि योजयेत्।
भूषणान्यर्पये 'द्भूतो भूतेष्वि' ति समुच्चरन्।। २९८
तत्तत्स्थानेष्वलङ्कृत्य देवमानम्य चादरात्।
पुष्पाद्यैरप्यलङ्कृत्य नानावर्णैः विशेषतः।। २९९
दिव्यगन्धैरलङ्कृत्य नाभेरूर्ध्वञ्च सर्वशः।
चित्रकक्ष्यासमायुक्तवस्त्रैः कुर्यादलङ्क्रियाम्।। ३००
पश्चाद्देवं प्रणम्यैव पाद्याद्यर्घ्यान्तमर्चयेत्।
गुरुं सम्पूज्य तत्काले यजमानो मुदान्वितः।। ३०१
तथा पदार्थिनस्सर्वान् नमस्कुर्यात्स्वदैववत्।
देवमानम्य च ब्रूयादिमं मन्त्रं स्मरन् हरिम्।। ३०२
'क्षमस्व पुण्डरीकाक्ष भक्तस्य मम शक्तितः।
यद्यदिष्टमनिष्टं वा भगवंश्चरितं मया'।। ३०३
इत्युक्त्वा देवदेवेशं प्रणमेच्च पुनः पुनः।

## यागशालायाः प्रस्थानम्

मुहूर्ते समनुप्राप्ते दैवज्ञं पूजयेत्ततः।। ३०४

सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
बार्हिणच्छत्रसंयुक्तमङ्कुरैश्च समन्वितम्।। ३०५
पताकाध्वजसंयुक्तमष्टमङ्गलसंयुतम्।
ब्रह्मघोषसमायुक्तं शकुनसूक्तसमन्वितम्।। ३०६
आक्ष्वेलितास्फोटिताद्यैर्जयशब्दैश्च संयुतम्।
तोयधारासमायुक्तं पुष्पवृष्टिसमन्वितम्।। ३०७
कुम्भं सङ्गृह्य शिरसा आचार्यः पुरतो व्रजेत्।
देवं सङ्गृह्य पश्चाद्वै व्रजेयुर्मूर्तिधारकाः।। ३०८
देवीभ्याञ्चैव सह चेत् ते नयेद्दक्षवामयोः।
बहुभूमिप्रतिष्ठा चेत्तत्तद्बुद्ध्वाऽथ बुद्धिमान्।। ३०९
तत्तत्काले प्रकुर्वीत एवमेव विधानतः।
प्रदक्षिणं ततः कृत्वा देवालयमुपाव्रजेत्।। ३१०
विष्णुसूक्तं समुच्चार्य स्थापयित्वा ततः परम्।
ध्रुवसूक्तं ततो जप्त्वा पुंसूक्तेन समन्वितम्।। ३११
एकाक्षरादिकं जप्त्वा स्थापयेयुर्विचक्षणाः।

## बिम्बावाहनम्

आचार्यः पुरतः कुम्भं धान्यपीठे सुसन्न्यसेत्।। ३१२
'सुवर्भुवर्भूस्स्थ' इति मूर्धानं नाभिमेव च।
पादौ च संस्पृशेत्तद्वद्देवेशस्य समाहितः।। ३१३
यकारं पादयोर्न्यस्य अकारं हृदये न्यसेत्।
प्रणवेनैव संवेष्ट्य ओङ्कारं मूर्ध्नि विन्यसेत्।। ३१४
तत्तु ब्रह्ममयं ध्यात्वा प्रणवेनैव वेष्टयेत्।
पश्चात्कूर्चं समादाय पूर्वोक्तध्यानमास्थितः।। ३१५

आत्मसूक्तं ततो जप्त्वा सकलीकरणं चरेत्।
कुम्भस्थां शक्तिमादाय 'आयातु भगवा' निति।। ३२६
कूर्चेन पश्चात् तत्तोयं दृढचित्तः समाहितः।
बिम्बस्य मूर्ध्नि विधिना स्रावयेत्प्राणकल्पनम्।। ३२७
'विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम्'।
पञ्चमूर्तीः समुच्चार्य आवाहनमथाऽऽचरेत्।। ३२८
दक्षिणे वै श्रियं देवीं महीं वामे तथाऽऽह्वयेत्।
तत्तन्मन्त्रं समुच्चार्य अन्यानावाहयेत्तथा।। ३२९

## कौतुकाद्यावाहनम्

'संयुक्तमेत' दित्युक्त्वा न्यसेत्सम्बन्धकूर्चकम्।
ध्रुवस्य पुरतः पीठे पुष्पन्यासं समाचरेत्।। ३२०
ध्रुवस्य शक्तिं तत्काले समावाह्य च कौतुके।
अर्चायामौत्सवे चैव तथैवाऽऽवाहनं चरेत्।। ३२१
श्रीभूम्योश्च तथाऽऽवाह्य
ततः कौतुकपार्श्वयोः।
पीठदेवान् समावाह्य
मुनी चावाहयेत्क्रमात्।। ३२२
ब्रह्मेशौ स्थापितौ यत्र तौ तत्राऽऽवाहयेत्क्रमात्।
धात्रादिद्वारदेवांश्च द्वारे द्वारे समाह्वयेत्।। ३२३
तथैव द्वारपालादीनिन्द्रादींश्च यथाक्रमम्।
विष्णुभूतान्तमावाह्य यागशालां समाविशेत्।। ३२४
अब्जाग्निं तु विसृज्यैव आदित्यं प्रणमेत्ततः।
पुण्याहं वाचयेत्पश्चात्कृतं पूर्णं भवेत्ततः।। ३२५

## अर्चनम्

सप्तविंशतिभेदेन देवदेवं ततोऽर्चयेत्।
देव्यौ चैव समभ्यर्च्य परिवारांस्तथाऽर्चयेत्।। ३२६
पायसादि निवेद्यैव प्रभूतं हविरर्पयेत्।
बलिं पश्चात् क्षिपेत्तासु तासु दिक्षु यथाक्रमम्।। ३२७
बलिमुत्थाप्य काले वै सर्वशान्तिक्रमेण वै।
. . . . . . . . . . . . . . . . . . . . . . . . ।। ३२८
बहुबेरप्रतिष्ठा चेदेवमेव विधानतः।
तले तले प्रकुर्वीत एवमेव विधिः स्मृतः।। ३२९

## प्रतिष्ठान्तोत्सवः

तद्दिने चापराह्णे तु घोषणादिर्विधीयते।
नवाहं वाऽथ सप्ताहं पञ्चाहं त्रियहन्तु वा।। ३३०
उत्सवोक्तविधानेन चोत्सवं सम्यगाचरेत्।
एकाहिकन्तु कुर्याच्चेन्न ध्वजारोहणं चरेत्।। ३३१
स्नपनं वा प्रकुर्वीत तद्रात्रौ तु विचक्षणः।
उत्सवान्तदिने रात्रौ स्नपनं सम्यगाचरेत्।। ३३२

## यथोक्तमकरणे दोषः

अत्रोक्तं यत्तु तत्सर्वं विधिनैवं समाचरेत्।
द्रव्यहीने द्रव्यहानिः क्रियाहीने च कर्मणः।। ३३३
मन्त्रहीने च सर्वार्थान् नाशयेच्च फलं क्रतोः।
तस्माच्छास्त्रोक्तमार्गेण यजमानस्समाहितः।। ३३४

सर्वं समाचरेद्भक्त्या न भूयान्नास्तिकः क्वचित्।

## दक्षिणादानम्

सम्प्राप्ते दक्षिणाकाले दद्याच्छ्रद्धासमन्वितः।। ३३५
'यज्ञस्य दक्षिणा जीव' इति हि श्रूयते श्रुतिः।
तस्मादवश्यं देया हि दक्षिणा फलकाङ्क्षिभिः।। ३३६
अज्ञानादर्थलोभाद्वा यदि दद्यान्न दक्षिणाम्।
पदार्थिनां भवेत्तत्र तत्क्रियाजनितं फलम्।। ३३७
गुरोश्च स्थापकादीनां यजमानो न चाप्नुयात्।

## विनियुक्तद्रव्योपयोगः

प्रतिष्ठायामुत्सवेषु स्नपनादौ च वस्तु यत्।। ३३८
उपयुक्तं तत् क्रियासु पूजनार्थाहृतञ्च यत्।
वस्त्रधान्यादिकं सर्वं पात्राणि विविधानि च।। ३३९
आचार्यायैव सन्दद्यात् न कुर्यात् अन्यथा क्वचित्।
अनर्हमुपयोगाय द्रव्यं दर्भादिकं तथा।। ३४०
काष्ठादिकन्तु यच्छिष्टं दाहयेदप्सु वा क्षिपेत्।
स्रुवं जुहूञ्च दर्वीञ्च दर्भमालादिकं तथा।। ३४१
एवमादीनि देवार्थं तत्रैव परिरक्षयेत्।

## प्रतिष्ठाफलश्रुतिः

एवं यः कुरुते भक्त्या विष्णोः स्थापनमुत्तमम्।। ३४२
ब्राह्मणः श्रद्दधानस्तु यतवाक्कायमानसः।
तस्य कायकृतं पापं तत्क्षणादेव नश्यति।। ३४३
सर्वयज्ञफलं लब्ध्वा सर्वान् कामानवाप्य च।
एकविंशतिपूर्वांश्च परानप्येकविंशतिम्।। ३४४

प्रापयित्वाऽऽत्मनाऽन्ते तु विष्णुलोकं स गच्छति।
विष्णुलोकं समासाद्य तद्विष्णोः परमं पदम्।। ३४५
प्राप्नोति तत्रोक्तफलमिति पूर्वजशासनम्।
क्षत्रियो विजयं कीर्तिं लब्ध्वाऽन्यूनपरिग्रहः।। ३४६
सर्वक्षत्राभिवन्द्यश्च सागरान्तां लभेत गाम्।
स भुक्त्वाचैहिकान् भोगान् विष्णोस्सारूप्यमाप्नुयात्।। ३४७
वैश्योऽतिधनसम्पन्नस्तेजस्वी पुत्रपौत्रवान्।
सर्वान् मनोरथान् भुक्त्वा विष्णोस्सामीप्यमाप्नुयात्।। ३४८
शूद्रस्तु धनसम्पन्नस्तेजस्वी कुलवर्धनः।
कामं भुक्त्वैहिकान् भोगान् विष्णुसालोक्यमृच्छति।। ३४९
अनुमन्ता च यस्तत्र तस्य पापं प्रणश्यति।
पूर्वजन्मकृतं पापमिह जन्मनि वा कृतम्।। ३५०
पूर्वं गता ये पितरः पितामहप्रपितामहाः।
मातृवंशे च ये पूर्वं गता मातामहादयः।। ३५१
पत्नीवंशप्रजाताश्च मित्राणाञ्चैव वंशजाः।
भृत्यवर्गाश्च सम्बन्धिजातास्सर्वविधाः स्थिताः।। ३५२
पूर्वे परे चैकविंशाः यजमानेन संयुताः।
इह लोके सुखं भुक्त्वा स्वर्गे लोके च वै चिरम्।। ३५३
विष्णुलोके वसेयुश्च पुनरावृत्तिवर्जिताः।

## जीर्णोद्धारणफलम्

जीर्णोद्धारक्रियाकर्तुः फलं स्याद्द्विगुणं पुनः।। ३५४
लोकशान्तिर्भवेच्चैव राजराष्ट्रविवर्धनम्।

वर्षदन्तु यथाकालं तस्माद्यष्टव्यमेव हि।
इत्येवं भगवान् प्राह ब्रह्मा लोकपितामहः।। ३५६

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तयां संहितायां
खिलाधिकारे प्रतिष्ठाविधिर्नाम
सप्तदशोऽध्यायः।

----------

अथ अष्टादशोऽध्यायः

----------

## पञ्चमूर्तिप्रतिष्ठाविधिः

ऋषय ऊचुः-

ब्रह्मपुत्र मुनिश्रेष्ठ नमस्ते वदतां वर !।
त्वमेव सर्ववेत्ताऽसि त्वमेव ब्रह्मणः प्रियः।। १
श्रोतुमिच्छामहे त्वत्तः यथाऽऽचार्यात्त्वया श्रुतम्।
त्वत्प्रसादाद्वयं विष्णोः पञ्चमूर्तिविधिक्रमम्।। २
विमानानां विधिं तेषां प्रतिष्ठामर्चनादिकम्।
दययाऽधीहि भो ब्रह्मन्! कृपालुः विस्तरेण नः।। ३

भृगुरुवाच-

युष्माभिश्चोदितं सर्वं प्रवक्ष्याम्यानुपूर्वशः।
शृणुध्वमृषयस्सर्वे मनसाऽवहितेन वै।। ४

## पञ्चमूर्तिविधिः-आलयकल्पनम्

सहस्रानवरैर्वेदविद्भिः विप्रैरधिष्ठिते।
देशे पूर्वोक्तमार्गेण स्थानं सम्यक् प्रकल्पयेत्।। ५

तत्र सङ्कल्पिते स्थाने विमानारम्भमाचरेत्।
नलीनकं तथाऽष्ठाङ्गं सर्वतोभद्रमेव वा।। ६
नन्दीविशालकं वाऽपि बृहद्वृत्तमथापि वा।
एतेषु तु विमानेषु यजमानेच्छया गुरुः।। ७
किञ्चिद्विमानं निश्चित्य पञ्चमूर्तिं प्रकल्पयेत्।
शिल्पशास्त्रविधानेन विमानं कारयेद्बुधः।। ८
आदिभूमिन्तु सर्वत्र वालुकाभिः प्रपूरयेत्।

## आद्यतले

तस्यान्तु परितः कार्यं मूर्तीनां स्थानमुच्यते।। ९
ऐन्दे पुरुषमूर्तेस्तु स्थानं सम्यक् प्रकल्पयेत्।
विमानरूपमाज्ञाय युक्त्या तत् परिकल्पयेत्।। १०
दक्षिणे सत्यमूर्तेस्तु स्थानं सम्यक् प्रकल्पयेत्।
प्रकल्पयेत्पश्चिमे तु विमानञ्चाच्युतस्य वै।। ११
उत्तरे चानिरुद्धस्य विमानं कल्पयेद्बुधः।
पुरुषाद्यास्तु यत्रोक्तास्तत्रैवं परिकल्पयेत्।। १२

## द्वितीयतले

द्वितीये तु तले चैव स्थानमेवं प्रकल्पयेत्।
आदिमूर्तिं समुद्दिश्य गर्भागारं प्रकल्पयेत्।। १३
तृतीये च तले चोर्ध्वे शयनं संप्रकल्पयेत्।
आद्ये मध्ये विष्णुमूर्तिं स्थानकं परिकल्पयेत्।। १४
द्वितीये नारसिंहञ्च श्रीभूमिसहितं तथा।
आसीनं कल्पयेद्देवं दिव्ये सिंहासने प्रभुम्।। १५

सिंहासनस्य चाधस्ताद्देवस्याग्नेयपार्श्वतः।
किञ्चिद्देवं प्रेक्षमाणं विस्मयोत्फुल्ललोचनम्।। १६

ब्रह्माणं कारयेच्चैव पूर्वोक्तेन विधानतः।
तथा देवस्य चैशान्ये कल्पयेदीश्चरं शिवम्।। १७

तिष्ठन्तं कल्पयेदेनं दशतालेन मानतः।
कुड्यकौतुकयोर्मध्ये मुनी सम्यक् प्रकल्पयेत्।। १८

एकजानुक्रमगतौ पुष्पाञ्जलिसमन्वितौ।
नारसिंहं तथा कुर्याद्दशतालेन मानतः।। १९

आयामं सर्वतः कुर्यादुपन्यासोक्तमार्गतः।
परिणाहे तु सर्वत्र मानं ज्ञात्वा तु बुद्धिमान्।। २०

अध्यर्धं योजयित्वा तु कारयेत्तु विचक्षणः।
सिंहस्येव मुखं कुर्याद्दंष्ट्राभिश्च समायुतम्।। २१

शङ्खचक्रवरं कुर्यात्सर्वाभरणसंयुतम्।
श्वेतवर्णं प्रकुर्वीत किञ्चिद्रूक्षदृगन्वितम्।। २२

नारसिंहन्तु यत्नेन शिलयैव प्रकल्पयेत्।
श्रीदेवीं दक्षिणे कुर्याद्वामे श्रोणीञ्च कारयेत्।। २३

तत्तद्वर्णसमायुक्तं तत्तत्काले प्रकल्पयेत्।
प्रवालवर्णं ब्रह्माणं श्वेताभञ्चैव शङ्करम्।। २४

माञ्च प्रवालसङ्काशं पुराणमरुणं चरेत्।
एवं तले द्वितीये स्यात्तृतीये तु प्रवक्ष्यते।। २५

## तृतीयतले

सुखासीनं प्रकुर्वीत श्रीभूमिभ्यां समायुतम्।
मुनिभ्यामपि संयुक्तं तत्तद्वर्णसमायुतम्।। २६

अन्यानपि क्रमेणैव देवान् सम्यक् प्रकल्पयेत्।
अथवा शयनं कुर्यादनन्तोपरि शायिनः।। २७
तस्यैव पादपार्श्वे तु श्रीदेवीं सम्यगर्चयेत्।
पादसंवाहनपरां देवदेवं समीक्ष्य वै।। २८
नाभ्यम्बुजसमाविष्टं ब्रह्माणञ्च प्रकल्पयेत्।
पञ्चायुधानि गरुडं तत्तत् स्थाने प्रकल्पयेत्।। २९
देवस्य पादपार्श्वे तु कल्पयेन्मधुकैटभौ।
पूजकौ च मुनी द्वौ तु द्वारपालौ प्रकल्पयेत्।। ३०
कुर्याच्चामरधारिण्यौ यथोक्तं परिकल्पयेत्।

## अधस्तले-प्राच्याम्

अधस्तले विमानस्य पुरुषं पूर्वतश्चरेत्।। ३१
पुरुषं श्वेतवर्णञ्च सर्वाभरणभूषितम्।
श्रीभूम्यौ च तथा कुर्याद्दक्षिणोत्तरयोः क्रमात्।। ३२
श्रीदेवीं रक्तवर्णाञ्च सस्यश्यामाञ्च मेदिनीम्।
माञ्च दक्षिणतः कुर्यात्पुराणञ्चैव वामतः।। ३३
सिंहासनस्य पृष्ठे तु चामरग्राहिणी उभे।
कुर्यात्सुरासुन्दर्यौ च सर्वलक्षणसंयुते।। ३४
उक्तवर्णैस्समायुक्तं पुरुषं सम्प्रकल्पयेत्।

## दक्षिणतः

सत्यं दक्षिणतः कुर्याद्भिन्नाञ्जनचयप्रभम्।। ३५
धृतिपौष्णी तथा देव्यौ सर्वाभरणभूषिते।
धृतिस्स्याद्रक्तवर्णा च श्यामा पौष्णी प्रकीर्तिता।। ३६

सत्यस्य पृष्ठभागे तु जयाभद्रे च कारयेत्।
जया श्यामा भवेद्भद्रा रक्तवर्णा प्रकीर्तिता।। ३७
धातृनाथश्चिरायुश्च पूजकौ सत्यपार्श्वतः।
कनकाभो धातृनाथश्चिरायुः पीत उच्यते।। ३८

## पश्चिमतः

पश्चिमे अच्युतं कुर्यात्कनकाभं चतुर्भुजम्।
पवित्रीं मेदिनीञ्चैव पार्श्वयोरुभयोश्चरेत्।। ३९
पवित्रीं कनकाभाञ्च शुकश्यामाञ्च मेदिनीम्।
ख्यातीशञ्चैव पुण्यञ्च पूजकौ द्वौ समाचरेत्।। ४०
ख्यातीशश्च प्रवालाभः पुण्यो रक्त उदाहृतः।
विजया चैव विन्दा च व्याजन्यौ समुदाहृते।। ४१

## उत्तरतः

उत्तरे अनिरुद्धञ्च प्रवालाग्निसमप्रभम्।
अनन्तोत्सङ्ग आसीनं वीरासनसमायुतम्।। ४२
अनन्तस्य फणान् पञ्च प्रकुर्वीत विषोल्बणान्।
देव्यौ प्रमोदायिनी च मही चैव समीरिते।। ४३
प्रथमा च प्रवालाभा द्वितीयेन्दीवरप्रभा।
कुमुद्वती चोत्पलका व्याजन्यौ समुदाहृते।। ४४
माञ्चैवाप्यमितञ्चापि पूजकौ परिकल्पयेत्।
अहं कनकवर्णस्यामममितः कमलप्रभः।। ४५

## उपरि मध्ये च

तत्रोपरि च मध्ये च हरिः श्यामाम्बुदप्रभः।
श्रीभूमिभ्यां सुखासीनः शङ्खचक्रधरः परः।। ४६

मायासंह्लादिनी चैव व्याजन्यौ समुदाहृते।
माया तु श्यामवर्णा स्याद्रक्ता संह्लादिनी भवेत्।। ४७
माञ्चैव मार्कण्डेयञ्च पूर्ववत्कारयेत्क्रमात्।
एवमेव विधानेन सर्वा मूर्तीश्च कारयेत्।। ४८

## मानविचारः

आदिमूर्त्यादिमूर्तीनां बिम्बान्यत्रोक्तवच्चरेत्।
देव्योर्बिम्बानि चान्येषां नवतालेन कारयेत्।। ४९
आयामञ्च परीणाहमन्तरं हस्तपादयोः।
पादप्रसारभेदांश्च दृष्टिभेदं विशेषतः।। ५०
शिष्टं त्वाष्ट्रप्रयोगञ्च शिल्पशास्त्रोक्तवच्चरेत्।
शिल्पविद्यासु निपुणैः सिद्धहस्तैः यतात्मभिः।। ५१
ऊहापोहविधिज्ञैश्च शिल्पिभिः कारयेद्गुरुः।
एवं परिवृताः मूर्तीः द्वारपालांश्च कारयेत्।। ५२

## आदिमूर्तिविधौ-द्वारपालाः

आदिमूर्तिविधाने तु द्वारपालौ प्रकल्पयेत्।
बलिन्दं दक्षिणे कुर्याद्वामे तुहणमेव च।। ५३
बलिन्दं श्यामवर्णञ्च तुहणं कनकप्रभम्।
उद्देशकरसंयुक्तदक्षहस्तसमन्विम्।। ५४
पुरुषमूर्तिं समुद्दिश्य द्वारपालौ प्रकल्पयेत्।
शङ्खं निधिवरं कुर्याद्दक्षिणे तु विशेषतः।। ५५
पद्मं निधिवरं कुर्याद्वामभागे तथैव च।
शङ्खं निधिवरं श्वेतं दण्डहस्तसमन्वितम्।। ५६

पद्मं निधिवरं रक्तं किञ्चिद्रूक्षमुखान्वितम्।
सत्यमूर्तिं समुद्दिश्य द्वारपालौ प्रकल्पयेत्।। ५७
द्वारस्य पश्चिमे भागे शङ्खचूडञ्च कारयेत्।
द्वारस्य पूर्वभागे तु चक्रचूडञ्च कारयेत्।। ५८
श्वेताभं शङ्खचूडञ्च रक्ताभं चक्रचूडिनम्।
इत्येवं सत्यमुद्दिश्य द्वारपालौ प्रकल्पयेत्।। ५९
द्वारस्य चोत्तरे पार्श्वे शङ्खं निधिवरं चरेत्।
पद्मं निधिवरञ्चैव दक्षिणे सम्प्रकल्पयेत्।। ६०
एवमच्युतमुद्दिश्य द्वारपालौ प्रकल्पयेत्।
द्वारस्य पूर्वभागे तु शङ्खचूडं प्रकल्पयेत्।। ६१
द्वारस्य पश्चिमे भागे चक्रचूडञ्च कारयेत्।
अनिरुद्धं समुद्दिश्य निश्चितौ द्वारपालकौ।। ६२
आदिमूर्त्यादिमूर्तीनां एवं स्युः द्वारपालकाः।
यथायोगं प्रकुर्वीत प्रतिद्वारन्तु पालकौ।। ६३
किञ्चिद्द्वारं समीश्यैव किञ्चिद्रूक्षमुखान्वितौ।
उद्देशकरसंयुक्तौ दण्डहस्तसमन्वितौ।। ६४
बिम्बं भित्याश्रितं कुर्यादुत्तमं परिचक्षते।
आलेख्यं वापि कर्तव्यं शक्त्या वै द्वारपालयोः।। ६५

## पञ्चमूर्तिप्रतिष्ठाप्रयोगः-यागशाला

अतः परं प्रवक्ष्यामि स्थापनाक्रममुत्तमम्।
पूर्वोक्तेनैव मार्गेण दिनं सम्यक् प्रगृह्य च।। ६६
तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।। ६७

अङ्कुरानर्पयित्वैव कार्यान्तरमथाऽरभेत्।
आलयस्यैव पुरतः यागशालां प्रकल्पयेत्।। ६८
ऊर्ध्वं तलं समुद्दिश्य पुरतः परिकल्पयेत्।
द्वादशस्तम्भसंयुक्तां चतुरश्रां समन्ततः।। ६९
स्तम्भान्तरं चतुर्हस्तं हस्तमानं तलोच्छ्यम्।
एवं कूटं प्रकल्प्यैव प्रपां वपि च कारयेत्।। ७०
नृत्तशाला यदि स्याच्चेत्तत्र यागं प्रकल्पयेत्।
तन्मध्ये स्थण्डिलं कुर्याच्चतुरश्रं विचक्षणः।। ७१
चतुर्दिशं चतुर्हस्तं हस्तमानं तलोच्छ्यम्।
तन्मध्ये देवदेवस्य शय्यास्थानं विनिर्दिशेत्।। ७२
शय्यास्थानस्य परितश्चाग्निकुण्डानि पूर्ववत्।
आहवनीयस्य पूर्वे तु श्वभ्रं कुर्याद्विचक्षणः।। ७३
श्वभ्रस्य परितः कुर्यात् यथालाभप्रमाणतः।
एवं स्थानं प्रकल्प्यैव तत्पूर्वे कारयेत्ततः।। ७४
द्वितीयतलमुद्दिश्य शालां तत्पूर्वतश्चरेत्।
तथा तृतीयस्य शालां तत्प्राच्यां परिकल्पयेत्।। ७५
एवं क्रमेण वै कुर्याद्यागशालां सुविस्तृताम्।

## द्वितीयतलार्थयागशाला

द्वितीये तु तले यत्र नारसिंहस्तु स्थाप्यते।। ७६
तं नारसिंहमुद्दिश्य कुण्डानि प्रथमं चरेत्।
तत्प्राच्याञ्चैव पुरुषमूर्तिमुद्दिश्य कल्पयेत्।। ७७
द्वादशस्तम्भसंयुक्तां किञ्चित्प्रागायतां तथा।
स्तम्भान्तरं चतुर्हस्तं त्रिहस्तं वाऽपि कारयेत्।। ७८

एकहस्ततलोत्सेधं समं कुर्याद्विचक्षणः।
आहवनीयकुण्डस्य किञ्चित्पूर्वदिगाश्रितम्।। ७९

औपासनविधानेन कुर्यादाहवनीयकम्।
विहितः पुरुषस्य स्यादग्निराहवनीयकः।। ८०

तस्मात्सर्वप्रयत्नेन प्राच्यां कार्यः स पावकः।
प्राच्यामाहवनीयस्य कुर्यात् श्वभ्रं यथोदितम्।। ८१

श्वभ्रस्य परितः कुर्यात्पक्तिञ्चापि यथोदिताम्।
कुण्डस्य दक्षिणे पार्श्वे शयनं सम्प्रकल्पयेत्।। ८२

बिम्बाध्यर्धप्रमाणेन तालमात्रसमुन्नतम्।
इष्टकाभिर्मृदा वाऽपि शय्यास्थानं प्रकल्पयेत्।। ८३

एवं पुरुषमूर्तेस्तु यागशालां प्रकल्पयेत्।
दक्षिणे सत्यमूर्तेस्तु पूर्वोक्तेन विधानतः।। ८४

यागशालां प्रकल्प्यैव किञ्चिद्दक्षिणमायताम्।
दक्षिणाग्निञ्च तत्रैव पूर्ववत्कल्पयेद्बुधः।। ८५

तस्य दक्षिणभागे तु शय्यास्थानं प्रकल्पयेत्।
शय्यायाः दक्षिणे भागे स्नानश्वभ्रं प्रकल्पयेत्।। ८६

एवमेव प्रकुर्वीत उक्तमानेन वै गुरुः।
यागशालामच्युतस्य कल्पयेच्चैव पश्चिमे।। ८७

प्रागायतां तु कुर्वीतं शालामेतां विचक्षणः।
पूर्वोक्तेनैव मानेन शालां निर्मापयेद्गुरुः।। ८८

मध्ये तु यागशालायां वृत्तं कुण्डन्तु कारयेत्।
कुण्डस्य दक्षिणे पार्श्वे शयनं सम्प्रकल्पयेत्।। ८९

तस्य दक्षिणभागे तु श्वभ्रं कुर्याद्विचक्षणः।

शालामप्यनिरुद्धस्य कल्पयेदुत्तरे तथा।
पूर्वोक्तेनैव मानेन तलं पादञ्च करयेत्।। ९१

मध्ये तु यागशालायाः
त्रिकोणं कुण्डमाचरेत्।
कुण्डस्य दक्षिण पार्श्वे
शयनं सम्प्रकल्पयेत्।। ९२

द्वारमुत्तरतः कुर्यादनिरुद्धं समीक्ष्य वै।
कुण्डस्य चोत्तरे पार्श्वे श्वभ्रं सम्यक् प्रकल्पयेत्।। ९३

अनिरुद्धस्य निधिना शालामेवं प्रकल्पयेत्।
पूर्वदिग्यागशालायामलङ्कारांश्च पूर्ववत्।। ९४

आदिमूर्तेर्यागशालां चतुर्द्वारसमायुताम्।
चतुस्तोरणसंयुक्तां कल्पयेद्विधिना बुधः।
नारासिंहस्य शालाञ्च चतुर्द्वारसमायुताम्।
चतुस्तोरणसंयुक्तामादिमूर्तेरिवाचरेत्।। ९६

पुरुषस्य तु शालायाः द्वारं पूर्वे प्रकल्पयेत्।
कुर्यादश्वत्थतरुणा द्वारतोरणकादिकान्।। ९७

द्वारं दक्षिणतः कुर्यात्सत्ययागगृहस्य तु।
पैतृकेणैव तरुणा द्वारतोरणकल्पनम्।। ९८

अच्युतस्य तु शालाया द्वारः पश्चिमतो भवेत्।
क्षीरवृक्षेण कर्तव्यं तथा द्वारादिकं ततः।। ९९

अनिरुद्धस्य शालायाः द्वार उत्तरतो भवेत्।
वटवृक्षेण कुर्याच्च तत्रोक्तं द्वारतोरणम्।। १००

तस्यैवोत्तरपार्श्वे तु वास्तुहोमञ्च कारयेत्।
वास्तुहोमार्थकार्याणि स्थलादीनि (?) च पूर्ववत्।। १०१

## प्रतिष्ठाप्रयोगक्रमः

अत ऊर्ध्वं प्रवक्ष्यामि प्रतिष्ठाविधिविस्तरम्।
नवबिम्बप्रतिष्ठा चेत् प्रथमन्त्वक्षिमोचनम्।। १०२
पञ्चगव्याधिवासादीन् पूर्ववत्कारयेद्बुधः।
वास्तुहोमञ्च पूर्वोक्तविधिना चैव कारयेत्।। १०३
पूर्वेद्युरेव कर्तव्यं रात्रौ यत्तत् प्रवक्ष्यते।
पुण्याहं वाचयित्वा तु आलयेषु पृथक् पृथक्।। १०४
स्थानशुद्धिञ्च कृत्वा तु कुम्भपूजां समाचरेत्।
कुम्भांश्च षट् समादाय सम्यग्दग्धान् मनोहरान्।। १०५
पूर्वोक्तेन विधानेन कुम्भपूजां पृथक् चरेत्।
बालालयश्चेद्देवेशं प्रणम्यैवानुमान्य च।। १०६
कुम्भान् संसाध्य यत्नेन सर्ववाद्यसमायुतम्।
चतुरस्त्रीनथ द्वौ वा एकं वाऽपि यथाविधि।। १०७
उभाभ्यामपि हस्ताभ्यां गृह्णीयुः कलशान् पृथक्।
आदिमूर्तेस्तु कलशमादाय प्रथमं गुरुः।। १०८
शिरसा धारयित्वा तु देवस्य पुरतो व्रजेत्।
देवं श्वभ्रे प्रतिष्ठाप्य कुम्भं दक्षिणतो न्यसेत्।। १०९
पश्चादनुनयेत्कुम्भं पुरुषस्य ततो नयेत्।
अच्युतस्यानिरुद्धस्याध्वर्यवः कलशान् क्रमात्।। ११०
धामप्रदक्षिणं कृत्वा पठन्तः शाकुनान्मनून्।
न्यसेयुः स्थानमासाद्य देवांस्तांस्तान् यथाक्रमम्।। १११
न्यसेयुः दक्षिणे पार्श्वे कुम्भान् श्वभ्रेषु वै क्रमात्।
यजमानो गुरुश्चैव वरयेदृत्विजश्शुचीन्।। ११२

स्नातान् स्नानविधानेन स्थितान् सर्वान् विधानतः।
वस्त्रयुग्मेन शुद्धेन कुण्डलाभ्यां विशेषतः।। ११३
अङ्गुलीयकसन्तत्या हेममालाभिरेव च।
यजमानो गुरुं भक्त्या पूजयेच्च विधानतः।। ११४
पादौ प्रक्षाल्य चाचम्य गुरुरानम्य भास्करम्।
आदिमूर्तेर्यागशालां प्रविशेत्प्रथमं शुचिः।। ११५
आघारं विधिवत्कृत्वा मथितेनैव वह्निना।
अग्निप्रणयनं कुर्याद्गार्हपत्ये यथाविधि।। ११६
सभ्यादिषु तथा कृत्वा चतुर्दिक्षु यथाक्रमम्।
शालासु पुरुषादीनामग्निसाधनमाचरेत्।। ११७
आघारं विधिवत्कृत्वा हुनेदन्ते च वैष्णवम्।
पञ्चगव्यादिसहितान् द्वादशैव यथाक्रमम्।। ११८
उपस्नानसमायुक्तान् स्थापयेत्कलशान् क्रमात्।
पूर्वोक्तेन विधानेन साधयित्वा विचक्षणः।। ११९
नारसिंहप्रतिष्ठा चेत्स्नापयेन्नारसिंहकम्।
पुरुषादीन् स्नापयेच्च क्रमात्कलशवारिभिः।। १२०
पुरस्ताद्दण्डवेदिञ्च उत्तरादि समाचरेत्।
प्रागादि सत्यमूर्तेस्तु दक्षिणाद्यच्युतस्य तु।। १२१
पश्चिमाद्यनिरुद्धस्य साधयेत् कलशान् पृथक्।
तत्तत्पृष्ठे न्यसैच्चैव उपस्नानोदकान् पृथक्।। १२२
पूर्वोक्तेन विधानेन स्नपनं सम्यगाचरेत्।
विमृज्य पश्चात् प्लोतेन वस्त्रालङ्कारमाचरेत्।। १२३
सर्वासामपि मूर्तीनां यथाशक्ति समाचरेत्।
शयनं सम्प्रकल्प्यैव पञ्चभिश्चाण्डजादिभिः।। १२४

अलाभे त्वण्डजादीनां वस्त्रैश्शयनमास्तरेत्।
धान्योपरि चरेद्दिव्यं शयनं त्वण्डजादिभिः।। १२५
उपधानद्वयं कुर्यात्पादयोर्मूर्ध्नि च क्रमात्।
शय्यामेवं प्रकल्प्यैव प्रोक्षणैः प्रोक्ष्य मन्त्रवित्।। १२६
'वेदाहमेत' मुच्चार्य देवांस्तत्र तु रोपयेत्।
पाद्याद्यर्घ्यान्तमभ्यर्च्य पूजयित्वा पृथक् पृथक्।। १२७
मुखवासं निवेद्यैव पुण्याहं वाचयेत्क्रमात्।
'स्वस्तिदा' इति मन्त्रेण बद्ध्वा प्रतिसरं ततः।
'यद्वैष्णवं' समुच्चार्य शयने शाययेत्ततः।। १२८

## प्रतिसरः

उच्यते विस्तरेणात्र अयं प्रतिसरक्रमः।
स्वर्णादिपात्रे गृह्णीयाद्द्रोणमर्धमथापि वा।। १२९
श्यामाकान् तण्डुलान्वापि यथाशक्ति प्रपूरितान्।
निष्कमात्रसुवर्णेन कुर्यात्प्रतिसरान् सदा।। १३०
एकैकं यवविस्तारं तिलमात्रघनान्वितम्।
मणिबन्धायतं कुर्यात्तान् वा तन्तूंश्च तान्तवान्।। १३१
नालिकेरोपरि न्यस्य पात्रे पूर्वोदिते ततः।
'शन्नो निधत्तां' मन्त्रेणाऽऽवाहयेच्छेषमादरात्।। १३२
समभ्यर्च्य चतुर्मूर्तीः स्वस्तिसूक्तं जपेत्तथा।
'कृणुष्व पाज' सूक्तञ्चं रक्षोघ्नांश्च जपेद्गुरुः।। १३३
नारिकेलञ्च नैवेद्यं कदलीं मुखवासकम्।
निवेदयित्वा चानम्य घण्टानादञ्च कारयेत्।। १३४
घोषयित्वा तु वाद्यादीन् कुर्यात्प्रतिसरोत्सवम्।
आचार्यो यजमानेन वस्त्राभरणभूषितः।। १३५

क्षौमवेष्टितमूर्धा च स्रग्गन्धाद्यैरलङ्कृतः।
सग्रन्थिदर्भसंयुक्तं सताम्बूलं सतण्डुलम्।। १३६
रक्षापात्रं समादाय शिष्यमूर्ध्नि विनिक्षिपेत्।
ऋत्विग्भिश्चेतरैस्सार्धं यजमानपुरस्सरम्।। १३७
सर्वालङ्कारसंयुक्तः कुर्वन् धामप्रदक्षिणम्।
स्वस्तिवाचनपूर्वन्तु यागशालां समाविशेत्।। १३८
पात्रं न्यसित्वा वेद्यान्तु यायात् देवस्य सन्निधिम्।
उपचारैस्समभ्यर्च्य देवेशायार्चकस्तदा।। १३९
रक्षासूत्रं समादाय नारिकेलयुतं तदा।
देवस्य दक्षिणे हस्ते स्पर्शयेच्च ततः परम्।। १४०
धृत्वा कराभ्याञ्चोभाभ्यां सूत्रमादाय देशिकः।
हस्ते देवस्य चाचार्यः बन्धयेत्सूत्रमञ्जसा।। १४१
'स्वस्तिदा' मन्त्रमुच्चार्य सूत्रबन्धः उदाहृतः
'विष्णुस्त्वा' मिति मन्त्रेण देव्यौर्वै वामहस्तयोः।। १४२
पूर्ववद्बन्धयेद्धीमान् भूत्वा सफलतण्डुलः।
आचार्यो दक्षिणे हस्ते धारयेत् एवमेव तम्।। १४३
नारसिंहादिमूर्तीनां बन्धयेत्कौतुकं ततः।
नालिकेरफलादीनि ताम्बूलञ्च निवेदयेत्।। १४४

## प्रतिसरबन्धकालः

प्रतिष्ठायां महाशान्त्यां ध्वजारोहे रथोत्सवे।
पवित्रारोपणे चैव प्लवे निश्यङ्कुरात्ततः।। १४५
देवेशस्य च देव्योश्च वीशस्यामितचक्रयोः।
आचार्यस्यर्त्विजाञ्चैव रक्षाबन्धनमाचरेत्।। १४६

कालोत्सवं वर्जयित्वा पवित्रोत्सवमेव च।
इतरेषूत्सवेषु स्याद्देव्योर्देवस्य चैव तु।। १४७
रक्षाबन्धः सुविहितः पश्चाद्यागं समाचरेत्।

## शयनम्

'यद्वैष्णवं' समुच्चार्य शयने शाययेद्धरिम्।। १४८
तत्तन्नाम सुसंयोज्य शाययेत्पुरुषोत्तमम्।
प्राग्द्वारे प्राक्छिरः कुर्याद्यद्दिग्द्वारं ततः शिरः।। १४९
उत्तराच्छादनं कुर्यात्कुम्भं तत्प्रमुखे न्यसेत्।

## प्रधानहोमः-हौत्रम्

यजमानो गुरुश्चैव होतारमभिपूजयेत्।। १५०
ततो हौत्रक्रमेणैव होता हौत्रं प्रशंसयेत्।
'आयात्वि' त्यादिनाऽन्ते वै विष्णोरावाहनं चरेत्।।१५१
नारसिंहप्रतिष्ठा चेन्नारसिंहञ्च योजयेत्।
मूर्तीरावाहयेन्नाम्ना शैषिकादिसमायुताः।। १५२
आदिमूर्त्यादि रुद्रान्तं दक्षिणप्रणिधौ जले।
धात्रादिभूतपर्यन्तान् उत्तरप्रणिधौ तथा।। १५३
प्राच्यामाहवनीयस्य स्थित्वा वै पश्चिमामुखः।
होता पुरुषमुद्दिश्य हौत्रशंसनमाचरेत्।। १५४
पुरुषं मूर्तिभिर्योज्य देवीभ्यां सहितं तथा।
मुनिभ्यां द्वारपालैश्च युक्तमावाहयेत्ततः।। १५५
ततश्च दक्षिणे सत्यं पारिषद्यसमायुतम्।
होता हौत्रं समुच्चार्य आवाहनमथाचरेत्।। १५६

मूर्तीनां पुरुषादीनां चतसृणां विशेषतः।
तद्देवीनामथाऽऽह्वानं दक्षिणप्रणिधौ भवेत्।। १५७
इतरेषाञ्च देवानामुत्तरप्रणिधौ जले।
आवाहनक्रमेणैव जुष्टाकारमथाचरेत्।। १५८
जुष्टाकारञ्च कृत्वैवं तत्क्रमेणाहुतीर्यजेत्।
एवं कुर्याद्विधानेन मूर्त्यावाहनमादरात्।। १५९
सभ्ये तु सर्वदैवत्यं जुहुयात्तु यथाक्रमम्।
पारमात्मिकमन्त्रांश्च जयादीन् जुहुयात्तथा।। १६०
ईङ्कारादींश्च जुहुयादष्टाशीतिं तथा हुनेत्।
यद्देवादींश्च जुहुयात्सर्वदोषापनुत्तये।। १६१
नारसिंहप्रतिष्ठा चेत्सभ्ये हुत्वा विचक्षणः।
'यो वा नृसिंह' इत्युक्त्वा अष्टाधिकशतं हुनेत्।। १६२
व्याहृत्यन्तञ्च जुहुयान्नारसिंहमनुस्मरन्।
पुरुषं मूर्तिमुद्दिश्य पौरुषं सूक्तमेव च।। १६३
हुनेदाहवनीये तु देवन्तु पुरुषं स्मरन्।
अष्टाधिकशतं होममन्ते व्याहृतिसंयुतम्।। १६४
'सत्यस्सत्यस्थ' इत्युक्त्वा सत्यमुद्दिश्य हूयताम्।
अन्वाहार्येऽष्टाधिकशतमाहुतीस्संस्मरन् प्रभुम्।। १६५
गार्हपत्ये च होतव्यमच्युतं मनसा स्मरन्।
विष्णुसूक्तं हुनेदष्टाविंशतिं व्याहृतीस्ततः।। १६६
आवसथ्ये च जुहुयादनिरुद्धं स्मरन् क्रमात्।
एकाक्षरादीन् जुहुयाच्छतमष्टोत्तरं ततः।। १६७
यावत्सङ्ख्या आहुतयो हूयन्ते यत्र यत्र वै।

एवं हुत्वा तु तद्रात्रौ रात्रिशेषं नयेत्क्रमात्।

## प्रभातकृत्यम्

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।। १६९
ऋत्विजश्चैव ते सर्वे स्नात्वा स्नानविधानतः।
ब्रह्मयज्ञञ्च कृत्वा तु सूक्तानि च जपेत्क्रमात्।। १७०
ततो देवालयं गत्वा चरेयुस्ते प्रदक्षिणम्।
यागशालाञ्च सम्प्राप्य अग्निं परिसमूह्य च।। १७१
सभ्यादिषु च कुण्डेषु जुहुयाद्वैष्णवं ततः।
विष्णुसूक्तञ्च हुत्वा तु पौरुषं सूक्तमेव च।। १७२
गर्भालयं प्रविश्याथ पूर्वोक्तेनैव मार्गतः।
रत्नन्यासञ्च कृत्वा तु आलयेषु पृथक् पृथक्।। १७३
मुहूर्ते समनुप्राप्ते शय्यास्थानगतं हरिम्।
सम्प्राप्य शयितं देवं प्रणवेन प्रबोधयेत्।। १७४
'उत्तिष्ठस्व महाबाहो ब्रह्माद्यैरभिवन्दित।
प्रजानां रक्षणार्थाय भवस्वेह जनार्दन'।। १७५
एवमुक्त्वा तु देवेशमुत्थाप्य शयनाच्छनैः।
उत्थाप्यान्यास्तथा मूर्तीः तत्तत् स्थाने निवेश्य च।। १७६
पाद्यादिना प्रपूज्यैव अर्घ्यान्तञ्च यथाक्रमम्।
वस्त्रादिभिरलङ्कृत्य हेमपुष्पादिभिस्तथा।। १७७
नानावर्णसमायुक्तपुष्पमालाभिरेव च।
धूपदीपादिसंयुक्तं छत्रपिञ्छादिसंयुतम्।। १७८
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
आदिमूर्तिं तथाऽन्यांश्च देवानादाय वै क्रमात्।। १७९

तांस्तान् कुम्भाश्च शिरसा तत्तन्मूर्तीश्च पूर्ववत्।
विचिन्तयन्तस्तान् देवान् प्रदक्षिणमथाचरेत्।। १८०
तत्तदालयमावेश्य उत्तराभिमुखाः स्थिताः।
जपन्तः पौरुषं सूक्तं तत्तत्कुम्भं न्यसेत्क्रमात्।। १८१

## स्थापनम्

'प्रतद्विष्णुः स्तवत' इति स्थापनञ्च समाचरेत्।
विष्णुसूक्तं जपन्नेव स्थापयेत्पुरुषादिकान्।। १८२
पुरुषसूक्तञ्च तत्काले जपेत्पुनरनाकुलः।
ध्रुवसूक्तं जपित्वा तु पश्चान्न्यासं समाचरेत्।। १८३
'सुवर्भुवर्भूरि' त्युक्त्वा देवदेवमनुस्मरन्।
मूर्ध्नि नाभौ पादयोश्च क्रमेणैव च संस्पृशेत्।। १८४
अकारं हृदये न्यस्य प्रणवेन सुवेष्टयेत्।
पादयोरन्तरं यत्तु यकारं तत्र सुन्यसेत्।। १८५

## प्रतिष्ठा

कुम्भस्थां शक्तिमादाय कूर्चयुक्तेन वारिणा।
ध्रुवस्य दक्षिणे भागे स्थित्वा चैवोत्तरामुखः।। १८६
पुरुषसूक्तं ततो जप्त्वा स्रावयेत्प्राण इत्युत।
मूर्ध्नि कूर्चेन संस्राव्य देवदेवं विचिन्त्य च।। १८७
निष्कलं सकले ध्यात्वा सकलीकरणं स्मरेत्।
एकमेव विधानेन नारसिंहं प्रकल्पयेत्।। १८८
चतुर्णां पुरुषादीनामेवमावाहनं चरेत्।
देव्यौ मुनी पूजकौ च सहैवऽऽवाहनं चरेत्।। १८९

ध्रुवस्थां शक्तिमादाय कौतुके च समर्पयेत्।
विष्णुसूक्तञ्च जप्त्वा तु आवाहनमथाचरेत्।। १९०
तत्र देव्यौ शिवादींश्च देवानन्यान् यथाक्रमम्।
धात्रादीनपि चावाह्य द्वारपालांश्च वै क्रमात्।। १९१
श्रीभूताद्यक्षहन्तान्तान् देवानावाहयेत्तदा।

## आश्रितालयेषु

इन्द्रादिलोकपालानामालयो यदि कल्प्यते।। १९२
तदालयस्याभिमुखे कुण्डमौपासनं चरेत्।
कृत्वा विधिवदाघारं तत्तन्मन्त्रान् शतं जपेत्।। १९३
सर्वेषां परिवाराणां भूतान्तञ्च यथाक्रमम्।
स्यादालयो यदि पृथक् तस्य च प्रमुखे पृथक्।। १९४
कुण्डमौपासनं कृत्वा आघारं विधिवच्चरेत्।
तत्तन्मन्त्रांश्च जुहुयात्प्रत्येकञ्चैकविंशतिम्।। १९५
आवाहनञ्च कृत्वा तु तत्तन्मन्त्रमुदीरयन्।
एवमावाहनं कृत्वा पादौ प्रक्षाल्य चाचमेत्।। १९६
अग्नीन् सर्वान् विसृज्यैव आदित्यं सम्प्रणम्य च।
सभ्याग्निं सम्प्रगृह्यैव नित्यहोमाय सन्न्यसेत्।। १९७
देवालयं प्रविश्याथ पुण्याहं वाचयेत्ततः।
अर्चयित्वा यथान्यायं हविर्भिस्सन्निवेदयेत्।। १९८
सर्वेभ्यः परिवारेभ्यो यथाशक्ति निवेदयेत्।
शान्तिहेतुकमन्नादि यथाशक्ति प्रदापयेत्।। १९९

## दक्षिणादिदानम्

ऋत्विजश्चैव विविधान् वस्त्राभरणकुण्डलैः।
पूजयेद्धनधान्याद्यैर्नमस्कुर्याच्च देववत्।। २००

सुवर्णपशुभूम्यादीन् गुरवे दक्षिणां ददेत्।
तस्मिन्नहनि सायाह्ने घोषयेदुत्सवं क्रमात्।। २०१
घोषयित्वा तु तत्काले मृदं पूर्ववदाहरेत्।
तद्दिने चादिमूर्तेस्तु उत्सवं कारयेद्बुधः।। २०२
नारसिंहप्रतिष्ठा चेदुत्सवं तस्य कारयेत्।
मूर्तीनां पुरुषादीनां तद्रात्रौ स्नपनं चरेत्।। २०३
पूर्वोक्तेनैव मार्गेण स्नपनञ्चैव कारयेत्।

## फलश्रुतिः

एवं यः कुरुते भक्त्या सर्वलोकोपकारकम्।। २०४
ग्रामशान्तिकरञ्चैव देवानामपि बृंहणम्।
क्षेत्राभिवृद्धिदञ्चैव सस्यानामभिवृद्धिदम्।। २०५
स कृतार्थः पुण्यमूर्तिः लभते वैष्णवं पदम्।
क्षत्रियस्सर्वयत्नेन सदैवं कर्तुमर्हति।। २०६
शत्रूणां निधनञ्चैव वीर्यवृद्धिञ्च विन्दति।
सन्ततीनां कुलस्यापि यानवाहनसन्ततेः।। २०७
पत्नीभृत्यमनुष्याणां गवाञ्चर्द्धिमवाप्नुयात्।
इह चैव सुखं भुक्त्वा सार्वभौमो भविष्यति।। २०८

## तृतीयतलविषयः

तृतीये तु तले यत्र शयनं परिकल्प्यते।
शयनोक्तक्रमेणैव सर्वं वै कारयेद्बुधः।। २०९
स्थापनाय विधिं वक्ष्ये शृणुदध्वं मुनिसत्तमाः।
सर्वेषां स्थापकानाञ्च पर्वोक्तं सर्वमाचरेत।। २१०

'यो वा त्रिमूर्ति' रित्युक्त्वा पौण्डरीके शतं हुनेत्।
हौत्रं प्रशंस्य तत्काले मूर्त्यावाहनमाचरेत्।। २११
'अनन्तशयनञ्चोक्त्वा अनादिनिधनं तथा।
अमितमहिमानञ्च अत्यन्ताद्भुत' मेव च।। २१२
'नागराजं सहस्रशीर्षमनन्तं शेष' मित्युत।
'श्रियंधृतिंपवित्रीञ्चप्रमोदायिनी'मिति क्रमात्।। २१३
'हरिणीं पौष्णीं क्षोणीञ्च मही' मिति तथैव च।
'विरिञ्चिं वरदञ्चैव ब्रह्माणं पद्मसम्भवम्'।। २१४
'कौमोदकीं गदाञ्चैव भद्रां विष्णुप्रिया' मिति।
'शार्ङ्गञ्च कार्मुकञ्चेति चापं त्रिणत' मित्यपि।। २१५
'असिञ्च नन्दकञ्चेति खड्गं विद्युन्निभं' तथा।
'सुदर्शनञ्च चक्रञ्च सहस्रविकचं तथा।। २१६
अनपायिन' मित्युक्त्वा चक्रञ्चैव समाह्वयेत्।
'पाञ्चजन्यं तथा शङ्खमम्बुजं विष्णुप्रियं' तथा।। २१७
'गरुडं पक्षिराजञ्च सुपर्णञ्च खगाधिपम्'।
'विष्वक्सेनं तथा शान्तं हरञ्चामित' मित्यपि।। २१८
'चिरायुषं मार्कण्डेयं रौहिणेयमुदग्रिणम्'।
'महीं भूमिञ्च धरणीं मेदिनी' मिति चैव हि।। २१९
धात्रादीनाञ्च षण्णां वै नामान्युक्तानि पूर्ववत्।
'मणिकं महाबलञ्चैव विमलं द्वारपालकम्'।। २२०
'सन्ध्यां प्रभावतीञ्चैव ज्योतिरूपां दृढव्रताम्'।
'तापसं सिद्धिराजञ्च सर्वदोषविवर्जितम्।। २२१
सहस्राश्वमेधिन' ञ्चैव तापसञ्च समाह्वयेत्।
'वैखानसं तपोयुक्तं सिद्धिदं सर्वदर्शिनम्'।। २२२

'श्रीभूतं श्वेतवर्णञ्च वैष्णवं मुखपालिनम्'।
न्यक्षादीनान्तु नामानि पूर्वोक्तानि समाचरेत्।। २२३
इन्द्रादिलोकपालानां भूतान्तञ्च यथाक्रमम्।
आवाहनक्रमेणैव जुष्टाकारादिकं चरेत्।। २२४
मधुकैटभवर्जञ्च शेषं पूर्वोक्तवच्चरेत्।
अर्चनौत्सवबिम्बे च स्नापने बिम्ब एव च।
तत्रतत्रोक्तविधिना सर्वं कुर्याद्विचक्षणः।। २२५

## देव्योः स्थापनकल्पः

अतः परं प्रवक्ष्यामि देव्योर्वै स्थापनाविधिम्।
द्विविधो मार्ग उद्दिष्टस्सहैव पृथगेव च।। २२६
स्थानके तु ध्रुवे तत्र देवीयुक्तन्तु कौतुकम्।
स्थितमेवाचरेत्तद्वदासीनञ्चासने चरेत्।। २२७
देव्यौ संस्थापयेत्तत्र सह वा पृथगेव वा।
सहासने यथा देव्यौ किञ्चिद्देवं समीक्ष्य वै।। २२८
स्थाप्येऽन्तरं देवदेव्योः भागं तालं यवद्वयम्।
पृथगासने तु ते स्यातां देवं सम्यक् समीक्ष्य वै।। २२९
स्थानके तु ध्रुवे येन देव्यौ मार्गेण संस्थिते।
तेन मार्गेण वै कुर्या द्देव्यौ कौतुक एव च।। २३०
स्थानके चासने वाऽपि ध्रुवे देवीविवर्जिते।
कौतुकं कारयेद्यत्नात् देवीभ्यां युक्तमेव तु।। २३१
उत्तमं बिम्बपूजैव प्रोच्यते त्रिषु सन्धिषु।
बिम्बालाभेऽप्यशक्तौ वा कूर्चे चावाह्य चार्चयेत्।। २३२
दक्षिणे चोत्तरे वापि पीठं कृत्वा त्रिवेदिकम्।

सामृते हारके वाऽपि कौतुकं यत्र चोदितम्।
श्रीभूमिसहितं कुर्यादुत्तमोत्तममुच्यते।। २३४

## स्थापनक्रमः

जलाधिवासं कृत्वा तु देवीभ्याञ्च सहैव तु।
स्नापनार्थन्तु तत्रैव श्वभ्रं देवस्य पूर्ववत्।। २३५
श्रीभूम्योश्च ततः श्वभ्रे दक्षिणोत्तरयोश्चरेत्।
देवस्य पुरतश्चैव पूर्ववत्कलशान् न्यसेत्।। २३६
पवित्रीमुद्दिश्य पूर्वे तु सप्त वै कलशान् न्यसेत्।
महीमुद्दिश्य तत्पूर्वे कलशान् सप्त विन्यसेत्।। २३७
पूर्वोक्तेन विधानेन स्नपनं सम्यगाचरेत्।
वस्त्राद्यैरप्यलङ्कृत्य देवं देवीसमन्वितम्।। २३८
सर्वालङ्कारसंयुक्तं देवं देवीसमन्वितम्।
सर्ववाद्यसमायुक्तं शयने देवमर्पयेत्।। २३९
देव्यौ च शाययेत्पश्चात् दक्षिणोत्तरयोः क्रमात्।
पुण्याहं वाचयित्वा तु बध्नीयात्कौतुकं पृथक्।। २४०
यथोक्तं स्थापनं पूर्वं देवदेवस्य तत्क्रमात्।
होमपूर्वं तत्क्रमेण सर्वं कुर्यात्प्रयत्नतः।। २४१
पवित्र्यै दक्षिणाग्नेस्तु दक्षिणे तु विशेषतः।
कुण्डमौपासनं कृत्वा आघारं विधिवद्यजेत्।। २४२
तस्य चैवोत्तरे पार्श्वे क्षोणीमुद्दिश्य यत्नतः।
कुण्डमौपासनं कृत्वा आघारं विधिवच्चरेत्।। २४३
आघारान्ते तु जुहुयान्मनसा संस्मरन् श्रियम्।
'शं सा नियच्छ' त्विति च 'भूयाम' इति च ब्रुवन्।। २४४

श्रीसूक्तेनापि जुहुयादेकविंशतिवारकम्।
(श्रीशताष्टकमन्त्रैश्च पद्मपत्रैर्हुनेत्ततः।।　२४५
भूशताष्टकमन्त्रैश्च बिल्वपत्रैः शताष्टकम्)।
एवं हुत्वा महीं ध्यायन् महीसूक्तेन हूयताम्।।　२४६
एकविंशतिकृत्वस्तु व्याहृत्यन्तं तथा हुनेत्।
मुहूर्ते समनुप्राप्ते कुम्भमादाय चात्वरः।।　२४७
देवदेवं समासाद्य देवीभ्यां सहितं ततः।
सर्वालङ्कारसहितं सर्ववाद्यसमायुतम्।।　२४८
देवेशं स्थापयेत् स्थाने विष्णुसूक्तं समुच्चरन्।
श्रीसूक्तमुच्चरन् पश्चात् स्थापयेच्च श्रियं बुधः।।　२४९
महीसूक्तं समुच्चार्य चोत्तरे स्थापयेन्महीम्।
देवीभ्यां सहितं देवमर्चयित्वा हविर्ददेत्।।　२५०

## देव्योः पश्चात् स्थापनम्

अतः परं प्रवक्ष्यामि देव्योस्संस्थापनाविधौ।
निमित्तान्तरमन्यञ्च प्रकारं तत्र कर्मणि।।　२५१
देवे संस्थापिते पूर्वं देवीभ्याञ्चैव वर्जिते।
पश्चात् देवीस्थापनेच्छा यदि कर्तुः प्रजायते।।　२५२
देव्यौ संस्थापयेदेव शास्त्रोक्तेनैव वर्त्मना।
देव्योस्तु बिम्बे निर्माय सर्वलक्षणसंयुते।।　२५३
ग्रामस्य यजमानस्य चानुकूले शुभे दिने।
स्थापयेदुक्तविधिना अङ्कुरार्पणमाचरेत्।।　२५४

## प्रयोगक्रमः

आलयात्पुरतो वाऽपि दक्षिणे वा मनोरमे।
यागशालां प्रकुर्वीत दक्षिणोत्तरमायताम्।।　२५५

यथाविभवविस्तारमलङ्कारांश्च कारयेत्।
आदाय बिम्बे यत्नेन नववस्त्राद्यलङ्कृते।। २५६
कृत्वा जलाधिवासादीन् रक्षां सर्वत्र कारयेत्।
यागशालामध्यदेशे स्थण्डिलं कारयेद्बुधः।। २५७
बिम्बाध्यर्धप्रमाणेन दक्षिणोत्तरमायतम्।
मध्ये विष्णोः दक्षिणे तु श्रियो देव्यास्तथोत्तरे।। २५८
हरिण्याः स्थापनार्थन्तु पीठानि परिकल्पयेत्।
अब्जाग्निकुण्डमाग्नेय्यां पूर्ववत्कारयेद्धरेः।। २५९
तस्य दक्षिणभागे तु कुण्डमौपासनं श्रियः।
तस्योत्तरे तथा मह्यास्तथैवौपासनं चरेत्।। २६०
कुण्डानामुत्तरे चैषां कुण्डं श्रामणकं चरेत्।
पूर्वोक्तेनैव विधिना कुर्याच्छ्वभ्रादिकं तथा।। २६१
पश्चाद्देव्यौ समादाय श्वभ्रयोः स्थापयेत्पृथक्।
शास्त्रोक्तेन विधानेन भूमियज्ञन्तु कारयेत्।। २६२
पर्यग्निञ्चैव कृत्वा तु बिम्बपार्श्वे विशेषतः।
पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।। २६३
देवस्य पुरतः कुम्भपूजां पूर्ववदाचरेत्।
कुम्भं देवं क्रमान्नीत्वा श्वभ्रमध्ये तु विन्यसेत्।। २६४
कुम्भञ्च दक्षिणे न्यस्येत् धान्यपीठे यमान्तरे।
पूर्वोक्तेन विधानेन कुण्डेष्वाघारमाचरेत्।। २६५
आघारान्ते च जुहुयाद्वैष्णवञ्च पृथक् पृथक्।
पूर्वोक्तेनैव मार्गेण स्नपनं सम्यगाचरेत्।। २६६
प्लोतेन विमृजेच्चैव वस्त्रमाल्यैश्च भूषयेत्।
अण्डजादीनि चास्तीर्य प्रकल्प्य शयनानि च।। २६७

देवमारोप्य शयने पश्चाद्देव्यौ निवेशयेत्।
पुण्याहं वाचयित्वा तु बद्ध्वा प्रतिसरं ततः।। २६८
शयने शाययेद्देवं देव्यौ पश्चात्तथा पृथक्।
उत्तराच्छादनं कुर्याद्वस्त्रैश्शुभ्रैरथाहतैः।। २६९
अब्जाग्निकुण्डमासाद्य परिषिच्य च पावकम्।
जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतः परम्।। २७०
'अतो देवादि' जुहुयात्तथा मन्त्रान् जयादिकान्।
श्रियश्चौपासने कुण्डे तामुद्दिश्य हृदा स्मरन्।। २७१
'शं सा नियच्छ' त्विति च 'भूयाम' इति च क्रमात्।
श्रीसूक्तेन समायुक्तं जुहुयात्पञ्चविंशतिम्।। २७२
मह्याश्चौपासने कुण्डे महीसूक्तोदितक्रमात्।
मेदिन्यादीन् पञ्च मन्त्रान् जुहुयात्पञ्चविंशतिम्।। २७३
(श्रीभूशताष्टकैर्मन्त्रैः जुहुयात्पद्मबिल्वकैः)
प्रत्येकञ्च समिद्भिश्च घृताक्ताभिर्हुनेत् पृथक्।।
जुहुयान्मनसा ध्यायन् व्याहृत्यन्तं पृथक् पृथक्।
नृत्तैर्गीतैश्च वाद्यैश्च रात्रिशेषं व्यपोह्य च।। २७४
प्रभाते चैव धर्मात्मा स्नात्वा स्नानविधानतः।
अग्नौ कार्याणि सर्वाणि कुर्यात्पूर्वोक्तमार्गतः।। २७५
मुहूर्ते समनुप्राप्ते देवं देव्यौ प्रणम्य च।
निर्माल्यं संव्यपोह्यैव नूतनालङ्कृतिं चरेत्।। २७६
पाद्याद्यर्ध्यान्तमभ्यर्च्य सर्ववाद्यसमायुतम्।
सर्वालङ्कारसंयुक्तं शकुनसूक्तसमन्वितम्।। २७७
देवीभ्यां सहितं देवं नीत्वा धामप्रदक्षिणम्।
शनैश्शनैस्तथा गत्वा गर्भालयमुपाव्रजेत्।। २७८

देवेशं ब्रह्मणः स्थाने स्थापयित्वाऽथ मन्त्रवित्।
श्रीदेवीं दक्षिणे स्थाप्य उत्तरे च महीं बुधः।। २७९
पूर्वोक्तेन विधानेन कुर्यादावहनं बुधः।
तत्तन्मन्त्रं समुच्चार्य न्यसेद्बीजाक्षरं बुधः।। २८०
(ध्रुवबेरात्समादाय पूर्वोक्तविधिना ततः।)
आराध्य देवं देवेशं देवीभ्यां सहितं ततः।। २८१
हविस्सम्यङ्निवेद्यैव देवेशं प्रणमेद्बुधः।

## देव्योर्विवाहः

अथेच्छन् यजमानस्तु प्रतिष्ठान्तु समाप्य वै।। २८२
'ममेयं दुहिता श्रीश्च मही चान्या सुते' ति च।
ध्यायन् शुद्धेन मनसा बन्धुभिस्सहितः शुचिः।। २८३
आनीय देव्यौ देवञ्च स्वगृहं भक्तिसंयुतः।
राजवत्पूजयेत्तत्र मधुपर्कादिभिर्हरिम्।। २८४
अग्निशालामलङ्कृत्य विवाहोचितवर्त्मना।
आघारं विधिवत्कृत्वा वैखानसविधानतः।। २८५
विवाहोक्तक्रमेणैव कन्यादानादिकं चरेत्।
मां वा पयोनिधिं वाऽपि कर्ताऽऽत्मानं विचिन्तयेत्।। २८६
श्रीदेवीं कन्यकां दद्यात् वराय हरये ददत्।
हरिण्या दानसमये भावयेत्कश्यपं स्वयम्।। २८७
प्रादुर्भावेषु चान्येषु तत्कालपितरं स्वयम्।
सञ्चिन्त्य कन्यकादानं कुर्याद्भक्त्या यथा पिता।। २८८
राजालङ्कारमार्गेण पूजयेच्च पुनः क्रमात्।
आचार्यदक्षिणां दद्यात् तथाऽन्यांश्च पदार्थिनः।। २८९

भक्तानपि च सम्पूज्य यथाविभवविस्तरम्।
वैवाहिकं समाप्यैव प्रभूतञ्च निवेदयेत्।। २६०
ध्रुवसन्दर्शनाद्यास्तु नेष्यन्ते तु क्रिया हरेः।
विस्तरस्तु विशेषेण द्रष्टव्यस्संहितान्तरे।। २६१
ग्रामं प्रदक्षिणं नीत्वा सर्वालङ्कारसंयुतम्।
स्वस्थाने देवतागारे देवं देव्यौ च नाययेत्।। २६२
संस्थापयित्वाऽर्चयेच्च विग्रहैर्विविधैर्गुरुः।
एवं यः कुरुते भक्त्या श्रीभूम्योः पुरुषस्य वै।। २६३
पाणिग्राहोत्सवं तस्मिन् ग्रामे शान्तिर्भविष्यति।
वेदानां बृंहणञ्चैव धनधान्योपबृंहणम्।। २६४
सर्वसम्पत्समृद्धिस्स्यात्सदा तद्ग्रामवासिनाम्।
मोदते यजमानश्च इह लोके परत्र च।। २६५
तस्मात्सर्वप्रयत्नेन कुर्याद्विवाह्यमुत्तमम्।
योग।भोगादिभेदेषु व्यत्ययोऽपीष्यते क्वचित्।। २६६
ध्रुवे तु योगमार्गेण प्रतिष्ठाप्य यदाऽर्चिते।
पश्चाद्देव्यौ प्रतिष्ठाप्य भोगमार्गः प्रशस्यते।। २६७

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे पञ्चमूर्तिप्रतिष्ठाविधि परिषदालय-
लक्षणादिकथनं नाम
अष्टादशोऽध्यायः।।



## अथ एकोनविंशोऽध्यायः

### दशावतारकल्पः

अतः परं प्रवक्ष्यामि प्रादुर्भावविधिं क्रमात्।
मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः।। १
रामो रामश्च रामश्च कृष्णः कल्कीति वै दश।
प्रादुर्भावा हरेः प्रोक्ताः ऋषिभिस्तत्वदर्शिभिः।। २
आविर्भावास्तु पञ्चैव पूर्वे पुण्याः प्रकीर्तिताः।
प्रादुर्भावाः पञ्च परे प्रोक्ताः पुण्याः स्वयम्भुवा।। ३
भाविता अपि देवाद्यैः पूजया चापि तुष्टिदाः।
एको हि भगवान् देवो हरिर्नारायणः प्रभुः।। ४
तत्तद्रूपेण सन्तुष्टः सर्वानिष्टान् प्रदास्यति।

### मत्स्यकूर्मौ

मत्स्याकृतेस्तु देवस्य पृथक् स्थानं न विद्यते।। ५
नलीनके विमाने तु मध्यमे सम्प्रकल्प्यते।
तले षष्ठे तु संस्थाप्य अर्चयेदिति शासनम्।। ६
अन्येषु तु विमानेषु प्रमुखे लेख्यमाचरेत्।
कूर्मञ्चापि तथा कुर्यात्सहितौ वा प्रपूजयेत्।। ७
पद्मासनस्थौ कर्तव्यौ भिन्नाञ्जनचयावुभौ।
रक्तं सुवर्णपार्श्वञ्च मत्स्यरूपं प्रकल्पयेत्।। ८

### वराहनारसिंहवामनाः

वराहादित्रयाणान्तु पृथक् स्थानं विधीयते।
बहुभूमिविमानेषु कल्पयेदूर्ध्वमध्यमे।। ९

दंष्ट्रायां दक्षिणायान्तु धृत्वोर्वीं मोहनाकृतिम्।
स्थितं वराहवदनं चतुर्बाहुसमायुतम्।। १०
शङ्खचक्रधरं देवं भिन्नाञ्जनचयप्रभम्।
दंष्ट्रे स्फटिकसङ्काशे कुर्याच्छुभसमायते।। ११
मेदिनी श्यामला प्रोक्ता पद्मपत्रनिभाम्बरा।
न्यस्ताञ्जलिपुटा कार्या अङ्के वा कोलरूपिणः।। १२
उभाभ्यामपि बाहुभ्यां भर्ता कार्या धृता मही।
पुण्यधर्मौ मुनी तस्य पूजकौ परिकीर्तितौ।। १३
पुण्यः पद्मपलाशाभः धर्मः स्फटिकसन्निभः।
रक्तचाषाम्बरौ तौ तु पूजायां परिकल्पयेत्।। १४
पुण्यो दक्षिणभागस्थः धर्मः सव्यं समाश्रितः।
ब्रह्माणीं पिङ्गलाभाञ्च द्वारवामेऽथ दक्षिणे।। १५
सुखासीने तथा कुर्यान्मुनिभिः परिवारिते।
स्वाहा स्वस्ति स्वधा मेधा कान्तिर्लज्जाऽऽहुतिः श्रुतिः।। १६
पुष्टिर्मतिः धृतिः कीर्तिः श्रद्धा श्रीरिन्दुका सुधा।
एताश्च परितः कुर्यादालेख्यस्थास्सुराङ्गनाः।। १७
तदधस्तान्महाविष्णुमादिमूर्तिमनामयम्।
तस्याधस्ताच्चतुर्मूर्तीः स्थाप्य सम्यक् समर्चयेत्।। १८
तथोपरितले देवं शयानं सम्यगाचरेत्।
पञ्चभूमिविमानेषु स्थापनन्त्वेवमाचरेत्।। १९

.... .... .... .... ....

.... .... .... .... ....

## नारसिंहः

सटालसिंहवक्त्रञ्च चतुर्बाहुं तलायुधम्।

अङ्गरागसमायुक्तं शङ्खचक्रधरं परम्।
शङ्खचक्रवियुक्तं वा द्विबाहुं नृहरिं चरेत्।। २१
बाहवस्सायुधाश्चाष्टौ यथायोगं प्रकीर्तिताः।
निरायुधं नरहरिं कुर्युस्सर्वेऽभयप्रदम्।। २२
राजा निरायुधं बिम्बं नैव कुर्यात्कदाचन।
अनन्तोत्सङ्गशयनं सप्तभिः फणमण्डलैः।। २३
समाच्छन्नशिरोदेशं वीशबाह्वोः स्थितन्तु वा।
अष्टबाहुं चतुर्बाहुं तथा षोडशबाहुकम्।। २४
असङ्ख्याकभुजञ्चापि सायुधं कपिलाक्षकम्।
मुक्ताकुन्देन्दुधवलं रक्तवस्त्रविभूषितम्।। २५
सर्वशत्रुहरञ्चैव धाम्नि चोर्ध्वतले स्थितम्।
स्थापयेदर्चयेद्देवं नरकेसरिणं हरिम्।। २६
तस्य दक्षिणपार्श्वे तु स्थापयेच्च पितामहम्।
वामपार्श्वे हितं रुद्रं स्थापयेद्वृषभध्वजम्।। २७
किष्किन्धसुन्दरौ चैव
चामरग्राहिणौ मतौ।
किष्किन्धोऽञ्जनवर्गाभः
सुन्दरः पद्मवर्णभाक्।। २८
किष्किन्धो दक्षिणं पाश्वं सुन्दरो वाममाश्रितः।
यज्ञतीर्थौ सुखासीनौ पूजकौ परिकीर्तितौ।। २९
यज्ञः कनकवर्णाभः श्यामलस्तीर्थ उच्यते।
द्वारपार्श्वे च संयोज्यौ स्थितावेतौ द्विजोत्तमौ।। ३०
मणिकं पुष्कलञ्चैव द्वारपार्श्वे समर्चयेत्।
भूतीशः शैषिकस्तौ द्वौ शैषिकस्थानमाश्रितौ।। ३१

## वामनः

इन्द्रानुजन्त्वदितिजं काश्यपं ब्रह्मचारिणम्।
आषाढाजिनसंयुक्तं शिखासूत्रसमन्वितम्।। ३२
पवित्रशाटीसंयुक्तं सच्छत्रं दण्डसंयुतम्।
वर्णिनं वामनं कुर्याद्द्विभुजं सोमवर्चसम्।। ३३
कनकः शङ्खिलस्तस्य पूजकौ परिकीर्तितौ।
कनकः कनकाभश्च शङ्खिलश्शङ्खसन्निभः।। ३४
कनको दक्षिणं पार्श्वं शङ्खिलो वाममाश्रितः।
द्वारपालौ तु संयोज्यौ स्थितावेतौ खगेश्वरौ।। ३५

## त्रिविक्रमः

वामनो ववृधे श्रीमान् त्रिविक्रममितावनिः।
दक्षिणं सुस्थितं पादं वाममुत्तानकं चरेत्।। ३६
तस्य विक्रममाणस्य चन्द्रादित्यौ स्तनान्तरे।
ततो विक्रममाणस्य सक्थिदेशे स्थितौ पुनः।। ३७
ततो विक्रममाणस्य जानुगाविन्दुभास्करौ।
सा विभूतिर्जगद्भर्तुः पादोद्धरणसंस्थितौ।। ३८
त्रिधा तु संस्थितिर्भिन्ना पादन्यासप्रभेदतः।
जान्वन्तोद्धृतपादेन नाभ्यन्तोद्धृतकेन च।। ३९
ललाटान्तोद्धृतेनाथ तृतीयेयं विशिष्यते।
वामहस्तं समुद्धृत्य पादपार्श्वे तु सूचयेत्।। ४०
ब्रह्माणं पादपार्श्वे तु आकाशस्थं प्रकल्पयेत्।
उभाभ्याञ्चैव हस्ताभ्यां पादप्रक्षालनोद्यतम्।। ४१

क्षणेन स्रुततोयाञ्च गङ्गां देवीं सुरूपिणीम्।
तां वहन्तं वेगयुतां शङ्करञ्चैव कारयेत्।। ४२
एवमेव प्रकारेण कारयेत्परितः प्रभोः।
वामपादस्य पार्श्वे तु गङ्गां कुर्याद्विचक्षणः।। ४३
साचीकृतार्धवपुषा गङ्गां कुर्याद्विचक्षणः।
गङ्गा स्यात् श्वेतवर्णा तु सर्वाभरणभूषिता।। ४४
बाहुदक्षिणतश्शक्रं वनमालासमन्वितम्।
चन्द्रं शशधरञ्चापि कुर्याद्भूषणभूषितम्।। ४५
देवेन्द्रञ्चैव कृत्वा तु सर्वाभरणभूषितम्।
बाहौ वामे तथेन्द्रस्य चामरे परिकल्पयेत्।। ४६
कुर्यात् बाहुसमस्थाने नमन्तं देवमादरात्।
दक्षिणे स्तनपार्श्वे तु चन्द्रं सम्यक् समाचरेत्।। ४७
तथैव वामपार्श्वे तु भास्करं भित्तिमाश्रितम्।
जानुस्थानगतं कुर्यात्पृष्ठे मण्डलसंयुतम्।। ४८
देवस्य दक्षिणे पार्श्वे वामनं बलिसंयुतम्।
महाबलिञ्च कुर्वीत सर्वाभरणभूषितम्।। ४९
उभाभ्याञ्चैव हस्ताभ्यां दधतं सोदकं घटम्।
वामनं कारयेत्पञ्चतालमानेन वामनम्।। ५०
सोत्तरीयपरीधानं कृष्णाजिनधरं विभुम्।
छत्रदण्डसमायुक्तं याचमानमुखाम्बुजम्।। ५१
देवस्य वामभागे तु भूमिस्थं गरुडं चरेत्।
शुक्रमुद्दिश्य हस्तेन घ्नन्तं कोपसमन्वितम्।
देवस्य मूर्धभागे तु जाम्बवन्तं प्रकल्पयेत्।। ५२

भेरीसन्ताडने व्यग्रं जयार्थं मधुघातिनः।
एवमेतान् कल्पयित्वा शेषं युक्त्या समाचरेत्।। ५३
नवस्थानेषु विधिना क्रममाणञ्च कारयेत्।
मोक्षार्थी श्वेतवर्णञ्च पीतवर्णन्तु पुत्रधीः।। ५४
धनधान्यसमृद्ध्यर्थी श्यामं कुर्यात् त्रिविक्रमम्।
वीर्यार्थी विजयार्थी च रुक्मवर्णं समाचरेत्।। ५५
कृतत्रेताद्वापराश्च कलिश्चेति युगाः क्रमात्।
श्वेतवर्णं पीतवर्णं श्याममञ्जनसन्निभम्।। ५६
यथाक्रमंप्रकुर्याद्धि युगेषु च विशेषतः।
ब्राह्मणो यजमानश्चेत् श्वेतवर्णः प्रशस्यते।। ५७
क्षत्रियश्चेद्रक्तवर्णः वैश्यश्चेत्पीत आदृतः।
शूद्रश्चेदञ्जनो वर्णः सर्वेषां श्याम एव वा।। ५८
एवं वर्णं यथावाञ्छं कारयेत्तु त्रिविक्रमम्।
पुराकल्पोक्तमानेन मानोन्मानादि चाचरेत्।
सर्वलक्षणसंयुक्तं कारयेच्छिल्पिना शुभम्।। ५९

## वामनप्रतिष्ठा

अत ऊर्ध्वं प्रवक्ष्यामि स्थापनाविधिविस्तरम्।
अङ्कुरारोपणादीनि स्नपनान्तं यथाक्रमम्।। ६०
पूर्वोक्तेन विधानेन कृत्वा सर्वाणि वै गुरुः।
सभ्याद्दक्षिणपार्श्वे तु पौण्डरीकञ्च साधयेत्।। ६१
आघारं विधिवत्कृत्वा अग्निमानम्य चादरात्।
इध्मप्रक्षेपणं कृत्वा परिस्तीर्य च पावकम्।। ६२
'यो वा त्रिमूर्ति' मावृत्य शतमष्टौ हुनेत्ततः।
जुहुयात् पौरुषं सूक्तं विष्णुसूक्तमतः परम्।। ६३

एवं विशिष्य हुत्वा तु शिष्टं पूर्ववदाचरेत्।

## वामनार्चनाक्रमः

अत ऊर्ध्वं प्रवक्ष्यामि अर्चनाक्रममुत्तमम्।। ६४
पूर्वोक्तेन विधानेन सम्भारान् सम्यगाहरेत्।
प्रदक्षिणादौ नो भेदः पूर्वोक्तस्तत्र वै विधिः।। ६५
मूर्तिभेदो विशेषोऽत्र शृणुध्वं मुनिसत्तमाः।
'विष्णुं त्रिविक्रमञ्चेति त्रिलोकेशमतः परम्।। ६६
त्रिदशाधिपतिञ्चेति वैकुण्ठमि' ति चार्चयेत्।
'वामनं वरदञ्चेति काश्यपञ्चादितिप्रियम्'।। ६७
'बलिं वैरोचनिञ्चेति महावीर्यं महामतिम्'।
वैरभोजन मित्युक्त्वा पञ्चभिर्नामभिर्बलिम्।। ६८
'गरुडं पक्षिराजञ्च सुपर्णञ्च खगाधिपम्'।
'शुक्रञ्च भार्गवञ्चेति काव्यञ्च परिसर्पिणम्'।। ६९
एवं देवान् समभ्यर्चेच्चतुर्मूर्तिविधानतः।
देवदेवं विशेषेण सप्तविंशतिविग्रहैः।। ७०
अर्चयित्वा यथान्याय्य बलिमुत्थापयेत्क्रमात्।
त्रिविक्रमे विशेषोऽयं शेषं विष्णोरिवाचरेत्।। ७१

## वामनविमानम्

ग्रामे वा नगरे वाऽपि पत्तने खर्वटेऽपि वा।
नदीतीराश्रये वापि वेलायां सागरस्य वा।। ७२
शैलाग्रे शैलपार्श्वे वा वनपार्श्वे वनान्तरे।
स्थानं यत्रैव विस्तीर्णं तत्रापि च मनोरमे।। ७३

कारयेत्तु विधानेन विमानं लक्षणान्वितम्।
नन्दीविशालमष्टाङ्गं सोमच्छन्दं चतुस्स्फुटम्।। ७४
बृहद्वृत्तविमानं वा दीर्घशालमथापि वा।
विमानेष्वेषु चैकस्मिन् यजमनेच्छया गुरुः।। ७५
शिल्पशास्त्रोक्तविधिना कारयित्वा गृहं हरेः।
रम्यं मनोहरं बिम्बं देवदेवस्य कारयेत्।। ७६
कुर्याद्विमानं प्राग्द्वारं प्रत्यग्द्वारमथापि वा।
पूर्वद्वारन्तु मोक्षार्थी तथाऽन्यं भोगकामुकः।। ७७
अध्यर्धद्वारोन्नता स्यादुत्तमा प्रतिमा तथा।
पादाधिकां वा कुर्वीत द्वारमानामथापि वा।
बिम्बं सलक्षणं कुर्याद्दशतालोक्तमानतः।। ७८

## परशुरामः

जामदग्न्यं जटोपेतं धनुःपरशुपाणिनम्।
अक्षमालाधरं रक्तवल्कलावासमर्चयेत्।
शिष्यावपि समायोज्यौ पावनो जवनो मुनी।।

## राघवरामः

अत ऊर्ध्वं राघवस्य रामस्य स्थापनाविधौ।
तथार्चनायां वक्ष्यामि विशेषं शृणुतर्षयः।। ७९
सकलैर्विदितो ह्येष प्रादुर्भावो जगत्पतेः।
विजयार्थी प्रजार्थी वा मोक्षार्थी राममर्चयेत्।। ८०
ग्रामे वा नगरे वाऽथ पत्तने वाऽथ खर्वटे।

नद्योर्मध्ये तथा तीरे वेलायां सागरस्य वा।
स्थानेष्वेतेषु दैवेषु प्रतिष्ठाप्य समर्चयेत्।। ८२
कर्षणं विधिवत्कृत्वा खननं पूरणादिकम्।
आद्येष्टकादिकरणं पूर्वोक्तविधिना चरेत्।। ८३
कुर्यादेकतलं वा स्यादेकगोपुरसंयुतम्।
विमानं गोपुराद्यैस्तु विधिवन्निर्मितं हरेः।। ८४
विमानं हस्तिपृष्ठं वा प्रशस्तं गोपुराकृति।
निर्माय श्रद्धया दिव्यमालयं शुभलक्षणम्।। ८५
विधिना शूलमादाय शूलस्थापनमाचरेत्।
दशतालेन मानेन बेरन्यासः प्रशस्यते।। ८६
मृत्क्रियां रज्जुबन्धञ्च घटशर्करिकाक्रियाम्।
पटाच्छादनसंस्कारं वर्णसंस्कारमेव च।। ८७

## लक्षणम्

आचरेत् द्विभुजं देवं धनुर्हस्तं त्रिभिर्नतम्।
श्यामवर्णं मकुटिनं सर्वाभरणभूषितम्।। ८८
श्रीवत्सवक्षसं कुर्यात्पीताम्बरसुशोभितम्।
रामः कमलपत्राक्षसर्वसत्वमनोहरः।। ८९
वामभागे च सौमित्रिं दक्षिणे जनकात्मजाम्।
रामबाहुसमौ तत्र कारयेद्विधिकोविदः।। ९०
हेमवर्णां पद्मनेत्रां शुकपिञ्छनिभाम्बराम्।
सीतां पद्मकरां कुर्यात्सौमित्रिञ्च धनुर्धरम्।। ९१
हनुनाऽञ्जनवर्णेन रक्तवर्णमुखेन च।
श्वेतवस्त्रेण चैकेन अष्टतालविधौ कृतम्।
हनूमन्तं महाभक्तं कारयेत्पुरतः स्थितम्।। ९२

एष सायुधकल्पस्स्यादन्यश्चास्ति निरायुधः।
सिंहासने सहासीनं सीतया रघुनन्दनम्।। ९३
श्यामलाङ्गं मकुटिनं सर्वाभरणभूषितम्।
श्रीवत्सवक्षसं कुर्याद्दशतालेन मानतः।। ९४
वामपार्श्वे स्थितं कुर्यात्सौमित्रिञ्चानिलात्मजम्।
'रामं दाशरथिं वीरं काकुत्स्थ' मिति नामभिः।। ९५
आवहनार्चनादीनि राघवस्य प्रकल्पयेत्।
'सीतामयोनिजां लक्ष्मीं वैदेही' मिति जानकीम्।। ९६
'रामानुजञ्च सौमित्रिं लक्ष्मणं लक्ष्मिवर्धनम्'।
'कपिराजं हनूमन्तं शब्दराशिं महामतिम्'।। ९७
इत्येवं मूर्तिभिः कुर्यादावाहनमथार्चनम्।
कौतुकं कारयेद्विद्वान् सौवर्णं राजतन्तु वा।। ९८
ताम्रजं दारवं वापि षण्मानपरिकर्मितम्।
ध्रुवबेरं त्रिधा कृत्वा एकभागं व्यपोह्य च।। ९९
भागद्वयं त्रिधा कृत्वा समस्तञ्चोत्तमं भवेत्।
भागद्वयं मध्यमं स्यात् एकं भागमथाधमम्।। १००
एकैकन्तु त्रिधा कृत्वा पीठञ्च त्रिविधं भवेत्।

## राघवरामप्रतिष्ठा

एवं कृत्वा यथाशास्त्रं श्रद्धाभक्तिसमन्वितः।। १०१
शुभायनर्तुमासर्क्षतिथिवारान्विते दिने।
देशकालौ समालोच्य स्थापनारम्भमाचरेत्।। १०२
पूर्वोक्तगुणसम्पन्नानुक्तदोषविवर्जितान्।

आहूयात्रैकमाचार्यं वृत्वा तेनोक्तमाचरेत्।
प्रतिष्ठादिवसात्पूर्वं सप्तमे चाङ्कुरार्पणम्।। १०४

अङ्कुरारोपणादूर्ध्वं कारयेद्द्विजभोजनम्।
कृत्वाऽक्षिमोचनं पश्चादधिवासांश्च कारयेत्।। १०५

गोमूत्रे गोमये क्षीरे दध्नि चैव घृते तथा।
कुशोदे पृथगेकैकरात्रिमात्राधिवासनम्।। २०६

मृष्टसिक्तोपलेपाद्यैः शोधयेद्देवमन्दिरम्।
धूपयित्वा तथा धूपैः आलयं समुपाव्रजेत्।। १०७

आलयादुत्तरे पार्श्वे भूमियज्ञं यजेत्क्रमात्।
पर्यग्निं कारयित्वा तु पञ्चगव्यैस्समुक्ष्य च।। १०८

पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।
सप्तभिः कलशैः देवं स्नापयेद्विधिना क्रमात्।। १०९

वस्त्रोत्तरीयाभरणैरलङ्कृत्य यथोचितम्।
पाद्यमाचमनीयञ्च पुष्पं गन्धं तथैव च।। ११०

धूपं दीपं तथा चान्नं हविर्दद्याद्यथार्हकम्।
ताम्बूलञ्च निवेद्यैव नमस्कुर्यात् पुनः पुनः।। १११

शिबिकां रथरङ्गं वा वाहनाद्यं गजादिकम्।
आदाय देवमारोप्य नयेद् ग्रामं प्रदक्षिणम्।। ११२

शङ्खदुन्दुभिनिर्घोषैः पटहध्वनिभिस्तथा।
वीणावेणुमृदङ्गाद्यैर्ब्रह्मघोषैश्च संयुतम्।
प्रदक्षिणं सुखं नीत्वा ग्राममालयमेव वा।। ११३

शय्यामण्डपमध्ये तु धान्यराशिं प्रपूर्य च।
तदूर्ध्वे च स्तरेत्तल्पान् पञ्च पञ्चाण्डजादिकान्।। ११४

वासांस्युक्ताण्डजादीनामलाभे तत्र संस्तरेत्।
आस्तीर्य तल्पान् प्रागग्रान् अलङ्कुर्याच्च सर्वतः।
पुरिञ्चात्र (?) समास्तीर्य प्रोक्षणैः प्रोक्षणं चरेत्।। ११५
पुण्याहं वाचयित्वा तु रक्षाबन्धनमाचरेत्।
ततः पुरिं शोधयित्वा 'यद्वैष्णव' मिति ब्रुवन्।। ११६
शाययेच्छयने देवं देवीभ्यां सह मन्त्रवित्।
कुम्भञ्च सन्न्यसेद्देवपादपार्श्वे विचक्षणः।। ११७
वस्त्रेण च्छादयेत्पश्चाद्देवं कुम्भसमायुतम्।
यजमानोऽथ तत्काले ऋत्विग्भिस्सहितं गुरुम्।। ११८
पूजयित्वा विधानेन तत्तत्कार्ये नियोजयेत्।
प्राच्यामाहवनीयन्तु अन्वाहार्यन्तु दक्षिणे।। ११९
प्रतीच्यां गार्हपत्यन्तु आवसत्थ्यं तथोत्तरे।
संसाध्य परितो धाम दिशाहोमांश्च कारयेत्।। १२०
आघारं विधिवत्कृत्वा मथितेनैव वह्निना।
आहवनीये जुहुया 'दतो देवा' दि वैष्णवम्।। १२१
दक्षिणाग्नौ तु जुहुयात्पौरुषं सूक्तमेव च।
गार्हपत्ये तथा विद्वान् यद्देवाद्याहुतीर्यजेत्।। १२२
विष्णुसूक्तसमायुक्तं मूर्तिहोमं तथोत्तरे।
हौत्रं तत्र प्रशंस्यैव मूर्त्यावाहनमाचरेत्।। १२३
आवाहनक्रमेणैव चतुर्थ्यन्तं प्रयुज्य च।
जुष्टाकारं ततः कुर्यात्तत्क्रमेणाहुतीर्यजेत्।। १२४
राघवस्य प्रधानग्नावन्वाहार्ये यजेदिदम्।
'स्वौजसा सर्व' मन्त्रेण हुनेदष्टोत्तरं शतम्।। १२५

चतुर्दिक्षु विधानेन वेदानध्यापयेत्क्रमात्।
नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं व्यपोह्य च।। १२६
पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।। १२७
मुहूर्ते समनुप्राप्ते उद्धृत्य च पुरिं ततः।
कुम्भं बिम्बसमायुक्तं नीत्वा धामप्रदक्षिणम्।। १२८
प्रविशेदालयं पश्चात् बिम्बस्थापनमाचरेत्।
कुम्भस्थां शक्तिमादाय तत्तद्बिम्बे न्यसेद्बुधः।। १२९
बीजाक्षरं सुसंन्यस्येत्पश्चात्पुण्याहमाचरेत्।
उपचारैस्समभ्यर्च्य सप्तविंशतिभिस्ततः।। १३०
पायसादीन् निवेद्यैव दक्षिणादानमाचरेत्।
देवदेवं नमस्कुर्याद्भक्तिश्रद्धासमन्वितः।। १३१
उत्सवञ्चोत्सवान्ते च स्नपनं कारयेत्तथा।
स्वप्रधाने समुद्दिष्टो विधिरेष मयाऽनघाः।। १३२
अप्रधानं यदि भवेद्दिशाहोमं विना चरेत्।
रत्नन्यासस्तथा नेष्टः उत्सवोऽपि न सम्मतः।। १३३
एवं यः कुरुते भक्त्या रामं दाशरथिं प्रति।
स भुक्त्वा चैहिकान् भोगान् ततो मोक्षमवाप्नुयात्।।१३४

## कृष्णः

अतः परं प्रवक्ष्यामि कृष्णस्य स्थापनाविधिम्।
प्रादुर्भावेषूत्तमस्य पुरुषस्य जगत्पतेः।। १३५
स्वेच्छया भगवानीशः धर्मग्लानिर्यदा भवेत्।
तदा धर्मस्य रक्षार्थं संहाराय दुरात्मनाम्।। १३६

अवतारं करोतीशः रामकृष्णादिसंज्ञया।
प्रादुर्भविषूत्तमौ तौ शक्तिमन्तौ विशेषतः।। १३७

रामकृष्णौ ततश्शक्तिं
तयोस्सम्पूज्य मानवाः।
इह लोके सुखं भुक्त्वा
विष्णोस्सायुज्यमाप्नुयुः।। १३८

कृष्णस्यालयनिर्माणप्रतिमालक्षणादिकम्।
प्रतिष्ठां स्नपनञ्चैव पूजनाद्यं क्रमेण वै।। १३९

वक्ष्यामि विस्तरेणैव शृणुध्वमृषिसत्तमाः।
ग्राममध्ये च पूर्वे च दक्षिणे पश्चिमे तथा।। १४०

कारयेदुत्तरे चैव विदिशास्वपि मन्दिरम्।
आरामे वा नदीतीरे पर्वते वा वनाश्रये।। १४१

समुद्रवेलादेशे वा अन्यस्मिन् वा मनोरमे।
सरस्तटाकतीरे वा नदीसागरसङ्गमे।। १४२

नगरे पत्तने वापि खर्वटे कुटिके तथा।
भूमिं परीक्ष्य पूर्वं वै शुचौ देशे मनोरमे।। १४३

कर्षणं विधिवत्कुर्याद्यावत्प्राकारविस्तरम्।
कृष्णस्य मन्दिरं कुर्यात्संस्कारयुतमुक्तवत्।। १४४

कुम्भाकारं त्रिकूटं वा हस्तिपृष्ठमथापि वा।
नन्द्यावर्तं विमानं वा कृष्णस्योत्तममिष्यते।। १४५

अथ वा मण्डपं वापि कूटं वा राजधानिकम् (?)।
कुर्यादेकतलं गेहमेकप्राकारसंयुतम्।। १४६

पीठगोपुरसंयुक्तं यानशैषिकसंयुतम्।
एवं कृत्वा यथान्यायं शूलस्थापनमाचरेत्।। १४७

...र्ववद्दारु म...गृह्य शूलं कृत्वा विचक्षणः।

## कृष्णलक्षणम्

दशतालोक्तविधिना मानोन्मानादि लक्षयन्।। १४८
रत्नन्यासं ततः कृत्वा शूलस्थापनमाचरेत्।
रज्जुबन्धं मृत्क्रियाञ्च योजयेद्धटशर्कराः।। १४९
एवं कृत्वा यथान्यायं पटाच्छादनमाचरेत्।
पादादुष्णीषपर्यन्तमेवं मान उदाहृतः।। १५०
द्विभुजं त्रिणतं कुर्याद्देवं सुन्दरविग्रहम्।
सस्यश्यामनिभं प्रोक्तं कृष्णरूपं विशेषतः।। १५१
रक्तवस्त्रधरं कुर्यात्कृष्णं भूषणभूषितम्।
उष्णीषन्तु ततः कुर्यात्पार्श्वे पुरिम (?) संयुतम्।। १५२
सहस्रकुन्तलैर्युक्तं शिरस्सम्यक् समाचरेत्।
दक्षिणे कर्णनालन्तु रत्नकुण्डलसंयुतम्।। १५३
पञ्चरत्नसमायुक्तमन्यत्र परनालिकम् (?)।
वामञ्च कर्णनालञ्च शङ्खपत्रेण योजयेत्।। १५४
पद्मपत्रेक्षणं राजत्पीनोष्ठपुटसंयुतम्।
हारं श्रीच्छन्दमेवं स्यान्मुक्तामालामथोपरि।। १५५
बाहुबन्धं ततः कुर्यात्किंपुरिं मुखमध्यमे।
अधस्तादुलिकाञ्चैव योजयेद्वामदक्षिणे।। १५६
प्रकोष्ठे च तथा कुर्यात्कटकत्रितयं बुधः।
हस्ताङ्गुलीयरत्नानि युक्तियुक्तं प्रयोजयेत्।। १५७
उत्तरीयं तथा विद्वान् वनमालाञ्च कारयेत्।
छन्नवीरसमायुक्तमुरोबन्धञ्च योजयेत्।। १५८

कटिबन्धं तथा कुर्यात्सर्वरत्नसमन्वितम्।
नूपुरं त्रिमुखं कुर्यान्मुखरत्नसमन्वितम्।। १५९
अथ दक्षिणहस्तन्तु क्रीडायष्टिसमन्वितम्।
वामेन कोर्परेणात्र गरुडं लम्बयेत्क्रमात् (?)।। १६०
अहीनयौवनञ्चैव नातिबालञ्च कारयेत्।
क्रीडारससमायुक्तं दिव्यरूपञ्च कारयेत्।। १६१
पादाङ्गुलिसमासक्तपादबन्धञ्च कारयेत्।
तस्य दक्षिणपार्श्वे तु रुक्मिणीं कारयेत्क्रमात्।। १६२
पक्ववाकुलवर्णाञ्च शुकवर्णाम्बरं तथा।
सर्वाभरणसंयुक्तां नवतालेन कारयेत्।। १६३
आदाय दक्षिणे हस्ते औत्पलं पुष्पमेव च।
प्रसार्य वामहस्तन्तु किञ्चिद्देवं निरीक्ष्य च।। १६४
सत्यभामाञ्च वामे तु रक्तवस्त्रां स्वलङ्कृताम्।
श्यामवर्णां तथा कुर्यात्पुष्पमालाधरां करे।। १६५
सर्वाभरणसंयुक्तां श्रीमन्मकुटबन्धनाम्।
वामपार्श्वे गरुत्मन्तं गोपालकमथापि वा।। १६६
गरुडं पूर्ववत्कुर्याद्गोपालं गोपवेषकम्।
श्वेताम्बरधरं कुर्याद्रक्तवस्त्रधरं तथा।। १६७
वंशहस्तञ्च गोपालं किञ्चिद्देवं निरीक्ष्य च।
भागाङ्गुलाधिकं कुर्यादष्टतालेन योजयेत्।। १६८
श्रीदामानं तथा कुर्यान्निरमञ्जलिसंयुतम्।
कङ्कुश्यामनिभं कुर्याच्छ्वेताम्बरधरं तथा।। १६९
षण्मात्राधिकमानेन अष्टतालेन योजयेत्।
निर्माल्यहरिणञ्चोक्तविधिना कारयेद्बुधः।। १७०

सुन्दरं वाहनं कुर्याद्गरुडांशं तथैव च।
एवं कृत्वा यथान्यायमर्चयेन्मूर्तिभेदतः।। १७१

## कृष्णमूर्तिक्रमः

'पुण्यं नारायणं कृष्णं वटपत्रसुशायिनम्।
त्रिदशाधिप' मित्युक्त्वा अर्चयेद्विधिपूर्वकम्।। १७२
'रुक्मिणीं सुन्दरीञ्चैव पवित्रीं कृष्णवल्लभाम्'।
'सत्यरूपां सतीञ्चेति सन्नतीञ्च क्षमा' मिति।। १७३
गरुडं पूर्ववच्चैव मूर्तिभेदैः समर्चयेत्।
'गोपालं सर्वनाथञ्च तथा कृष्णसखं तथा।। १७४
सर्वाध्यक्षं' तथा चैव गोपालं सम्यगर्चयेत्।
'श्रीदामानं पुण्यरूपं पुण्यात्मकमिति क्रमात्।। १७५
तथा देवसखञ्चे' ति निर्माल्याहारिणं तथा।
'सुन्दरञ्च विहङ्गञ्च तुङ्गं वै तार्क्ष्य' मेव च।
वाहनं मूर्तिमन्त्रैस्तु कृष्णप्रियमथार्चयेत्।। १७६

## स्थापने विशेषः

नवधा क्रममालक्ष्य इदं स्यादधमोत्तमम्।
पूर्वोक्तेनैव मार्गेण अष्टदिक्षु तथाऽर्चयेत्।। १७७
मूलबिम्बस्य चायामं त्रिधा कृत्वा विचक्षणः।
एकभागं व्यपोह्यैव द्विभागं सम्प्रगृह्य च।। १७८
तद्द्विभागं त्रिधाकृत्य समस्तञ्चोत्तमं भवेत्।
द्विभागं मध्यमं प्रोक्तमेकभागं तथाऽधमम्।। १७९
एकैकं त्रिविधं कृत्वा नवधा भेद उच्यते।
कर्मार्चाबिम्बमुद्दिष्टं यथाशक्ति विधानतः।। १८०

सौवर्णं राजतं वापि ताम्रजं वापि कारयेत्।
ध्रुवकौतुकयोस्सर्वसारूप्यञ्चोत्तमं भवेत्।। १८१
पीठं कृत्वा विधानेन रत्नन्यासादिकं चरेत्।

## प्रतिष्ठाविधिः

प्रतिष्ठादिवसात्पूर्वं सप्तमे चाक्षिमोचनम्।। १८२
गोमूत्रे गोमये क्षीरे दध्नि सर्पिषि वै क्रमात्।
कुशोदे चैकैकरात्रमधिवासं पृथक् चरेत्।। १८३
एवं कर्तुमशक्तश्चेत् पञ्चगव्येऽथवा तथा।
एकाहं वा बिम्बशुद्धिनिमित्तमधिवासयेत्।। १८४
तस्मादुद्धृत्य बिम्बानि आम्लेन परिशोधयेत्।
'भूरानिलय' इत्युक्त्वा गन्धतोयेन वै पुनः।। १८५
प्रोक्ष्य प्लोतेन सम्मृज्यालङ्कुर्यात् वस्त्रभूषणैः।
शयने शाययेद्देवं वस्त्रेणाच्छादनं चरेत्।। १८६
कुम्भपूजादिकं कर्म पूर्ववत्कारयेद्बुधः।
अनुक्तमत्र यत्किञ्चिच्छयनादिषु कर्मसु।। १८७
कृष्णनामात्र संयोज्य शेषं पूर्ववदाचरेत्।
स्वप्रधानमशक्तश्चेन्मन्दिरे द्वारपार्श्वयोः।। १८८
प्रथमाऽऽवरणे वापि स्थापयेत्तु विचक्षणः।
ध्रुवबेरप्रतिष्ठा च रत्नन्यासश्च नो तदा।। १८९

## कालीयमर्दनकृष्णः

कालीयस्य फणाग्रे तु सङ्घट्टनपरं चरेत्।
कुर्याद्बालं प्रनृत्यन्तं विस्मयोत्फुल्ललोचनम्।। १९०

पताकाहस्तमेकन्तु धृताहिञ्चैव वामकम्।
प्रभामण्डलसम्बद्धपादपद्मविभूषितम्।। १६१
तत्पार्श्वे नागपत्न्यश्च सर्वाभरणभूषिताः।
कृताञ्जलिपुटाः कार्या देवमानम्य चादरात्।। १६२
एवं कृष्णं प्रकुर्वीत कालीयशिरसि स्थितम्।
अनन्तलीलाललितकृष्णरूपाणि कारयेत्।। १६३

## नवनीतनटः

नवनीतनटञ्चापि कृष्णमेवं प्रकल्पयेत्।
पद्मपीठोपरि गतमाकुञ्च्यैकं पदं विभुम्।। १६४
सन्धार्य दक्षिणे हस्ते नवनीतं तथेतरत्।
प्रसार्य हस्तं नृत्यन्तं हर्षोत्फुल्लविलोचनम्।। १६५
कृष्णरूपाण्यसङ्ख्यानि सङ्ख्यातुं नैव शक्यते।
बहुना किमिहोक्तेन रूपमिष्टं शुभं चरेत्।। १६६
पूर्ववत् स्थापयित्वा तु अर्चयेत्तु विधानतः।
यद्यद्रूपधरं ध्यात्वा पूजयेद्भक्तिमान्नरः।। १६७
तत्तद्रूपधरो देवः सर्वकामान् प्रयच्छति।
अर्चनस्नपनादीनि विधिनोक्तेन कारयेत्।। १६८
अथ चेदेकबेरं स्यात् ध्रुवहीनं विशेषतः।
तत्तन्मूर्तिं समुच्चार्य पीठस्य परितः क्रमात्।। १६९
पुष्पं दद्यात् चतुर्दिक्षु देव्योर्देवस्य चैव तु।
पुष्पन्यासं विना कुर्यात्पूजां पाद्यादिविग्रहैः।। २००
तत्तत्प्रधानमन्त्रान्ते मूर्तिमन्त्रांस्तु योजयेत्।
अष्टोपचारैरभ्यर्च्य कौतुकन्तु विशेषतः।। २०१

(पीठदेवांस्तथाऽभ्यर्चेत् सप्तविंशतिविग्रहैः।
षोडशैर्विग्रहैर्वापि तं तं देवमनुस्मरन्) ? ।। २०२

## मानुषवासुदेवः

अत ऊर्ध्वं मानुषस्य वासुदेवस्य वै विधिम्।
प्रवक्ष्यामि समासेन शृणुध्वमृषिसत्तमाः।। २०३
मनुष्यवपुषं देवं द्विभुजं शङ्खचक्रिणम्।
श्यामलाङ्गञ्च तं कुर्यात्सर्वाभरणसंयुतम्।। २०४
दक्षिणे रुक्मिणीं देवीं स्वर्णाभाञ्च किरीटिनीम्।
रक्ताम्बरधराञ्चैव सर्वाभरणभूषिताम्।। २०५
सव्ये पद्मधरां हस्ते प्रसार्येतरमास्थिताम्।
दक्षिणे बलभद्रन्तु बलिनं मुसलायुधम्।। २०६
सर्वाभरणसंयुक्तं श्वेतं नीलाम्बरान्वितम्।
तस्य दक्षिणपार्श्वे तु प्रद्युम्नं रक्तवर्णकम्।। २०७
पीतकौशेयवसनं किरीटाद्यैश्च भूषितम्।
एकं दीर्घक्षुरकरं वामं कट्यवलम्बितम्।। २०८
अनिरुद्धं वामपार्श्वे प्रवालाग्निसमप्रभम्।
पुष्पाम्बरधरं कुर्यात् खड्गखेटकधारिणम्।। २०९
पार्श्वे साम्बं तथा कुर्यान्नीलाम्बुदसमप्रभम्।
श्वेताम्बरं तथा कुर्याद्दंडादानकरं पुनः।। २१०
ब्रह्माणं दक्षिणे कुर्याच्चतुर्भुजसमन्वितम्।
पूर्वोक्तेन प्रकारेण दशतालप्रमाणतः।। २११
गरुडञ्चोत्तरे कुर्यात्पूर्वोक्तनवतालतः।
तद्रूपं कौतुकं कुर्यादाश्रित्य नवधा विधिम्।। २१२

मध्ये तु वासुदेवन्तु कारयेद्वा चतुर्भजम्।
एवं मानुषरूपन्तु गोपुरे दीर्घशालकं।
स्थापयित्वाऽर्चयेद्देवं सर्वकामार्थसिद्धये।। २१३

## दैविकवासुदेवः

अत ऊर्ध्वं दैविकन्तु वासुदेवं वदामि वः।
सोमच्छन्दविमाने वा बृहद्वृतेऽपि वा हरिम्।। २१४
चतुर्भुजधरं देवं शङ्खचक्रधरं परम्।
अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम्।। २१५
किरीटाद्यैस्समस्तैश्च भूषणैरपि भूषितम्।
रक्ताम्बरधरं देवं दशतालेन मानतः।। २१६
कारयेच्चोभयोः देव्यौ पार्श्वयोः कारयेत्तथा।
बलभद्रादिदेवांश्च पूर्वोक्तविधिना चरेत्।। २१७
निरायुधान् सायुधान्वा देवीभ्यां सह वा विना।
कारयेत्सह देवीभ्यां विशेषस्सम्प्रवक्ष्यते।। २१८
'रेवतीं रोहिणीञ्चेति रमामिन्दुकरी' मिति।
रक्तां नीलां तथा श्यामां पीतवर्णां समाचरेत्।। २१९
एकं पुष्पधरं हस्तं कुर्यादेकं प्रसारितम्।
देवीवियुक्तं युक्तं वा मार्गद्वयमथाचरेत्।। २२०

## स्थापनविधिः

एवं दैविकमार्गस्स्यात् स्थापनं तु प्रवक्ष्यते।
पञ्चवीरोक्तविधिना क्रमादग्निषु पञ्चसु।। २२१
सभ्ये विष्णुं समुद्दिश्य हौत्रं तत्र समाचरेत्।
'वासुदेवं यदुवरं भूहितं पुरुषोत्तमम्'।। २२२

'सत्यभामां सतीञ्चैव सन्नतीं विष्णुवल्लभाम्'।
ब्रह्मणः पद्महोमस्स्याद्वीशस्यौपासनं चरेत्।। २२३
'रुक्मिणीं सुन्दरीं देवीं श्रिय' ञ्चेति समर्चयेत्।
'रामं यदुवरं चैव हलायुध' मिति क्रमात्।। २२४
'प्रद्युम्नञ्च सुरूपाक्षं मदनांशं महाबलम्'।
'अनिरुद्धं महान्तञ्च वैराग्य' मिति चक्रमात्।। २२५
सर्वतेजोमयञ्चेति अनिरुद्धं समर्चयेत्।
'साम्बं सर्वसुखञ्चेति समृद्धं सामगं' तथा।। २२६
ब्रह्माणं गरुडञ्चापि पूर्वोक्तैर्नामभिर्यजेत्।
विष्ण्वादिपञ्चमूर्तिश्च श्रियञ्चेति महीमिति।। २२७
मानुषोक्तक्रमेणैव कुर्यादावाहनादिकम्।
आवाह्य बलभद्रादींस्तत्तद्धोमे विशेषतः।
जुष्टाकारांस्तथा स्वाहाकारान् पूर्वोक्तवच्चरेत्।। २२८
सभ्ये तु वैष्णवं हुत्वाऽऽहवनीये तु पौरुषम्।
दक्षिणे विष्णुसूक्तञ्चैकाक्षरादि तु पश्चिमे।। २२९
उत्तरे विष्णुगायत्रीं ब्राह्मं ब्रह्मानले यजेत्।
गारुडं गरुडस्याग्नौ तांस्तान् स्त्रीसहितान् स्मरन्।। २३०
प्रत्येकं विंशतिं हुत्वा पश्चादग्निं विसर्जयेत्।
स्नपनं शायनं कुम्भसाधनं स्यात्समीपतः।। २३१
मध्ये च दक्षिणे पार्श्वे क्रमादेवं समाचरेत्।
एवं मूर्त्युर्चनं कुर्याच्छेषं पूर्वोक्तवच्चरेत्।। २३२

## आदिमूर्तिः

अत ऊर्ध्वं प्रवक्ष्यामि आदिमूर्तेस्तु स्थापनम्।
मूर्तीनामनिरुद्धस्तु सर्वासामादिरुच्यते।। २३३

कुम्भाकारविमानं वा चतुर्मुखमथापि वा।
सोमच्छन्दं त्रिकूटं वा श्रियावृत्तमथापि वा।
पूर्वोक्तेन विधानेन विमानं सम्यगाचरेत्।। २३४

आदिमूर्तिञ्च कुर्वीत
अनन्तासनसंयुतम्।
पूर्वादिवृत्तं कुर्वीत
त्रिरावृत्त्या प्रदक्षिणम्।। २३५

वृत्तं समं प्रकुर्वीत सर्पाकारसमन्वितम्।
तस्य मध्ये सुखासीनं सर्पभोगे तथाऽऽश्रितम्।। २३६

उपधानं सर्पभोगे कृत्वा चैव शनैश्शनैः।
मकुटोपरि सञ्छाद्य विषवेगसमन्वितान्।। २३७

फणानां पञ्चवर्णानां युतं पञ्चभिरादरात्।
बेरायामसमायाममनन्तासनमिष्यते।। २३८

प्रसार्य दक्षिणं पादं वाममाकुञ्च्य सुस्थितम्।
शङ्खचक्रधरं देवं सर्वाभरणभूषितम्।। २३९

अनिरुद्धं रक्तवर्णं प्रवालसदृशद्युतिम्।
पूर्वोक्तेन प्रमाणेन कारयेद्बिम्बमुत्तमम्।। २४०

नारसिंहवराहाभ्यामर्चितंवादिदैवतम्।
दक्षिणे नारसिंहाञ्च वामे वाराहमर्चयेत्।। २४१

एकजानुक्रमेणैव तौ स्ववर्णसमायुतौ।
पुष्पाञ्जलिसमायुक्तौ देवदेवं समीक्ष्य वै।। २४२

मध्ये ब्रह्मस्थानभित्त्योः पूजकस्थानमिष्यते।
अर्चयित्वा विधानेन पूर्वोक्तेन क्रमेण तु।
उत्सवं स्नपनञ्चैव बल्यादीन् पूर्ववच्चरेत्।। २४३

## गजेन्द्रमोक्षणम्

अतः परं प्रवक्ष्यामि आविर्भावांश्च शार्ङ्गिणः।
गजेन्द्रस्य तु मोक्षार्थं शिंशुमारवधाय च।। २४४
गरुडस्कन्धमारुह्य ग्राहसंसृष्टचक्रकम्।
शङ्खं शार्ङ्गञ्च वामाभ्यां धरन्तं वेगसंयुतम्।। २४५
उद्धृत्य दक्षिणं पाणिं किञ्चिदालोलकुन्तलम्।
एवं चतुर्भुजं कुर्यात्कृपारोषसमन्वितम्।। २४६
इषुधिभ्याञ्च संयुक्तं शिंशुमारनिरीक्षणम्।
अर्धज्यागतमार्गेण चासीनं पीतवाससम्।। २४७
तार्क्ष्यं दक्षिणहस्तेन स्पृशन्तं स्फुरिताधरम्।
ग्राहे साचीकृतावाहमर्धेषद्भ्रुकुटीमुखम् ?।। २४८
जलस्थशिंशुमारेण ग्रस्ताङ्घ्रिं पुरतः स्थितम्।
ऊर्ध्वाननं गजेन्द्रञ्च पुष्करोद्धृतपङ्कजम्।। २४९
कृत्वैवं पूजयेद्देवं विष्णुं गरुडवाहनम्।
त्रैलोक्यं मोहितं येन यद्रुषा कृपयाऽपि च।। २५०
त्रैलोक्यमोहनं नाम प्रतिमां परिकल्पयेत्।
तस्य पूजनया लोकः त्रिलोकविजयी भवेत्।। २५१
ऐहिकामुष्मिकं सर्वं लभते नात्र संशयः।
शत्रुक्षयो भवेच्चैव सर्वाभीष्टञ्च सिद्ध्यति।। २५२
किंकुर्वाणा भवन्त्यस्य प्राणिनस्सर्वदा भुवि।
अन्ते कलेबरं त्यक्त्वा सायुज्यं लभते हरेः।। २५३
लोहाद्यैः प्रतिमां कुर्याच्चित्राभासेऽथवा हरिम्।
पूजयेदुक्तमार्गेण विष्णुं गरुडवाहनम्।
अनेनैव तु मार्गेण तस्य स्युः सर्वसम्पदः।। २५४

## सूर्यमण्डलान्तस्थमूर्तिः

अतः परं प्रवक्ष्यामि आविर्भावेषु चोत्तमम्।
अन्यद्रूपं सूर्यमण्डलान्तस्स्थं कमलासने।। २५५
समासीनं हिरण्याभं शङ्खचक्रगदाधरम्।
हारकेयूरमकरकुण्डलाञ्चितविग्रहम्।। २५६
पीतेन वाससा चान्यैर्दिव्यैर्दिव्याम्बरैर्युतम्।
रक्तास्यपाणिचरणं श्रीवत्साङ्कं चतुर्भुजम्।। २५७
योगासनसमायुक्तं भ्राजमानं सुखोद्वहम्।
एवं सङ्कल्प्य यत्नेन योगाद्यैरर्चयेद्धरिम्।। २५८
बिम्बं कर्तुमशक्तश्चेद्ध्यायेदादित्यमण्डले।
सायुज्यमाप्नुयात्तेन नरो निर्धूतकल्मषः।। २५९

## क्षीरार्णवस्थमूर्तिः

अथ प्रपूजयेद्देवमनन्तशयनं हरिम्।
क्षीरार्णवे शेषभोगे योगनिद्रावशं गतम्।। २६०
सहस्रफणसञ्छन्नमूर्धभागं तथाऽम्बुधौ।
नाभिसञ्जातपद्मोदरासीनचतुराननम्।। २६१
दिव्याभरणसंयुक्तं देवीभ्यां मृदिताङ्घ्रिकम्।
पञ्चायुधैः परिवृतं मधुकैटभसेवितम्।। २६२
सतार्क्ष्यं तार्क्ष्यरहितं द्विभुजं वा चतुर्भुजम्।
चित्रे वाऽऽभासके वाऽथ पूजयेत्सर्वसिद्धये।। २६३

## अनिरुद्धः

अथवाऽऽराधयेद्देवमादिमूर्तिं सनातनम्।
अनिरुद्धं तस्य पूजाप्रकारः पूर्वमीरितः।। २६४

विष्णुञ्च पुरुषञ्चैव सत्यञ्चैवाच्युतं तथा।
समाहत्य तु पञ्चापि मूर्तीर्विधिवदर्चयेत्।। २६५

## श्रीधरः

तथा श्रीधरमूर्तिञ्च पूजयेद्धृदये क्वचित्।
चन्द्रमण्डलमध्ये तु सुखासीनं तु श्रीधरम्।। २६६
मुक्तादामावृतञ्चैव शङ्खचक्रधरं तथा।
मुक्ताफलैरेव कृतैः भूषणैस्सुविभूषितम्।
श्रीधरं प्रतिमां कृत्वा पूजयेत्सर्वसिद्धये।। २६७

## विश्वरूपधरः

विश्वरूपञ्च देवशं पूजयेद्दैवतं तथा।
अनेकभुजसंयुक्तमनेकायुधधारिणम्।। २६८
अनेकदेवतोपेतमनेकाभरणोज्ज्वलम्।
अनेकविस्मयोपेतं वन्द्यमानं सुरादिभिः।। २६९
तथा दन्तसहस्रान्तर्विलीनजगदन्तरम्।
स्थितं कृत्वाऽर्चयेद्विद्वान् सर्वशत्रुक्षयाय वै।
सर्वोपद्रवनाशार्थं सर्वकार्यार्थसिद्धये।। २७०

## हरिशाङ्करः

हरिशाङ्करमन्यं वै पूजयेद्भक्तिसंयुतः।
अर्धं वैष्णवरूपञ्च अथाऽर्धं शाङ्करं वपुः।। २७१
रूपं लक्षणवत्कृत्वा पूजयेत्तु विचक्षणः।
वैष्णवैश्च तथा रौद्रैर्मन्त्रैः स्थापनमाचरेत्।। २७२

शेषं युक्त्या प्रकुर्वीत अर्चनादिकमादरात्।
अन्यानि देवरूपाणि शास्त्रोक्तानि शुभानि च।
संस्थाप्य पूजयेदिच्छन् भक्तो भक्तिसमन्वितः।। २७३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे दशावतारकल्पो नाम
एकोनविंशोऽध्यायः।

-----------

अथ विंशोऽध्यायः

-----------

## नित्यार्चनक्रमः

ऋषय ऊचुः-

नमस्ते भगवन् ब्रह्मन् नमस्ते ब्रह्मणः सुतः।
त्वत्प्रसादाच्छ्रुतो विष्णोरस्माभिः स्थापनाक्रमः।
कौतुकस्यौत्सवस्यापि तथाऽर्चायाः विशेषतः।। १
भेदान् नवविधांश्चैव लोहसंस्कारमेव च।
नित्यार्चनक्रमञ्चैव श्रोतुमिच्छामहे वयम्।। २

## कौतुकादिव्यवस्थाप्रकारः

भृगुरुवाच -

युष्माभिश्चोदितं सर्वं प्रवक्ष्यामि तपोधनाः।
एकस्मिंस्तु विमाने वै बेराणि त्रीणि कल्पयेत्।। ३
अशक्तो द्वे तथैकं वा यथाशक्ति प्रकल्पयेत्।
कौतुकञ्चौत्सवार्चा त्रिविधं बिम्बमुच्यते।। ४
कौतुकं ब्रह्मणः स्थाने विधिना स्थापयेद्बुधः।

तस्यैवोत्तरतः पार्श्वे औत्सवं स्थापयेत्तथा।। ५
दक्षिणो कौतुकस्यात्र किञ्चित्पूर्वं समाश्रिते।
स्थापयित्वा तथैवार्चां नित्यपूजां समाचरेत्। ६
कुर्यात्कौतुक बिम्बे वै नित्यपूजां यथाक्रमम्।
औत्सवे च तथा बिम्बे काम्यकर्माणि कारयेत्।। ७
कर्म नैमित्तिकं यत्तदर्चायां कारयेद्बुधः।
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।। ८
पुण्यकालं समीक्ष्यैव तत्कालात्पूर्वमाचरेत्।
यजमानस्य जन्मर्क्षे राज्ञो जन्मदिने तथा।। ९
अन्यस्मिन् पुण्य नक्षत्रे विष्णुपञ्चदिनेषु च ।
कर्मोद्दिष्टं काम्यमुक्तं कालो मध्याह्न उच्यते।। १०
ऐकाहिकोत्सवोक्तेन मार्गेणोत्सवमाचरेत्।
ग्रामं प्रदक्षिणं कृत्वा तीर्थस्थानं प्रविश्य च ।। ११
उत्सवोक्तप्रकारेण तीर्थस्नानं समाचरेत्।
पश्चाद्ग्रामं परित्यैव देवालयमुपाव्रजेत्।। १२
स्नापनोक्तेन मार्गेण स्नापयेत्पुरुषोत्तमम्।
प्रभूतञ्च निवेद्यैव स्वस्थाने स्थाप्य पूजयेत्।। १३
अथ नैमित्तिकं कुर्याद्दुर्भिक्षे व्याधिजे भये।
अद्भुतोत्पादनादौ च तत्तद्दोषोपशान्तये।। १४
उत्सवस्नपनादीनि
अर्चायां सम्यगाचरेत्।
विहीने चौत्सवेऽर्चायां
कौतुके सर्वमाचरेत्।। १५

(हीनमौत्सवबेरञ्चेदर्चायामुत्सवं चरेत्
हीने च स्नापने बेरे औत्सवे स्नपनं चनेत)

## अर्चनवैविध्यम् – निष्कलार्चनम्

अत ऊर्ध्वं प्रवक्ष्यामि अर्चानिर्वहणे क्रमम्।
साकरञ्च निराकारं भवत्याराधनं द्विधा।। १६
प्रतिमाराधनं श्रेष्ठं साकारमभिधीयते।
स्थण्डिले सलिले वापि हृदये सूर्यमण्डले।। १७
आराधनं निराकारं तयोस्साकारमुत्तमम्।
संस्कारान् अर्पणीयानि द्रव्याणि विविधानि च।। १८
सङ्कल्प्य मनसा दद्यातु निराकारार्चनं हरेः।
.... .... .... .... ।। १९

## सकलार्चनम्

संसारश्रमनिष्ठानां पुरुषाणां विजानताम्।
इह चामुत्र च हितं यथेष्टफलदायकम्।। २०
सकलं सर्वसम्पूर्णं साकारमभिधीयते।
चक्षुषोः प्रीतिजननं मनसो हृदयस्य च।। २१
यथोपयोगशक्यत्वात्कर्तुं पूजां सुमादिभिः।
अभीक्ष्णदर्शनौचित्यात् सौलभ्येन विशेषतः।। २२
विशेषभक्तिहेतुत्वात् प्रतिमाराधनं वरम्।
तस्मात्कृत्वाऽऽलयं सम्यक् भक्त्या पूर्वोक्तवर्त्मना।। २३
उक्तेनैव विधानेन कारयेत्प्रतिमां शुभाम्।
स्थापयेच्च विधानेन कारयेन्नित्यमर्चनम्।। २४
यजमानो गुरुञ्चैव पूजनार्थञ्च पूजकान्।
द्वावेकं चतुरस्त्रीन्वा यथाविभवमाहरेत्।। २५

पूर्वोक्त गुणसम्पन्नानुक्तदोषविवर्जितान्।
वैखानसान् समाहूय यजमानो नियोजयेत्।। २६

## वृत्तिकल्पनम्

देवस्य देव्योः परिषद्दवानाञ्च पृथक् पृथक्।
कल्पयेञ्छाश्वतीं वृत्तिं पूजानिर्वहणाय वै।। २७
हविषामर्थमेतावद्बल्यर्थमिदमित्युत ।
देव्योश्च परिवाराणामेतावांश्चरुसङ्ग्रहः ।। २८
धूपद्रव्यस्य चैतावदेतावान् गन्धसङ्ग्रहः।
दीपतैलार्थमेतावदुपस्करविधाविदम्।। २९
पूजकानामथैतावद्भरणाय समन्ततः।
प्रायश्चितार्थमेतावदेतावद्विप्रभुक्तये।। ३०
एतावद्वर्षपूजार्थं वादित्राद्यर्थमेव च।
गायकाद्यर्थमेतावत् दासदासीगणस्य च।। ३१
स्नपनार्थमथैतावत् विशेषार्चार्थमेव च।
नवीकरणकर्मार्थमेतावदिति वै पृथक्।। ३२
विभज्य धनमात्मीयं त्रिधा भागद्वयं ततः।
भागद्वयं कुटुम्बार्थं दत्वा शिष्टैकभागकम्।। ३३
धर्मार्थं कल्पयित्वा तु दद्याद्दवाय भक्तितः।
भूमिभोगेन पूर्वेषामुक्तानां कल्पनं चरेत्।। ३४
क्लेशयुक्तान् नरान् दृष्ट्वा न रमेत्कालनेमिहा।
स भृत्यान् किं पुनर्दृष्ट्वा अन्तरङ्गान् क्रियावतः ।। ३५
तस्मात्सर्वप्रयत्नेन चाक्लिष्टं सर्वमाचरेत्।
अक्लेशेनैव जीवेयुर्तया सर्वे पदार्थिनः।। ३६

अर्चके क्लेशयुक्ते च तथैव परिचारके।
तद्ग्रामो यजमानश्च क्लेशयुक्तस्सदा भवेत्।। ३७

## अर्चककृत्यानि

अर्चकस्सुप्रसन्नात्मा मन्त्रतन्त्रपरायणः।
ब्राह्मे मुहूर्ते चोत्थाय स्नात्वा स्नानविधानतः।। ३८
ब्रह्मयज्ञादिकं कृत्वा आत्मसूक्तं जपेत्क्रमात्।
वेदादीन्वा पठेद्विद्वान् देवेशं मनसा स्मरेत्।। ३९

## आलयप्रवेशः

'प्रतद्विष्णुसस्तवत' इति प्रविशेद्देवमन्दिरम्।
'अतो देवादि' कं जप्त्वा कुर्यात्सद्मप्रदक्षिणम्।। ४०
'विमानं प्रपद्य' इत्युक्त्वा विमानं प्रणमेत्ततः ।
'मणिकं प्रपद्य' इत्युक्त्वा मणिकं सम्प्रणम्य च ।। ४१
'निरस्तं रक्ष' इत्युक्त्वा यन्त्रिकां समुपाहरेत्।
कवाटे चैव संयोज्य 'हिरण्यपाणि' मुदीरयन्। ४२
'दिवं विवृणो' त्वित्युक्त्वा कवाटोद्घाटनं चरेत्।
ततोऽभ्यन्तरं प्रविश्य 'अतो देवादि' मुच्चरन्।। ४३
मुखं समीक्ष्य देवस्य प्रणाम्यैवानुमान्य च।
त्रिः सम्प्रहार्थ पाणिभ्यां 'शाम्यन्त्वि' ति समुच्चरन्। ४४
'भगवतो बलेन' मन्त्रेण प्रणमेद्देवमादरात्।
शिष्यमाहूय तत्काले तोयार्थञ्च नियोजयेत्।। ४५

## परिचारककृत्यम्

'दुहतां दिव' मित्युक्त्वा घटमादाय सोऽऽपि च।
बाह्वोश्शिरसि वा न्यस्य आहर्तुमुदकं व्रजेत्।। ४६

नदीं तटाकं कूपं वा यथालाभं तथा व्रजेत्।
पूर्वालाभे परं गत्वा तोयमादाय चात्वरः।। ४७
पिधाय वस्त्रखण्डेन कलशस्य मुखं ततः।
'आद्यमभिगृह्णा' मीति कुम्भं तोयेन पूरयेत्।। ४८
पूर्ववन्मूर्ध्नि बाह्वोर्वा कलशं सन्न्यसेत्क्रमात्।
सर्वालङ्कारसंयुक्तं वाद्यघोषसमायुतम्।। ४९
देवालयं शनैर्गत्वा प्रदक्षिणमथाचरेत्।
किञ्चिदैशान्यमाश्रित्य उत्तरे वा मनोरमे।। ५०
'अन्तरस्मिन्निमे त्युक्त्वा ब्रह्माणमभिवाद्य च।
'सोमं राजान' मित्युक्त्वा तोयकुम्भं सुसन्न्यसेत्।। ५१
'धारासु सप्त' स्वित्युक्त्वा अपामुत्पवनं चरेत्।
'इदमापश्शिवा' इति तोयं तमभिमन्त्रयेत्।। ५२
मार्जन्या मार्जनं कुर्या 'दवधूतं' समुच्चरन्।
'आमा वाजस्य' मन्त्रेण पात्राणि परिशोधयेत्।। ५३

## पात्रशुद्धिः

सौवर्णं राजतं ताम्रं कांस्यं मृण्मयमेव वा।
पात्रं तोयैः पञ्चगव्यैः पूरयित्वा यथोदितम्।। ५४
'आशासु सप्त' स्विन्युक्त्वा कूर्चयुक्तेन पाणिना।
प्रोक्षयेत्सर्वसम्भारान् बाह्यमाभ्यन्तरं क्रमात्।। ५५

## निर्माल्यशोधनम्

'अहमेवेद' मित्युक्त्वा निर्माल्यं संव्यपेह्य च।
'पूतस्तस्ये' ति मन्त्रेण वेदिं प्रक्षाल्य वारिणा।। ५६

'तत्पुरुषाय मन्त्रेण' न्यसेत्पुष्पाणि पादयोः।
पादयोर्देवदेवस्य देव्योश्च विनयान्वितः।। ५७
देवेशस्य तु निर्माल्यमादाय प्रयतात्मवान् ।
विष्वक्सेनं समासाद्य पूजयेत्तु यथाविधि।। ५८
निर्माल्यमन्यदेवानां शिष्य एव समाहरेत्।
आरामे तु विसृज्यैव पादप्रक्षालनं चरेत्।। ५९
(औत्सवादेस्तु निर्माल्यं प्रथमावरणे न्यसेत्।
'भक्तानां पापनाशार्थं ददामी' ति वदन् विधिः)।। ६०

## स्नानासनम्

'भूः प्रप' द्येति देवेशं प्रणम्यैवानुमान्य च।
आलयादुत्तरे श्वभ्रे मण्डलान्युपलिप्य च।। ६१
अलङ्कारं यथाशक्ति कारयित्वा विचक्षणः।
पीठञ्च तत्र सन्यस्य सर्वोपकरणानि च ।। ६२
अन्यान् यथेच्छं सम्भारान् यजमानेन सञ्चितान्।
सर्वांस्तत्र समानीय यथोक्तं स्नापयेद्बुधः।। ६३
'परं रंहे' ति मन्त्रेण देवमादाय चात्वरः।
'प्रतद्विष्णुस्स्तवत' इति स्नानपीठे निवेशयेत्।। ६४
दूर्वाक्षतसमायुक्तं तोयं चात्र समाहरेत्।
उभाभ्याञ्चैव हस्ताभ्यां बिम्बे त्वारोप्य भक्तिमान्।। ६५
पादादिमूर्धपर्यन्तमभिषिच्य पुनः पुनः।
'अन्नाद्याये' ति मन्त्रेण दन्तधावनमाचरेत्।। ६६
'इदं ब्रह्मे' ति जिह्वायाः शोधनं कारयेद्बुधः।
'यन्मे गर्भे' ति मन्त्रेण मुखप्रक्षालनं चरेत्।। ६७

दद्यादाचमनीयञ्च 'योगे योग' इति ब्रुवन्।
'विचक्रमेति' मन्त्रेण मुखवासं ददेद्धरेः।। ६८
पुनराचमनीयञ्च दत्वा प्लोतेन सम्मृजेत्।
सर्वाङ्गञ्च विमृज्यैव सूक्ष्मवस्त्रेण मन्त्रवित्।। ६९
'तेजो व' इति वस्त्रेण सञ्छाद्याचमनं ददेत्।
'सोमस्ये' त्युत्तरीयञ्च दद्यान्मन्त्रेण मन्त्रवित्।। ७०
अलकाः शोधयेत्पश्चा 'दतो देवादि' मन्त्रतः।
सुगन्धतैलमादाय हस्ताभ्यां मस्तके तथा।। ७१
कुर्यादभ्यञ्जनञ्चैव बन्धयेदलकांस्ततः।
मालालङ्करणं मूर्ध्नि 'तद्विष्णो' रुच्चरंश्चरेत्।। ७२
गात्रेषु विष्णुगायत्र्या तैलमालेपयेच्छनैः।
वीजयेत्तालवृन्तैश्च ब्रुवन् 'वायुप' रीति वै।। ७३
स्नानासनञ्च सङ्कल्प्य पुण्याहं पूर्ववच्चरेत्।
यथोक्तं स्नापनं कुर्यात्कलशैः पञ्चभिस्ततः।। ७४
वेदिं कृत्वा विधानेन व्रीहिभिर्वाऽथ तण्डुलैः।
कलाशान् लोहजान् पञ्च क्षीराद्यैः परिपूर्य च।। ७५
गन्ध पुष्पैरलङ्कृय कूर्च्चं न्यस्याक्षतांस्तथा।
नारिकेलञ्च सन्न्यस्य तेषु चावाहयेत्क्रमात्।। ७६
देवदेवं सुसम्पूज्य पाद्यञ्चाऽऽचमनं ददेत्।
'परिलिखित' मिति मन्त्रेण आम्लेन परिशोधयेत्।। ७७
'वारीश्चतस्र ' इत्युक्त्वा शोधयित्वाऽथ वारिणा।
'नमो वरुण' इत्युक्त्वा क्षीरेण स्नापयेद्धरिम्। ७८
'भूरानिलय' इत्युक्त्वा स्नापयेद्गन्धवारिणा।
वस्त्रादिभिरलङ्कृत्य धूपदीपौ च दर्शयेत्।। ७९

फलादीनि निवेद्यैव
कलशैः स्नापयेत्ततः।
स्वयं गत्वाऽऽसने स्थित्वा
सङ्कल्प्याक्षतमर्पयेत्।। ८०
कुम्भं गृहीत्वा देवस्य सन्निधौ न्यस्य पूर्ववत्।
योगमार्गेण कूर्चेन पुण्याहकलशोदकैः।। ८१
मातृकां व्यापकञ्चैव स्थितिन्यासञ्च कारयेत्।
ध्यात्वा देवञ्चात्मसूक्तं जप्त्वा मन्त्रञ्च वैष्णवम्।। ८२
कुम्भोदकेनाभिषिच्य पूजयेत्पुरुषोत्तमम्।
पूर्वसन्न्यस्तपात्रस्थतण्डुलान् नारिकेलकम्।। ८३
युक्तनेत्राज्यवर्तिश्रीदीपमादाय मन्त्रवित्।
'शुभ्राज्योति' रिति प्रोच्य दीपं नीराजनाह्वयम्।। ८४
त्रिः परिभ्रामयित्वा तु देवेशाय प्रदर्शयेत्।
सहस्राधारां सौवर्णीं राजतीं वाऽथ ताम्रकाम्।। ८५
तथाविधौ शङ्खपद्मनिधी आदाय पूजकाः।
सहस्रधारापात्रन्तु धृत्वा देवस्य मूर्धनि।। ८६
निधिभ्यां तीर्थमादाय शीतमुष्णमथापि वा।
कुङ्कुमैः घनसारैश्च मिश्रितं शुभवासितम्।। ८७
धरापात्रे चार्पयेयुः स्नापयेयुर्हरिं बुधाः।
चतुर्धा स्नपनं कृत्वा शुद्धोदैरभिषेचयेत्।। ८८
'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतवस्त्रेण मार्जयेत्।
ततः कौतुकमादाय 'भूरसि भू' रिति ब्रुवन् ।। ८९
जीवस्थाने प्रतिष्ठाप्य प्रणमेद्देवमव्ययम्।
अलङ्कारासनं दत्वा पाद्यमाचमनं ददेत्।। ९०

## अलङ्कारासनम्

प्रणिधिञ्चाम्बुनाऽऽपूर्य कूर्चयुक्तं सहाक्षतम्।
ध्रुवस्थानन्तु गायत्र्या प्रोक्षयित्वा विचक्षणः।। ६१
'संयुक्तमेत' दित्युक्त्वा क्षिपेत्सम्बन्धकूर्चकम्।

## ध्रुवपीठे पुष्पन्यासः

ध्रुवस्य पादयोर्मध्ये 'विष्णवे नम' इत्युत।। ६२
प्राच्यान्तु पुरुषायेति सत्यायेति च दक्षिणे।
पश्चिमे त्वच्युतायेति अनिरुद्धायेति चोत्तरे।। ६३
आग्नेये कपिलायेति यज्ञायेति च नैऋते।
नारायणाय वायव्ये पुण्यायेति तथैशके।। ६४
एवन्तु प्रथमे न्यस्य द्वितीयावरणे पुनः।
वाराहायेति पूर्वस्यां नारसिंहाय दक्षिणे।। ६५
पश्चिमे वामनायेति त्रिविक्रमाय चोत्तरे।
आग्नेय्यान्तु सुभद्राय नैऋत्यामीशितात्मने।। ६६
सर्वोद्वहाय वायव्ये सर्वविद्येशाय ईशके।
एवं द्वितीये सन्न्यस्य तृतीये तदनन्तरम्।। ६७
इन्द्रादिलोकपालेभ्यस्तत्तद्दिक्षु च विन्यसेत।
श्रियै धृत्यै पवित्र्यै च प्रमोदायिन्यै च विन्यसेत्।। ६८
हरिण्यै पौष्ण्यै क्षोण्यै च मह्यै चोभयपार्श्वयोः।
एवं ध्रुवे च सन्न्यस्य न्यसेत्कौतुकपादयोः।। ६९

## कौतुकपीठे पुष्पन्यासः - विशेषश्च

(सुभद्रादिभ्योऽष्टभ्यः पीठस्य परितोऽर्चनम्)

एवं स्थानक उद्दिष्टमासने तु प्रवक्ष्यते।
प्रसारितस्य पादस्य परितः सन्न्यसेद्बुधः।। १००
शयने पादपार्श्वे तु अधस्ताच्छयनान्न्यसेत्।
त्रिविक्रमे तु तत्रैव स्थिते पादे प्रकल्पयेत्।। १०१
वाराहे पादपरितः कल्पयेदिति शासनम्।
पुष्पन्यासन्तु कृत्वैवं पश्चादर्चनमारभेत्।। १०२
पादमध्ये कौतुकस्य तथा प्रागादिषु न्यसेत्।
'सुभद्रं हयात्मकं' रामदेवं पुण्यदेवमेव च।। १०३
सर्वं सुखावहञ्चेति संवहं सुवहं तथा।
'शिवं विश्वं तथा मित्रमत्रि' ञ्चेति यथाक्रमम्।
पश्चिमाद्यर्चयेद्देवानर्चापीठे यथाक्रमम्।। १०४
सनत्कुमारं सनकं सनातनसनन्दनौ।
वायव्याद्यर्चयेद्देवान् विदिक्षु च बहिर्मुखान्।। १०५
इन्द्रादीन् लोकपालांश्च तृतीयावरणेऽर्चयेत्।
तथा देव्यौ पार्श्वयोश्च ध्रुवबेर इवार्चयेत्।। १०६
दक्षिणे भित्तिमूले च ब्रह्माणमपि पूजयेत्।
उत्तरे भित्तिमूले च ईश्वरं पूजयेत्क्रमात्।। १०७
माञ्च दक्षिणतोऽभ्यर्च्य वामे पुण्यं समर्चयेत्।
इलापुण्यौ यत्र चोक्तौ तत्र तौ तु समर्चयेत्।। १०८
पश्चादर्ध्यान्तमभ्यर्च्य चतुर्मूर्तिविधानतः।
पूजयेद्द्वारदेवांश्च दक्षिणोत्तरयोः क्रमात्।। १०९

## परिषदर्चनम् द्वारदेवाः

धातारमुत्तरास्यं विधातारं दक्षिणामुखम्।
भुवङ्गञ्चाप्यूर्ध्वमुखं पतङ्गञ्चाप्यधोमुखम्।। ११०

पतिरञ्चोत्तरमुखं वरुणं दक्षिणामुखम्।
पूर्वोक्तेन विधानेन चतुर्मूर्तिभिरर्चयेत्।। १११

## द्वारपालाः

द्वारे च प्रथमे देवं मणिकं दक्षिणेऽर्चयेत्।
किञ्चिद्द्वारं समीक्ष्यैव चतुभिर्मूर्तिभिः स्थितम्।। ११२
द्वितीयद्वारपालौ तु तापसं सिद्धिदं तथा।
तापसं दक्षिणेऽभ्यर्च्य वामे सिद्धिदमर्चयेत्।। ११३
अथवा शङ्खचक्रे वा द्वितीयद्वारि कल्पयेत्।
द्वारं किञ्चित्समीक्ष्यैव अर्घ्यान्तं तौ समर्चयेत्।। ११४

## अन्तराले न्यक्षः - लोकपालाः

अन्तरालादिषु न्यक्षमिन्द्रादींश्च समर्चयेत्।
तृतीयद्वारपालौ तु किष्किन्धं तीर्थमर्चयेत्।। ११५
सोपानमध्ये श्रीभूतं प्राङ्मुखन्तु समर्चयेत्।
पश्चाद्गरुडमभ्यर्च्य देवेशाभिमुखं स्थितम्।। ११६
शान्तञ्चाप्यर्चयेत्पश्चात्सप्तविंशतिविग्रहैः।
एवमभ्यर्च्य यत्नेन स्वैस्स्वैर्मन्त्रैर्यथाविधि ।। ११७
तत्काले शिष्यमाहूय देवानन्यांश्च पूजयेत्।
अर्घ्यान्तं सर्वदेवान्वै पूजयित्वा विधानतः।। ११८
देवेशाभ्यर्चनं पञ्चादारभेत विधानतः।

## पात्रकल्पनम् - उपचारकल्पनादि

आदाय शङ्खांश्चतुरः शोधयित्वा तु वारिणा।। ११९
पूरयित्वा जलेनैव पुष्पगन्धाक्षतादिना।
धूपं दीपञ्चार्पयित्वा शङ्खांस्तान् कूर्चसंयुतान्।। १२०

कौतुकस्य पुरस्ताद्वै अधोवेद्यां न्यसेत्क्रमात्।
आवाहनार्थमेकन्तु शङ्खं वै दक्षिणे न्यसेत्।। १२१
तस्यैवांत्तरतश्चैकं पाद्यार्थमपि सन्न्यसेत्।
पाद्यशङ्खस्योत्तरतः न्यसेदाचमनीयकम्।। १२२
एतेषामुत्तरे शङ्खं स्नानार्थं परिकल्पयेत्।
एवं संस्थापयित्वा तु पश्चादर्घ्यञ्च साधयेत्।। १२३

## अर्घ्यद्रव्याणि

प्रथमं सिद्धार्थकञ्चैव द्वितीयञ्च कुशोदकम्।
तृतीयन्तु तिलं प्रोक्तं चतुर्थं तण्डुलं तथा।। १२४
पञ्चमं दधि षष्ठञ्च क्षीरं सप्तममक्षताः।
अष्टमं तोयमित्यष्टद्रव्यमर्घ्यमुदीरितम्।। १२५
एतानि च समाहृत्य पात्रे सम्यक् समुत्क्षिपेत्।
'आ मा वाजस्य' मन्त्रेण अर्घ्यपात्रणि शोधयेत्।। १२६
सोमं तत्र समभ्यर्च्य पुनस्तानि च शोधयेत्।
अर्घ्यद्रव्याणि चादाय गायत्र्या तत्र निक्षिपेत्।। १२७
अभिघार्य घृतेनैव देवस्याभिमुखे न्यसेत्।
ततो द्रव्याणि चान्यानि पूजार्थाण्याहरेद्बुधः।। १२८

## आवाहनविधिः

देवस्य दक्षिणे पार्श्वे ध्यानमाविश्य चात्वरः।
निवातस्थितनिष्कम्पप्रदीप इव निश्चलः।। १२९
नयने नासिकाग्रे च सन्न्यस्य हृदये दरिम्।
आत्मसूक्तं जपेत्पश्चात् स्वर्भुवर्भूस्थ इत्यपि।। १३०

मूर्धानं नाभिमङ्घ्रीं च क्रमाद्देवस्य संस्पृशेत्।
'यकारं' पादयोस्तद्व'दकारं' हृदये न्यसेत्।। १३१
प्रणवेन वेष्टयित्वा तु विष्णुशक्तिं विचिन्तयेत्।
'भूः प्रपद्य' इति प्रोक्त्वा देवदेवमनुस्मरन्।। १३२
निष्कलं ध्यानयोगेन ध्यात्वा सकलमव्ययम्।
सङ्कल्प्य शक्तिं देवस्य प्रणिध्यां विनिवेशयेत्।। १३३
पात्रस्थं शक्तियुक्तं तत्कूर्चेनादाय वै जलम्।
प्राणबुद्ध्या कौतुकस्य मूर्ध्नि संस्रावयेद्बुधः।। १३४
विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम्।
पञ्चमूर्तीस्समावाह्य दक्षिणे श्रियमेव च।। १३५
वामे महीं समावाह्य तत्तन्मूर्तीस्समर्चयेत्।

## अर्चनक्रमः

'अस्त्वासनं' समुच्चार्य चासनं परिकल्पयेत्।। १३६
'विश्वाधिकाना' मुच्चार्य स्वागतं सम्यगाचरेत्।
'मनोऽभिमन्ते' त्युत्क्वा तु देवेशमनुमान्य च।
'त्वं स्त्रीति' च समुच्चार्य पाद्यं तत्राभिमृश्य च।। १३७
'इन्द्रोऽभिम' न्तेत्युच्चार्य पाद्यं दद्याच्छ्रियः पतेः।
'शन्नो देवीति' मन्त्रेण दद्यादाचमनं हरेः।। १३८
'आपो हिष्टे' ति पुरुषाय दद्यादाचमनीयकम्।
'इमास्सुमनस' इत्युक्त्वा पुष्पाणि च समर्पयेत्।। १३९
'योगे योगे' ति सत्याय 'समाने' त्यच्युताय च।
'पवित्रन्ते' ऽनिरुद्धाय दद्यादाचमनीयकम्।। १४०
'इमास्सुमनस' इत्युक्त्वा पुष्पं देवस्य दीयताम्।
पुष्पमालास्समादाय चालङ्कुर्यान्मनोरमम्।। १४१

'इमे गन्धा' इति गन्धञ्च नाभेरूर्ध्वं प्रलेपयेत्।
'बृहस्पती' ति चोक्त्वा तु धूपं दद्याच्चतुर्दिशम्।। १४२
'शुभ्रज्योति' रिति प्रोच्य दीपं देवस्य दर्शयेत्।
'अग्निरिन्द्रा' दिना विद्वानर्घ्यं तत्राभिमर्शयेत्।। १४३
'इन्द्रियाणीति' मन्त्रेण विष्णवेऽर्घ्यं निवेदयेत्।
'हिरण्यगर्भ' इत्युक्ता पुरुषाय निवेदयेत्।। १४४
'इदमापश्शिवे' त्युत्क्वा सत्यायार्घ्यं निवेदयेत्।
अच्युताय ततो दद्यात्तत्पुरुषाय मन्त्रतः।। १४५
'कयानश्चित्र' इत्युत्क्वा अनिरुद्धाय दीयतम्।
पूर्वमुक्तेन मन्त्रेण दद्यादाचमनीयकम्।। १४६
'इषे त्वोर्जेत्वे' ति जपन् मन्त्रेण स्नानमाचरेत्।
कूर्चेन तोयमादाय प्रोक्षयेद्बिम्बमत्वरः।। १४७
'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतेन विमृजेत्ततः।
'तेजो वत्सव' इत्युक्त्वा वस्त्रं देवस्य दीयताम्।। १४८
'सोमस्य तनूर' सीत्युक्त्वा उत्तरीयं ददेद्बुधः।
'भूतो भूतेष्वि' ति जपन् भूषणानि समर्पयेत्।। १४९
पुनः पाद्यादिकं दत्वा मन्त्रैः पूर्वमुदीरितैः।
उपवीत 'मग्निं दूते' ति दद्याद्देवस्य चादरात्।। १५०
दीपान्तमर्चयित्वा तु देवमानभ्य चादरात्।
एवं कौतुकमभ्यर्च्य पश्चादौत्सवमर्चयेत्।। १५१
'स्नापनं' बलिबेरञ्च पश्चादभ्यर्चयेद्बुधः।

## भोज्यासनम्

'अथावनीद' मन्त्रेण मण्डलान्युपलिप्य च।। १५२

ततः पात्रं समादाय 'आ मा वाजस्य' चोच्चरन्।
तत्राऽऽदित्यं समभ्यर्च्य पुनः पात्राणि शोधयेत्।। १५३
शोधयेच्च तथा नित्यं हविः पात्राणि मन्त्रतः।
अभिघार्य हविः पात्रं 'देवस्येति' समुच्चरन्।। १५४
'अमृतोपस्तरण' मिति हविः प्रक्षिप्य चात्वरः।
सर्वोपदंशसंयुक्तं सफलं व्यञ्जनैर्युतम्।। १५५
गुडखण्डसमायुक्त मन्यैः देवार्पणोचितैः।
भक्तियुक्तं गृहीत्वा तु तुलसीं तेषु निक्षिपेत्।। १५६
अन्नसूक्तेनाभिमृश्य समाहितमनास्तदा।
'यत्ते सुसीम' इत्युक्त्वा घृतमास्राव्य कापिलम्।। १५७
(अलाभे गव्यमन्यद्वा वर्जयित्वा च माहिषम्।
वर्ज्यमाजं माहिषं वा क्षीरं दद्ध्यादिकं तथा)।। १५८
शुद्धोदैः प्रोक्षयित्वा तु देवेशाय निवेदयेत्।
'सुभूस्स्वयं भू' रित्युक्त्वा विष्णवे स्यान्निवेदनम्।।१५९
'हिरण्य गर्भ' इत्युक्ता पुरुषाय च पायसम्।
'इह पुष्टिं' समुच्चार्य सत्याय कृसरं ददेत्।। १६०
'समा ववर्ती' त्युच्चार्य गौल्यञ्चैवाच्युताय च।
'त्रिणि पदे' ति चोच्चार्य अनिरुद्धाय यावकम्।। १६१
एतान् मन्त्रात्समुच्चार्य पञ्चमूर्तिनिवेदनम्।
देवीभ्याञ्च मुनिभ्याञ्च दद्यादेवं क्रमेण ह।। १६२

## होमः

ततश्चाग्निं परिस्तीर्य नित्यहोमं सामाचरेत्।
विमानदक्षिणे क्लृप्ते यागशालासुरक्षितम्।। २६३

सभ्यमौपासनं वाऽग्निमासाद्योज्ज्वाल्य मन्त्रतः।
गंन्धपुष्पै रक्षताद्यैरलङ्कृत्य विशेषतः।। १६४
परिषिच्याद्भिरग्नौ तु वैष्णवान्तं चरुं यजेत्।
आज्येन मूर्तिमन्त्रैस्तु देवेशाय तथा हुनेत्।। १६५
देवीभ्याञ्चालयगतदेवेभ्योऽन्येभ्य एव च।
उपस्थायाग्निमादित्यञ्चालयं समुपाव्रजेत्।। १६६
अतो देवादिना दद्यात् पानीयं हरये तदा।
शिष्यमाहूय तत्काले बलिमानाय्य मन्त्रतः।। १६७

## बलिदानम्

पुष्पगन्धसमायुक्तं धूपदीपसमन्वितम्।
वाद्यध्वनिसमायुक्तं तीर्थयुक्तं गुरुर्व्रजेत्।। १६८
पुरतः कूर्चयुक्तेन वारिणा बलिमर्पितुम्।
पश्चात् शिष्यो बलिं दद्याद्गुरूद्दिष्टेन वै यथा।। १६९
बलिदाने क्रमः प्रोक्तो यस्तमाश्रित्य कारयेत्।
प्रथमद्वारपालेभ्यो मूर्तिमन्त्रैरुपक्रमेत्।। १७०
पश्चाद्विमानपालेभ्यः तत्तद्दिशि बलिं ददेत्।
इन्द्रादिलोकपालानां ततः पश्चात् बलिं क्षिपेत्।। १७१
तोयं दत्वा तु प्रथमं दद्यात् पुष्पं ततः परम्।
गन्धं पश्चात् ततो धूपं दद्याद्दीपं ततः परम्।। १७२
बलिं पश्चात् क्षिपेत्तत्र दद्यात् तोयं ततः परम्।
बलिशेषं समादाय भूतपीठे विनिक्षिपेत्।। १७३
पादौ प्रक्षाल्य चाचम्य प्रविशेद्देवमन्दिरम्।
भूतपूठादिपीठानि शिष्यस्तोयेन शोधयेत्।। १७४

स्थलशुद्धिं कारयित्वा पश्चादाचमनं ददेत्।

## मुखवासः

एलालवङ्गतक्कोलकर्पूराद्यैरनुत्तमैः।। १७५
'घृतात्परीति' चोक्त्वा तु मुखवासं निवेदयेत्।
पञ्चप्रकारैः प्रणमेत् देवदेवं समीक्ष्य वै।। १७६
उपचारार्पणं यत्र घण्टानादं समाचरेत्।
नमस्कारश्च विहितः प्रतिद्रव्यं समर्पणे।। १७७

## अन्नबलिविधिः

पश्चादन्नबलेः कल्पः विशेषेण प्रवक्ष्यते।
बलिविध्युक्तमार्गेण नित्यं यात्राबलिं ददेत्।। १७८
बलिपात्रं समादाय शोधयेच्छुद्धवारिणा।
बलिपात्रे शुचौ तस्मिन् समावाह्य च भास्करम्।। १७९
बल्यन्नं तत्र निक्षिप्य उक्तरूपं मनोहरम्।
देवस्य पुरतो न्यस्य तस्मिन् देवेशमर्चयेत्।। १८०
शिष्यं सोपानगं स्थाप्य तत्रावाह्य खगाधिपम्।
गरुडध्यानसंयुक्तं 'बृहस्पति' रिति ब्रुवन्।। १८१
बलिपात्रं समानाय्य शिष्यस्य शिरसि न्यसेत्।
प्रदक्षिणं ततो गत्वा आलयं परितः क्रमात्।। १८२
मृदुवाद्यसमायुक्तं वेदध्वनिसमन्वितम्।
धूपदीपसमायुक्तं छत्रचामरसंयुतम्।। १८३
मयूरव्यजनैश्चापि बर्हिपिञ्छैः समायुतम्।
अन्यैर्यथालाभलब्धैः कुर्याद्धामप्रदक्षिणम्।। १८४

गोपुरात्तु बहिर्गत्वा वेदध्वनिसमायुतम्।
सर्ववाद्यसमायुक्तं स्तोत्रध्वनिसमायुतम्।। १८५
द्वितीयावरणेऽप्येवं तृतीयावरणे तथा।
प्रदक्षिणं शनैर्गत्वा भूतपीठं परीत्य च।। १८६
ततोऽभ्यन्तरमाविश्य मृदुवाद्यसमन्वितम्।
वीशस्य पश्चिमे स्थित्वा देवमीक्षेत चादृतः।। १८७
घटदीपं समानीय पाद्यमाचमनं ददेत्।
वेश्या तद्दीपमादाय सर्ववाद्यसमायुतम्।। १८८
देवेशं त्रिः परिक्रम्य उपचारक्रमं चरेत्।
शिष्यो बल्यग्रमादाय विष्वक्सेनाय दापयेत्।। १८९
बलिं शिष्टं समादाय भूतपीठे च निक्षिपेत्।
पादौ प्रक्षाल्य चाचम्य देवागारं विशेद्गुरुः।। १९०
देवास्याभिमुखे स्थित्वा पूजकः सम्प्रणम्य च।
जपेत्पुरुषसूक्तञ्च विष्णुसूक्तमथापि वा।। १९१
'अतो देवादि' मन्त्रान्वा द्वादशाक्षरमेव वा।
जप्त्वा तु देवं प्रणमेत्स्मरन् देवं मुहुर्मुहुः।
प्रातरेवं समभ्यर्च्य सूर्योपस्थानमाचरेत्।। १९२

## मध्याह्नार्चनम्

अत ऊर्ध्वं प्रवक्ष्यमि मध्याह्ने चार्चनं क्रमात्।
स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।। १९३
देवालयं शनैर्गत्वा प्रदक्षिणमथाऽऽचरेत्।
पूर्वोक्तेनैव मन्त्रेण कवाटोद्घाटनं चरेत्।। १९४
अभ्यन्तरं प्रविश्यैव देवमानम्य पूर्ववत्।
शिष्यमाहूय तत्काले द्रव्याण्यपि च सम्भरेत्।। १९५

पूर्वोक्तेन विधानेन पुष्पन्यासं समाचरेत्।
कौतुके च तथा कुर्याच्छिवादीनञ्च पूजनम्।। १९६
पाद्याद्यर्ध्यान्तमेवं स्यात् त्रिषु कालेषु पूजनम्।
उपर्युपरि पुष्पाणि त्रिषु कालेषु सन्न्यसेत्।। १९७
अतीतेऽहनि रात्रौ च पुष्पं निर्माल्यतामियात्।
तस्मात्सदा प्रातरेव निर्माल्यपरिशोधनम्।। १९८
मालानामितरेषाञ्च तत्तत्काले विसर्जनम्।
(उत्सवेष्वन्यकालेषु मालाश्चान्यास्समर्पयेत्)
धात्रादीनर्चयित्वा तु पाद्याद्यर्ध्यान्तमेव च।। १९९
देवदेवेशमाराध्य पाद्याद्यैश्च विधानतः।
पूर्वोक्तेन विधानेन हविर्भिस्सन्निवेदयेत्।। २००
स्नानादीन् विग्रहान् हित्वा पूजनं दशभिस्त्रिभिः।

## सायमर्चनम्

सायञ्चैव तथा कुर्यान्नित्यमेवन्तु पूजनम्।। २०१
अर्धरात्रे तु पाद्यादि दत्वा दीपान्तमेव च।
पूर्वोक्तेन विधानेन हविर्भिस्सन्निवेदयेत्।। २०२
ततश्चाचमनं दत्वा मुखवासं निवेदयेत्।
पूर्वोक्तेन क्रमेणैव द्वारसङ्घट्टनं चरेत्।। २०३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे नित्यार्चनक्रमो नाम
विंशोऽध्यायः।

## अथ एकविंशोऽध्यायः

---

## चतुर्मूर्त्यर्चनाविधिः

अतः परं प्रवक्ष्यामि चतुर्मूर्त्यर्चनक्रमम्।
पञ्चमूर्तिक्रमेणैव आदिमूर्तिं समर्चयेत्।। १
विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम्।
एतास्तन्मूर्तयः प्रोक्ताः उक्तैर्मन्त्रैश्च पूजनम्।। २
श्रियञ्चैव धृतिञ्चैव पवित्रीञ्च विधानतः।
तथा प्रमोदायिनीञ्च उक्त्वा सम्पूजयेच्छ्रियम्।। ३
अर्चयेद्धरिणीञ्चापि हरिणीञ्च पौष्णीमिति।
क्षेणीं महीमिति प्रोच्य मूर्तिभिश्च चतसृभिः।। ४
'पद्मापितरं धातृनाथं ख्यातीशं भृगु' मित्यपि।
अर्चयेत्तु विधानेन माञ्च दक्षिणतस्तथा।। ५
'चिरायुषं मार्कण्डेयं रौहिणेयमुदग्रिणम्' ।
इत्यर्चयित्वा मार्कण्डेयं द्वारपालौ समर्चयेत्।। ६
तुहणो बलिदश्चैव तत्र वै द्वारपालकौ।
'तुहणं दैत्यराजञ्च विष्णुभक्तं गदाधरम्' ।। ७
इत्यर्चयेत्तु तुहणं द्वारदक्षिणतस्ततः।
'दैतेयञ्च महावीर्यं बलिदं शूलपाणिनम्' ।। ८
इति वामेऽर्च्य बलिदं शेषान् पूर्ववदर्चयेत्।
'पुरुषं पुरुषात्मकञ्चेति परमपुरुषमतः परम्।। ९
धर्म,' मित्यर्चयेदुक्त्वा पुरुषं मूर्तिभिः क्रमात्।
चतस्रो मूर्तयस्त्वेताः पुरुषस्य समीरितः।। १०

'श्रियञ्च कमलाञ्चेति पुरुषस्य प्रियां तथा।
आनन्दा' मिति चोक्त्वा तु श्रियं देवीं समर्चयेत्।। ११
'मेदिनीं धरणीमुर्वीं सर्वाधारां महीं' क्षितेः।
'भृगुं मुनिवरं शुद्धमग्निवर्णं तपोधनम्'।। १२
इति मामर्चयित्वा तु मार्कण्डेयं ततोऽर्चयेत्।
'पुराणं भक्तिमन्तञ्च भार्गवं चिरजीविनम्'।। १३
इति मूर्तिभिरभ्यर्च्य द्वारपालौ समर्चयेत्।
'शङ्खं मुनिवरञ्चेति धनदस्य सखं तथा।। १४
मौक्तिकोद्भव' मित्युक्त्वाऽर्चयेच्छङ्खनिधिं ततः।
'पद्मं निधिवरञ्चेति रक्ताङ्गं भूतनायकम्।। १५
इत्यर्चयेत्पद्मनिधिं प्राग्द्वारे द्वारपालकौ।
'सत्यं सत्यात्मकं ज्ञानं सर्वसंहारकं' तथा।। १६
'धृतिं रामां दक्षसुतां सत्यपत्नीं' तथा पुनः।
'पौष्णीञ्च वरदामुर्वीं पृथिवी' मिति चोच्चरन्।। १७
सत्यस्य देव्यावभ्यर्चेद् देव्यौ दक्षिणवामयोः।
'धातृनाथं भूतनाथं ब्रह्मसम्भवमेव च।। १८
वाग्देवीपति' मित्युक्त्वा अर्चयेन्मां विधानतः।
'पुण्यञ्च विश्वं शुद्धञ्च वरिष्ट' मिति च क्रमात्।। १९
अर्चयेत्पुण्यमपि च सनकादींस्तथाऽर्चयेत्।
'शङ्खचूडं वृक्षषण्डं श्वेताभं घोररूपिणम्'।। २०
'चक्रचूडं महानादमुग्ररूपं भयानकम्'।
इत्येवमर्चयेद्विद्वान् दक्षिणोत्तरयोः क्रमात्।। २१
'अच्युतञ्चापरिमितमैश्वर्यं श्रीपतिं' तथा।
'पवित्रीमिन्दिराञ्चेति लक्ष्मीञ्चैवाच्युतप्रियाम्'।। २२

'क्षेणीं वराङ्गीं वरदामर्चयेत्पुण्यदयिनीम्'।
'ख्यातीशञ्च तपोयोनिममृतञ्चाप्ययोनिजम्'।। २३
'सिताङ्गमुग्रतपसं चिरायुषमनन्तकम्'।
शङ्खपद्मनिधी चैव अर्चयेत्तु विधानतः।। २४
'अनिरुद्धं महान्तञ्च वैराग्यमिति मन्त्रतः।
सर्वतेजोमय' ञ्चेति अर्चयेत्तु यथाक्रमम्।। २५
'प्रमोदायिनीं वरारोहामब्धिकन्यां रमा' मिति।
'महीं गां पृथुलाञ्चेति अर्चयेत्तु ध्रुवा' मिति।। २६
'भृगुं तपोनिधिञ्चेति वेदरूपं महाप्रभम्'।
'मार्कण्डेयमुरुं दीप्तपुण्यं पावन' मित्यपि।। २७
दक्षिणे शङ्खचूडञ्च वामे वै चक्रचूलिनम्।
पूर्ववच्चार्चयेद्धर्मं 'सावित्रीं वेदमातरम्।। २८
गायत्रीं व्याहृति' ञ्चैव मनूंश्चैव चतुर्दश।
माञ्च वैखानसञ्चैव वालखिल्यान् समारिषान्।। २९
वैराजञ्च यथान्यायं कालं ब्रह्माणमेव च।
हरिशाङ्कररूपञ्च निद्रां विघ्नञ्च पूजयेत्।। ३०
'धर्मं सत्यं शुभं पुण्य' मिच्युक्त्वा धर्ममर्चयेत्।
ततो दक्षिणभागे च अर्चयेच्च सरस्वतीम्।। ३१
वह्निं रुद्रञ्च शङ्खंञ्च सूर्यं सम्पूजयेत्क्रमात्।
सोमं गन्धर्वराजञ्च विराजञ्च गुहं तथा।। ३२
अर्चयेच्च तथा धीमांश्चतुर्मूर्तिविधानतः।
ततः पश्चिमभागे तु कामं सम्पूजयेत्क्रमात्।। ३३
'कामं मनोभवञ्चेति रतीशं मकरध्वजम्'।
अर्चयेत्तु विधानेन नरनारायणावृषी।। ३४

'नारायणं पुराणेशं मन्त्रमूर्तिमिति क्रमात्।
विश्वरूपिण' मित्युक्ता अर्चयेत्तु विधानतः।। ३५
'सर्वाङ्गंञ्च नरञ्चेति सर्वयोनिं सनातनम्'।
तथैवोत्तरभगे तु पूजयेन्नारसिंहकम्।। ३६
'नारसिंहं तपोनाथं महाविष्णुं महाबलम्'।
'वाराहं वरदञ्चेति' उर्वीधारिणमेव च।। ३७
वज्रदंष्टिण' मित्युक्ता अर्चयेद्विधिवद्बुधः।
प्रादक्षिण्येनार्चयेच्च नदीरष्टौ विधानतः।। ३८
गङ्गां सरस्वतीं सिन्धुं कौशिकीं नर्मदामपि।
यमुनां चन्द्रभागाञ्च सह्यजां पूजयेत्ततः।। ३९
शायनञ्चेत्तथा चोर्ध्वे अर्चयेत्तु विधानतः।
'अनन्तशयनञ्चोक्त्वा अनादिनिधनं तथा।। ४०
अमितमहिमानमित्युक्त्वा अत्यन्ताद्भुत ' मेव च।
शयानमर्चयेद्देवं मन्त्रैरेव विधानतः।। ४१
शेषान् पूर्ववदभ्यर्च्य पञ्चायुधसमन्वितान्।
नाभ्यम्बुजसमासीनं ब्रह्माणञ्च समर्चयेत्।। ४२
श्रियं भूमिं पुराणञ्च माञ्च तत्र समर्चयेत्।
वीशं शैषिकसंयुक्तं कल्पयेत्तु विधानतः।। ४३
नारसिंहप्रतिष्ठा चेदर्चयेन्नारसिंहकम्।
'नारसिंह तपोनाथं महाविष्णुं महाबलम्'।। ४४
'विरिञ्चिं वरदञ्चेति ब्रह्माणं पद्मसम्भवम्'।
'रुद्रं त्रियम्बकञ्चेति गौरीशं शर्व' मित्युत।। ४५
यज्ञतीर्थौ यथान्यायं पूजयेत्पूजकौ तथा।
'यज्ञं सुतपसं नित्यं भावितात्मानमित्युत।। ४६

अर्चयेद्दक्षिणे भागे तीर्थं वामे समर्चयेत्।
'तीर्थञ्च भवनञ्चेति मन्त्रसिद्धं महाबलम्'।। ४७
अर्चयेच्छैषिकं विद्वान् सुभूतिं सुमतिं तथा।
महाप्रभाव' मित्युक्त्वा अर्चयेत्तु विधानतः।। ४८
'नमो वरुण' इत्युक्त्वा पुष्पाण्याहृत्य यत्नतः।
स्नात्वा चैव विधानेन जपेत् द्वादशासूक्तकम्।। ४९
ब्राह्मं सूक्तं जपेद्विद्वान् पारमात्मिकसंयुतम्।
गोदानमात्मसूक्तञ्चारुणनारायणे तथा।। ५०
तथा च विश्वजित्सूक्तं सूक्तं शुद्धावतीं जपेत्।
एवं जप्त्वा विधानेन अर्चनं सम्यगाचरेत्।। ५१
वेदादींश्च ततो जप्त्वा देवेशं मनसा स्मरन्।
हृदि बीजाक्षरं न्यस्येत् ध्यानं पूर्ववदाचरेत्।। ५२
पूर्वोक्तेन विधानेन अर्चनं सम्यगाचरेत्।
बल्यादि स्नापनञ्चैव उत्सवं पूजनं तथा।। ५३
अशक्तश्चेत्तु सर्वासामादि मूर्तेरिवाचरेत्।
चतुर्मूर्तिविधानन्तु विना नैवार्चयेत्तिकम्।। ५४
एकमेवानिरुद्धञ्च सह वा कारयेद्बुधः।

## मूर्तिभेदक्रमः

अतः परं प्रवक्ष्यामि मूर्तिभेदक्रमं बुधाः।। ५५
धर्मं ज्ञानमथैश्वर्यं वैराग्यमिति वै गुणाः।
आदिमूर्तिसमुद्भूताः चतस्रो मूर्तयः क्रमात्।। ५६
समस्ता विष्णुमूर्तिस्तु व्यस्तास्ते पुरुषादिकाः।
विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम्।। ५७

ब्रह्मक्षत्रियविट्छूद्रहिता वै मूर्तयः क्रमात्।
कृतं त्रेता द्वापरश्च कलिश्चेति यथाक्रमम्।। ५८
ऋक्सामयजुराथर्व वेदाश्चत्वार एव ते।
भूर्भुवस्स्वर्महश्चेति लोकास्ते तु चतुर्विधाः।। ५९
एवं चतुर्धा सम्भिन्ना मूर्तयः पुरुषादिकाः।
एतेषामर्चनं नित्यं शान्तिपुष्टिसुखप्रदम्।
वर्षदं सर्वलोकानां चातुर्वर्ण्यसमृद्धिदम्।। ६०

हत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे चतुर्मूर्त्यर्चनविधिर्नाम
एकविंशोऽध्यायः।

---------

अथ द्वाविंशोऽध्यायः

---------

## उपचारस्वरूपम् - द्वात्रिंशदुपचाराः

अथातस्सम्प्रवक्ष्यामि विग्रहाणां विनिर्णयम्।
पूजकेभ्यो हितं पूजाविधिविद्भ्यस्सुसम्मतम्।। १
विग्रहा उपचाराश्च भोगा एकार्थवाचकाः।
प्रणामादिविसर्गान्ताः क्रियाः पूजोदिताः स्मृताः।। २
प्रणामावाहने चैव आसनं स्वागतं तथा।
अनुमानश्च पाद्यञ्च तथैवाचमनं तथा।। ३
पुष्पं गन्धञ्च धूपञ्च दीपञ्चार्ध्यमनन्तरम्।
ततश्चाचमनं स्नानं प्लोतं वस्त्रं तथैव च।। ४
उत्तरीयोपवीते च भूषणं पाद्यमेव च।
ततश्चाचमनं पुष्पं गन्धं धूपं ततः परम्।। ५

दीपो हविश्च पानीयं ताम्बूलाचमने तथा
होमो बलिर्विसर्गश्च द्वात्रिंशद्विग्रहा इमे।। ६
क्रमेणैषां स्वरूपञ्चप्रयोगश्चाभिधीयते।

## प्रणामः पञ्चविधः

प्रणामस्स्यान्नमस्कारः स तु पञ्चविधः स्मृतः।। ७
मस्तिष्कं सम्पुटञ्चैव प्रह्वाङ्गं दण्डसंज्ञितम्।
पञ्चाङ्गं पञ्चमं प्राहुस्तेषां रूपं प्रकीर्त्यते।। ८
चिन्तयन् मनसा देवं मस्तकेऽञ्जलिसंयुतम्।
मस्तिष्कमिति विज्ञेयः प्रणामः प्रथमस्स्मृतः।। ९
तथा ध्यायन् हृदा देवं हृदयेऽञ्जलिसंयुतम्।
क्रियमाणो नमस्कारस्सम्पुटः परिकीर्तितः।। १०
अञ्जलिं हृदये कृत्वा नतकायेन भक्तितः।
क्रियते यो नमस्कारः प्रह्वाङ्गस्स उदाहृतः।। ११
शयित्वा दण्डवद्भूमावञ्जलिं सम्प्रसार्य च।
क्रियेत यो नमस्कारः उच्यते दण्डसंज्ञितः।। १२
पादाङ्गुलिभ्यां जानुभ्यां ललाटेन च भूतलम्।
क्रियेत संस्पृशन् भक्त्या सा पञ्चाङ्गनमस्क्रिया।। १३
पूजारम्भेऽथ मस्तिष्कं सम्पुटं वा प्रयोजयेत्।
प्रणामविग्रहस्स स्यात् पूजान्ते च प्रयोजयेत्।। १४

## आवाहनम्

आपूर्य प्रणिधिं पुष्पकूर्चाक्षतसमन्विताम्।
मन्त्रपूतेन तोयेन पाणिभ्यां तं तु धारयन्।। १५

निष्कलं निर्मलं देवं सर्वव्यापिनमव्ययम्।
ध्यानमन्थेन हृदये सम्मन्थ्याप्सु निवेशयेत्।। १६
ततस्तत्तोयमादाय तेन कूर्चेन मन्त्रतः।
बिम्बस्य स्नावयेन्मूर्ध्नि स आवाहनविग्रहः।। १७
निष्कलं सकलं कर्तुं ध्यानं स्यात्सकलक्रिया।
विष्णोरायतनं ह्यापः स तत्र प्रतिगृह्यते।। १८
तस्यैव सूनवस्त्वेतास्तस्मात्तं ह्यप्सु पूजयेत्।

## आवाहनप्रकारः

यथाऽरण्यां स्थितो वह्निः सर्वव्याप्येकतो भवेत्।। १९
मथनादेव सन्दीप्तस्तद्वद्देवेश्वरो हरिः।
सर्वगस्सन् जगद्व्यापी ध्यानमन्थप्रबोधितः।। २०
भक्तानुकम्पया सोऽपि विभूतिं स्वां सुविस्तृताम्।
सङ्क्षिप्य चैकीभवति कलापीव कलापकम्।। २१
तस्मात्तं निष्कलं ध्यायंत्सकलं मन्त्रशक्तितः।
एकत्र स्मरणं यत्तदावाहनमुदाहृतम्।। २२

## आवाहने विशेषः

ध्रुवकौतुकयोस्सत्वे ध्रुवात्पात्रे विचिन्त्य वै।
तस्मात्तु कौतुके बेरे सम्यगावाहयेद्बुधः।। २३
त्रिकालपूजनं यत्र प्रातरावाहनं चरेत्।
अन्त्यसन्ध्यार्चनान्ते तु विसर्जनमाथाचरेत्।। २४
एकबेरार्चना यत्र नावाहनविसर्जने।
मण्डले च जले चैव कर्चे वा यत्र चार्चनम।। २५

समावाह्यार्चयित्वा तु पूजनान्ते विसर्जयेत्।

**आसनम्**

अनुरूपासनं पुष्पैः सुसङ्कल्प्य समन्त्रकम्।। २६
'आस्यता' मिति देवेशमासयेदासनं तु तत्।

**स्वागतम्**

सुमुखीकरणं यत्तत्समन्त्रं स्वागतं प्रभोः।। २७

**अनुमानः**

'मया कृतं क्षमस्वेदं सर्वं देवे' ति याचनम्।
अनुमान इति प्रोक्त उपचारसमन्त्रकम्।। २८

**पाद्यम्**

एलातक्कोलयुक्तेन दूर्वाक्षतयुतेन वा।
पादप्रक्षालनार्थन्तु मन्त्रपूतेन वारिणा। २९
कूर्चेन पादयोस्सेकः पाद्यं विद्यात्समन्त्रकम्।
(अथवा भावनैर्युक्तं शङ्खाग्रेण स्रवेज्जलम्)

**आचमनम्**

सङ्कल्प्याचमनार्थन्तु तोयं मन्त्रसमन्वितम्।। ३०
दद्याद्यद्दक्षिणे हस्ते तदाचमनमुच्यते।
तोयमक्षतसंयुक्तं गालितं शुद्धवारिणा।। ३१
तदेवाचमनायार्हं तोयं कुशसमन्वितम्।

**पुष्पम्**

मूर्ध्नि पीठे समन्ताच्च भुजयोः शङ्खचक्रयोः।। ३२
मन्त्रवत्पुष्पविन्यासो पुष्पविग्रह उच्यते।
तत्तद्वेलासु सम्फुल्लपुष्पैः पूजा प्रशस्यते।। ३३

## चन्दनम्

ललाटबाहुकण्ठेषु तथोरसि च मन्त्रतः।
चन्दनेन सुगन्धेन स्वालेपो गन्धविग्रहः।। ३४

## धूपपात्रम्

धूपार्थमग्न्याधारन्तु स्वर्णरूप्यादिकल्पितम्।
कुर्यात्तु गोलकोत्सेधमष्टाङ्गुलिविशालकम्।
तदधो व्यालबन्धन्तु वक्राकारं द्विपादकम्।। ३५
कुर्याद्भागसमुत्सेधमुपरिष्टात्तु तत्समम्।
द्विपादं वर्तुलं नालं वक्रं युक्त्यैव कारयेत्।। ३६
धूपाधिदेवो धिषणः द्विपादं बह्निदैवतम्।
वक्ते नागं समभ्यर्चेत् धूपात् व्याधिश्च शाम्यति।। ३७

## धूपम्

शीतनिर्यासकान्तादीन् (?) क्रमवृद्ध्या विचूर्णितान्।
चान्द्रेण शीततुल्येन घृतमिश्रेण धूपयेत्।। ३८
शीतारिर्नाम धूपोऽयं विष्णोराराधने वरः।
अनेन धूपयेद्वापि तथा गुग्गुलुनाऽपि वा ।। ३९
समन्त्रं धूपदानन्तु धूपविग्रह उच्यते।

## दीपपात्रम्

दीपपात्रं तथा कुर्यात्पादौ नालञ्च पूर्ववत्।
नालमङ्गुलिमात्रन्तु तालमात्रं पदान्तरम्।। ४०
तदूर्ध्वं वर्तुलाकारं षोडशाङ्गुलिविस्तृतम्।
एकं वक्रन्तु तन्मध्ये वर्तिकाकुम्भसंयुतम्। ४१

भागाङ्गुलोन्नतञ्चैव विस्तृतं वर्तिकायुतम्।
तद्बाह्ये परितो दीपैस्सप्तविंशतिभिर्युतम्।। ४२
रोहिण्याद्यग्निऋक्षान्तदेवानामास्पदं भवेत्।
मध्ये चन्द्रमसं वर्तिज्वालायां श्रियमर्चयेत्।। ४३

## दीपः

दक्षिणाङ्घ्रिं समारभ्य वामपादावसानकम्।
नेत्रान्तं दर्शयेद्दीपं प्रणवाकारतः पृथक्।। ४४
विष्णोः कर्माणि मन्त्रेण दीपमश्रीविनाशकम्।
तन्तुभिः पद्मनालोत्थैः कार्पासैर्वाथ तन्तुभिः।। ४५
कार्पासपिचुना वाऽथ कारयेदथ वर्तिकाम्।
घृतेन वाऽथ तैलेन दीपं सन्दीप्य दर्शयेत्।। ४६
समन्त्रं देवपार्श्वे यः दीपविग्रह उच्यते।
अष्टाङ्गुलोच्छ्रयज्वालो दीप उत्तम उच्यते।। ४७
तदर्धं मध्यमो दीपस्तस्यार्धमधमं विदुः।
अथ मानाङ्गुलोत्सेधा नित्याऽनिर्वाणदीपिका।। ४८
कर्पूराद्यैस्तु वा गन्धाध्युषितस्नेहसम्प्लुताम्।
वर्तिं कृत्वाऽथवा दद्याद्दीपं प्रियतमं हरेः।। ४९

## दीपानर्हतैलानि

आजेनाज्येन यो दीपस्स भवेद्यक्षरक्षसाम्।
माहिषाज्येन यो दीपः सोऽसुराणानां भविष्यति।। ५०
आविकाज्येन यो दीपः स तु गान्धर्व उच्यते।
तस्मात्तु देवपूजायां दीपकाले विशेषतः।। ५१

गव्यं घृतं विमिश्रं वा दीपेष्वनिशवर्तिषु।
समीपस्थेषु सङ्ग्राह्यं तैलं बाह्येषु कर्मसु।। ५२
वार्क्षस्नेहेषु सङ्ग्राह्यः नालिकेरः प्रशस्यते।
अथवाऽन्यस्य वृक्षस्य स्नेहं बाह्यार्थमाहरेत्।। ५३
पाण्यङ्गस्य तु स्नेहन्तु सर्वदा परिवर्जयेत्।

## अष्टाङ्गमर्घ्यम्

कुशाग्रं तिलसिद्धार्थतण्डुला अक्षतास्तथा।। ५४
पयो दधि जलञ्चेति अर्घ्यमष्टाङ्गमुच्यते।
यवसर्षपमाषाश्च व्रीहयो मिश्रिताः कृताः।। ५५
अक्षताः संज्ञितास्तेषां संयोगोऽक्षत ईरितः।
अष्टाङ्गं वा यथालाभं द्रव्यं पात्रे निधाय वै।। ५६
पूरयित्वाऽम्बुना पात्रं देयमर्घ्यन्तु मन्त्रतः।
(हस्ताभ्यामर्घ्यमादाय बिम्बमूर्ध्नि निवेदयेत्)।। ५७
मन्त्रवद्दर्शनं विष्णोः प्रोक्षणञ्चार्घ्यविग्रहः।
पृथक्पात्रेषु मूर्तीनामर्घ्यं संयोजयेद्बुधः।। ५८
(पञ्चस्वपि च पात्रेषु कुडुबं कुडुबं पृथक्)।

## पञ्च पात्राणि

स्वर्णरूप्यादिपात्राणि पञ्चपात्रमिहोच्यते।। ५९
तुल्यमानं तुल्यभारमेकाकारं प्रकल्पयेत्।
मूर्तीनां पुरुषादीनां प्रागादि परिकल्पयेत्।। ६०

## द्वारभेदेन मूर्त्यर्चनम्

यस्यां दिश्यलद्वारः तन्मूर्त्याद्यर्चयेत्क्रमात्।

## पञ्चाङ्गमर्घ्यम्

अक्षतास्तण्डुलाश्चैव अम्बुना मिश्रिता यदि।। ६१
पञ्चाङ्गमर्घ्यमुद्दिष्टं विष्णोरन्यत्र पूजने।

## अक्षतस्थानीयमच्युतम्

तण्डुलव्रीहिसंयोगः कीर्त्यतेऽच्युतमित्यपि।। ६२
परिवारोक्तदेवानां स्यादर्घ्यपरिकल्पने।

## अर्घ्यप्रतिनिधिः

अर्घ्यद्रव्यस्य चालाभे अर्घ्यवत्पुष्पमर्पयेत्।। ६३

## स्नानम्

बिम्बशुद्धिञ्च कृत्वा तु शोधनीयेन वस्तुना।
पश्चात्प्रक्षाल्यं मन्त्रेण स्नापनं स्नानविग्रहः।। ६४

## स्नापनप्रोक्षणविवेकः

स्नापनप्रतिमायान्तु स्नानमन्यत्र प्रोक्षणम्।
बिम्बे स्नानं न सौवर्णे तत्र च प्रोक्षणं स्मृतम्।। ६५
त्रिकालपूजनायुक्ते स्नापयेत्प्रातरेव तु।
प्रोक्षयेदन्यकाले तु मन्त्रेणेत्याह पूर्वजः।। ६६
(संस्नाप्य पूर्वमेवार्चां पुनः कालान्तरार्चने
सम्प्रोक्ष्यैवार्चयेद्विद्वान् सोऽपि स्यात्स्नानविग्रहः)।

## प्लोतः

वस्त्रेणाभ्यङ्गसम्मर्दः समन्त्रं प्लोतविग्रहः।। ६७

## वस्त्रम्

क्षौमकौशेयकार्पासवस्त्रैः शुद्धैस्समन्त्रकम्।
परिधानकरणं यत्तद्वस्त्रविग्रह उच्यते।। ६८

## उत्तरीयम् उपवीतञ्च

वस्त्रेणैवोत्तरासङ्गकल्पनं मन्त्रवद्विभोः।
उत्तरीयमिति रव्यातो विग्रहो विधिकोविदैः।। ६९
सौवर्णञ्चाथ कार्पासमुपवीतं समन्त्रकम्।
प्रदद्यादुपवीतं हि विग्रहः स निगद्यते।। ७०

## भूषणम्

सौवर्णैः भूषणैर्युक्तामणिक्लृप्तैः सुमैरपि।
यथाशोभं विचिन्त्यैव मन्त्रेणाङ्गेषु योजनम्।। ७१
धातुभिश्चाप्यलङ्कारः स स्यात् भूषणविग्रहः।

## हविः

ज्ञात्वा तु हविषां भेदं मूर्तीनां सन्निवेदनम्।। ७२
समन्त्रं हविरारव्यातो विग्रहो मुनिभिर्मतः।

## मूर्तिभेदेन पञ्चधा हविः

पञ्चधा तु हविः प्रोक्तं हरेर्मूर्तिप्रभेदतः।। ७३
शुद्धान्नं पायसं वापि कृसरं गौल्यमेव च।
यावकन्त्विति देयानि पञ्चमूर्तिक्रमेण वै।। ७४
अलाभे पञ्चहविषां शुद्धान्नं वा निवेदयेत्।
पायसादीनि चत्वारि चतुर्मूर्तिविधौ ददेत्।। ७५
प्रशस्तं सर्वमूर्तीनां हविर्मौद्गं विशेषतः।
हविः पाकप्रकरणे तत्पाकक्रम ईर्यते।। ७६
द्रोणतण्डुलमात्रन्तु पञ्चभिर्व्यञ्जनैर्युतम्।
प्रत्येकं पञ्चपलकैः पलेनापि गुडस्य च।। ७७

प्रस्थेन मुद्गसारेण वैतलानमथापि वा।
सम्यक्पक्वैः फलैश्चापि मधुरैश्च रसोत्कटैः।। ७८
कुडुबेन धृतेनापि दध्ना प्रस्थद्वयेन वा।
उत्तमं हविरुद्दिष्टं तदर्धं मध्यमं विदुः।। ७९
तदर्धमधमं प्राहुरन्वितं व्यञ्जनैस्त्रिभिः।
द्वाभ्यामेकेन वा युक्तं हविरेवं त्रिधोदितम्।। ८०
फलपल्लवकन्दाद्याः मुद्गाढक्यादयश्च ये।
उपदंशा इति प्रोक्ता धर्मशास्त्रेष्वनिन्दिताः।। ८१
षड्रसैस्तु यथायोगं रसाढ्यं स्यात्तथा पचेत्।
प्रत्येकं वाथ द्वाभ्यां वा बहुभिर्वा विधानवित्।। ८२
अनिरर्थरसैर्युक्तं हविरेवं प्रशस्यते।
एवमेव कवीशाभ्यां वीशसेनेशयोरपि।। ८३
तदर्धमन्यदेवानां स्त्रीदेवानां तदर्धकम्।
अन्येषां परिवारणामाढकार्धं हविर्भवेत्।। ८४
यावद्दिवा हविः प्रोक्तं तदर्धं निशि सम्मतम्।
श्रीभूम्योरपि शान्तस्य आढकार्धं हविर्मतम्।। ८५

## पाकक्रमः

हविषां व्यञ्जनानाञ्च मृद्भाण्डे पाचनं मतम्।
लौहपात्रेऽपि कर्तव्यं हविश्शुद्धञ्च मौद्गिकम्।। ८६
न पचेद्व्यञ्जनं लौहे रसभेदो भवेद्यदि।
एकपात्रे न पाच्यं हि द्रोणार्धाधिकं हविः।। ८७
कदाचिदपि मृत्पात्रे पुराणे न पचेद्धविः।
'विष्णवे जुष्ट' मित्युक्त्वा पात्रे निर्वाप्य तण्डुलान्।। ८८

प्रक्षाल्य वारिणा सम्यक् च्छुल्ल्यामारोप्य भाजनम्।
पाचयेत्तेन मन्त्रेण पक्वे चाप्यवरोपयेत्।। ८९
भाण्डं प्रक्षाल्य पार्श्वे तु भस्मना पुण्डमालिखेत्।
पृथक् पात्रे बलिञ्चैव देवानाञ्च पृथक् पचेत्।। ९०

## निवेदितान्नविनियोगः

भाण्डशिष्टं हविर्यत्तद्विष्वक्सेनाय दापयेत्।
तन्निवेदितनिर्माल्यं विसृजेदप्सु वा ददेत्।। ९१
भक्तानां पूजकानाञ्च हरस्य तु निवेदेतम्।
स्त्रीणामपि तथा भोज्यं श्रीभूम्योश्च निवेदितम्।। ९२
निवेदितं ब्रह्मणस्तु द्विजानां भोज्यमुच्यते।
निवेदितं तु रुद्रस्य निक्षिपेदप्सु केवलम्।। ९३
मुन्योः निवेदितं तद्वदिन्द्राप्पत्योश्च शूलिनः।
देयं दुर्गासरस्वत्योः द्विजानामन्नकाङ्क्षिणाम्।। ९४
निवेदितं कुबेरस्याभोज्यमित्याह पूर्वजः।
वह्नेर्निवेदितं यत्तु वायसेभ्यः प्रदीयतम्।। ९५
यमनीलानिलानान्तु सद्य एव निवेदितम्।
तत्पूजकानां भोज्यं स्यात्सूर्यषण्मुखयोस्तु यत्।। ९६
ज्येष्टायास्तु द्विजस्त्रीणां भोज्यमुक्तं निवेदितम्।
भोज्यं प्रजार्थं नारीणां गरुडस्य निवेदितम्।। ९७
निवेदितं यत् चक्रस्य भोज्यं शत्रुजयार्थिनम्।
मातणां रोहिणीनाञ्च भूतानां यक्षरक्षसाम्।। ९८
निवेदितं पिशाचानाञ्च निक्षिपेदेव वारिषु।
ग्रहाणामपि सौम्यानां विघ्नेशस्य निवेदितम्।। ९९

क्रियावतामिच्छताञ्च भोक्तव्यं ब्रह्मचारिणाम्।
त्रयाणामपि वर्णानां तथैव व्रतचारिणाम्।। १००

व्रतमुद्दिश्य यत् क्लृप्तं तद्धविः भोज्यमुच्यते।
न भोज्यन्तु द्विजातीनां सर्वदेवनिवेदितम्।। २०१

विष्णोर्निवेदितं भोज्यं विप्राणां च व्रतादिषु।
विष्णोर्निवेदितं भोज्यं भक्तिभाक्शूद्रजन्मनाम्।। १०२

## भागवतमहिमा

शूद्राश्च भगवद्भक्ता यदि विष्णुं समाश्रिताः।
चतुर्वेद्योऽपि यो विप्रो न भक्तः शूद्र एव सः।। १०३

तस्मान्निवेदितं विष्णोर्भक्तानां भोज्यमुच्यते।
होमशिष्टं देवशिष्टं तथैवातिथिशिष्टकम्।। १०४

अमृतं तद्विजानीयाद्द्विजानां भोजने वरम्।
यज्ञशेषं द्विजातीनां भोज्यमित्याह पूर्वजः।। १०५

सुसंशितव्रतानाञ्च मुनीनां ब्रह्मचारिणाम्।
पावनं विष्णुनैवेद्यमिति पूर्वजदर्शनम्।। १०६

विष्णोर्निवेदितं चान्नं देयं भक्तेभ्य एव च।
वैश्वदेवं तथा कुर्याच्छ्राद्धकर्मादिकं तथा।। १०७

## पानीयम्

शीतं पर्युक्षितं तोयं गन्धद्रव्यैश्च वासितम्।
दद्याद्यन्मन्त्रवत्तद्धि पानीयं नाम विग्रहः।। १०८

## मुखवासः

केवलं वाऽथ ताम्बूलं कर्पूरैलादिभिर्युतम्।
यत्प्रदद्यात्तु मन्त्रेण मुखवासं हि तं विदुः।। १०९

## होमः

आलयाद्दक्षिणे वापि आग्नेय्यां वा महानसे।
औपासनाग्निं सभ्यं वा कल्पयित्वा यथाविधि।। ११०
नित्याग्निं तत्र सन्न्यस्य आघारोक्तविधानतः।
तमग्निं गोपयित्वा तु नित्यं तस्मिन् समाहितः।। १११
'अतो देवा' दिभिस्सार्ध मूर्तिहोमं समाचरेत।
अथवा केवलं च्छुल्ल्यामग्निं संसाध्य मन्त्रतः।। ११२
परिस्तीर्य हुनेदग्नौ चरुणा च घृतेन च।
(गोघृतेन सुहोतव्यममिश्रेण प्रयत्नतः)।। ११३
तदालयगतेभ्यश्च पार्षदेभ्यस्समन्ततः।
केवलं मूर्तिमन्त्रैर्वा तत्तन्मन्त्रैश्च वा हुनेत्।। ११४
सन्नेऽग्नौ उक्तवत्साध्य पुनर्होमं समाचरेत्।
प्रज्वाल्याग्निं परिस्तीर्य कुर्यादौपासनाग्निवत्।। ११५
दक्षिणान्ते बलेः पूर्वमेवं स्याद्धोमविग्रहः।

## बलिः

पुष्पान्नाध्यैः त्रिकालं यत्संसाध्य विधिना बलिम्।। ११६
समावाह्य च देवेशं दीपाद्दीपमिवाच्युतम्।
परीत्य मन्दिरं पश्चात् शक्तिं तां तत्र चार्पयेत्।।११७
बलिविग्रह उद्दिष्टस्स तु सर्वबलप्रदः।
एवं हि बलिहोमाभ्यां सप्तविंशतिविग्रहैः।। ११८
यत्कृतं पूजनं तत्स्यात् अमूर्तान्मूर्तपूजनम्।
तस्मात्तच्छ्रेष्ठमित्याह भगवान् पूर्वजः प्रभुः।। ११९

## उद्वासनम्

पूजान्ते स्तुतिमन्त्रैश्च देवेष्टस्यानुमोदनम्।
भक्तिनिर्भरया बुद्ध्या स्यादुद्वासनविग्रहः।। १२०
द्विरुक्तविग्रहाणान्तु नार्थभेदः स्थलान्तरे।
प्रणामादिविसर्गान्ताः क्रमेणैवं प्रकीर्तिताः।। १२१
द्वात्रिंशद्विग्रहाः सम्यक् पूजार्थं परमेष्ठिना।

## साधारणाः त्रयो विग्रहाः

प्रणामावाहनोद्वासाः त्रयस्साधारणाः स्मृताः।। १२२
आद्यन्तयोः प्रयोक्तव्या विग्रहेषु विजानता।

## सप्तविंशात्यादिभेदेन विग्रहगणनम्

ऊर्ध्वमावाहनाच्चापि होमादर्वाग्यथाक्रमम्।। १२३
पूजनं तत्समुद्दिष्टं सप्तविंशतिविग्रहम्।
बलिहोमौ यदि स्यातां नवविंशतिविग्रहम्।। १२४
प्रणामाद्यर्घ्यपर्यन्तं तथाऽप्याचमनान्वितम्।
पूजनं यत्क्रमेणैव ते त्रयोदशविग्रहाः।। १२५
हविर्यत्र न विद्येत तत्रैतदिति कीर्तितम्।
पाद्याद्यर्घ्याचमनान्ता ये प्रोक्ता अष्ट विग्रहाः।। १२६
स्नपनस्यान्तरे तेषां विनियोगः प्रकीर्तितः।
पुष्पाद्याचमनान्तास्तु प्रोक्ताः षड्विग्रहास्तथा।। १२७
आधारेऽग्न्यर्चनायान्तु विग्रहैः षड्भिरर्चनम्।
पत्रं पुष्पं फलं तोयमङ्कुरं बीजमेव वा।। १२८
सङ्कल्प्य चार्पयेद्भक्त्या 'विष्णवे नम' उच्चरन्।
द्विविग्रहमिति प्रोक्तं नमस्कारपुरस्सरम्।। १२९

देवागारं तथा बिम्बं दृष्ट्वा वा चिन्त्य वा हृदि।
यत्र क्वाप्यञ्जलिं कुर्यादेकविग्रहपूजनम्।। १३०
भक्तैः प्रयोज्यमेकद्विविग्रहाभ्यान्तु पूजनम्।
न तौ प्रयोज्यौ प्रत्येकं स्थानार्चनविधौ क्वचित्।। १३१
एवमेषां प्रयोगस्स्यान्नान्यथा पूजनं भवेत्।
देशकालानुरूपैश्च द्रव्यैरपि विधानवित्।। १३२
उपचारैश्च सङ्ख्यातैरनुकूलैश्च पूजयेत्।
राजवत्पूजयेद्देवं यजमानस्तु भक्तितः।। १३३
अनिन्द्याभिः क्रियाभिश्च वस्तुभिश्शुचिभिर्बुधः।
दुर्लभे पूजनद्रव्ये तत्स्थाने कल्पयेज्जलम्।। १३४
प्लोतवस्त्रस्य चालाभे प्लोतं पुष्पेण कल्पयेत्।
मन्त्रणां स्खलने कुर्यात्स्वमूर्त्याऽष्टाक्षरेण वा।। १३५
पुष्पं सुगन्धमम्लानमपि बेरादपोह्य तु।
पीठ एव सुसन्न्यस्य प्रतिसन्ध्यं समर्चयेत्।। १३६
प्रातरेव तु तत्सर्वं शोधयित्वा विसर्जयेत्।
कौतुकध्रुवयोः पीठे पुष्पन्यासं विधीयते।। १३७
एकबेरार्चनायान्तु कौतुकोक्तं ध्रुवे चरेत्।
अर्चायामौत्सवे वापि लौकिकेष्वितरेष्वपि।। १३८
पुष्पन्यासस्तु पीठान्ते पूजा पाद्यादिका स्मृता ?।

## प्रभुतम्

प्रभूतदानपूजेयं काम्या नैमित्तिकी मता।। १३९
तण्डुलैरेकजातीयैः द्रोणमानाधिकैश्शुभैः।
सिद्धं प्रभूतं भक्तं स्याच्छ्द्धाभक्तिपुरस्कृतम्।। १४०

व्यञ्जनैः वहुभिः शस्तैः नानायोगरसान्वितैः।
सुपाकरम्यैः सक्षारैः सुगन्धैर्मितसैन्धवैः।। १४१
रसालदधिसूपैश्च पानीयेनापि संयुतम्।
निवेदनं मन्त्रवत्स्यात् प्रभूतं नाम विग्रहः।। १४२
नैमित्तिकं भवेदन्ते प्रदातव्यं प्रयत्नतः।
उत्सवान्ते स्नापनान्ते राज्ञो जन्मदिनेऽपि च।। १४३
यजमानस्य जन्मर्क्षे विष्णुपञ्चदिनेऽपि च।
कृत्तिकादीपदानान्ते तथाऽऽग्रयणपूजने।। १४४
पुण्यर्क्षेष्वपि चान्येषु कर्तव्यं कामदायि तत्।
नित्यपूजाविधावन्ये कर्तव्या विग्रहास्स्मृताः।। १४५
नैमित्तिकमतोऽन्यद्यत्प्राप्तं कृत्वा क्रमेण तु।
नित्यकर्मसु कालैक्ये पश्चान्नित्यं समाचरेत्।। १४६
प्रतिद्रव्यं विशेषेण घण्टां सन्ताड्य पूजयेत्।
(हविः प्रदानकाले तु बहिर्घण्टां सुताडयेत्
बलिकाले होमकाले धूपादौ तन्तुबन्धने
आवाहनेऽङ्कुरारोपे घण्टां वाद्यानि घोषयेत्)
उत्तमे मध्यमे चैव पूजने सम्प्रकीर्तिते।। १४७
पूजनारम्भकाले च स्नपने च विधानतः।
घण्टानादावसाने तु शङ्खध्वानंञ्च कारयेत्।। १४८
चतुर्विधैस्तथाऽन्यैश्च वाद्यैस्सम्यक् प्रघोषयेत्।
आनीयते यदा पक्वं हविः सिद्धं महानसात्।। १४९
शङ्खघोषो विशेषेण तस्मिन् काले प्रकीर्तितः।
हविर्निवेदने काले शङ्खघोषपुरस्सरम्।। १५०

वाद्यघोषोऽत्र विहितः बलिवाद्यं बलौ स्मृतम्।
नित्ययात्राबलौ सम्यक् सर्ववाद्यसमायुतः।। १५१
तूर्यघोषस्तु कर्तव्यो भिन्नघोषैरनेकशः।
बल्युद्धरणवेलायां पूजान्ते शङ्खघोषणम्।। १५२
घोष एवं यथाकालमन्यकालेषु चेष्यते।

## प्रबोधनवाद्यम्

उषस्यापि च वाद्यैश्च घोषयेच्छङ्खपूर्वकम्।। १५३
प्रबोधनीयं नाम स्याद्वाद्यं तत्काल एव तु।
प्रारभेतार्चनां प्रातरिति पूर्वजशासनम्।। १५४

## अर्चनद्वैविध्यम्

अमूर्तेति समूर्तेति द्विविधा साऽर्चना मता।
अमूर्ताऽग्न्याहुतिः प्रोक्ता समूर्ता बिम्बपूजनम्।। १५५
समूर्तामूर्तयोर्मुख्यं समूर्तं स्यात्तु पूजनम्।
विशेषभक्तिहेतुत्वाच्चक्षुषोः प्रीतिकारणात्।। १५६
रूपसन्दर्शनाद्भक्तिर्मनसोऽतीव जायते।
तथा भक्त्या कृता पूजा ऐहिकामष्मिकप्रदा।। १५७
आलयार्चा गृहार्चेति समूर्तार्चा द्विधा पुनः।
गृहार्चा तु गृहे कार्या गृहस्थेन विधानतः।। १५८
आलयार्चाविधिस्सोऽयं संहितासु प्रकीर्त्यते।
कूर्चेऽप्सु बिम्बे हृदये ध्यात्वैवं देवमर्चयेत्।। १५९

## विष्णुध्यानम्

पद्ममध्ये स्थितं देवं विष्णुं प्रणवरूपिणम्।
शुकपिञ्छाम्बरधरं पीतवर्णं चतुर्भुजम्।। १६०

श्रीवत्सवक्षसं ध्यायेत्किरीटादिविभूषितम्।
ध्यात्वाऽऽत्मानन्तु तद्रूपं पश्चाद्देवं समर्चयेत्।। १६१

## अर्चकमहिमा

नाविष्णुरर्चयेद्विष्णुं नाविष्णुः ध्यायते हरिम्।
तस्माद्विष्णुः स्वयं भूत्वा प्रयतात्मा तु पूजयेत्।। १६२

## पूजकावस्थानम्

षडङ्गुलादहीने तु बिम्बे स्याद्बिम्बपूजनम्।
आसीनो वा स्थितो वापि पूजनं सम्यगाचरेत्।। १६३
यथोचितं समालोच्य पार्श्वयोरुभयोरपि।
न प्रतीपं समाविश्य नित्यपूजां समाचरेत्।। १६४

## आसनभेदाः

स्नपनं तु प्रतीपं वा समाविश्यापि कारयेत्।
आसीनपूजनायान्तु एकजानुक्रमाच्चरेत्।। १६५
वामे चेदासनं वामजानुं भूमौ समाश्रयेत्।
दक्षिणाङ्घ्रिं भुवि न्यस्य सव्यं जानु समुद्धरेत्।। १६६
दक्षिणे विपरीतं स्यादेवमेव तदासनम्।
पादाङ्गुलीर्जानुनी च भूमौ न्यस्य समाश्रितः।। १६७
स्नपने पूजयेद्देवं स्थितो वापि यथोचितम्।
भोजने मूर्तिहोमे च कुर्यादुत्कुटिकासनम्।। १६८
पादौ भूमौ तु सन्न्यस्य जानुनी तु समुच्छ्रिते।
कृत्वाऽऽसीताऽसने सम्यक् तत्स्यादुत्कुटिकासनम्।।१६९
भागङ्गुलोच्छ्रये पीठे भवेदुत्कुटिकासनम्।
गृहस्थो ब्रह्मचारी च आलयार्चां प्रयोजयेत्।। १७०

## गृहार्चावैशिष्ट्यम्

आत्मार्थमपि गुर्वर्थमन्यार्थञ्चापि पूजयेत्।
परार्थपूजनं कुर्वन् काले निर्वर्त्य चार्चनम्।। १७१
आत्मार्थञ्च पुनः पूजां कृत्वा समनुमानयेत्।
आत्मकृत्यं न लुप्येत नित्यकर्मार्चनं हरेः।। १७२

## हरिस्मरणमहिमा

विहिताकरणे चापि प्रायश्चित्तं हरिस्मृतिः।
यदि प्रमादाच्च्यवते कर्म यज्ञे प्रकुर्वताम्।। १७३
तद्विष्णुस्मरणात्सद्यः भवेत्पूर्णमिति श्रुतिः।
ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु।। १७४
प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः।
प्रातर्निशा च मध्याह्ने सन्ध्ययोस्सर्वदा स्मरन्।। १७५
नारायणमवाप्नोति सद्यः पापक्षयं नरः।
किं पुनर्बैदिकं कर्म चाचरन् शक्तितस्स्मरन्।। १७६
योऽर्चयेद्विष्णुमेवं स्यात्कृतकृत्यो भवेद्द्विजः।
सर्वेऽपि वैदिकाचारास्सर्वे यज्ञास्तपांसि च।। १७७
विष्णुपूजाविधेर्भेदास्तत्कर्मफलदो हरिः।
तस्मात्तत्पूजनं कुर्वन् स्वकृत्यान्न च्युतो भवेत्।
मितभोजी जितक्रोधः ऋजुराचारसंयुतः।। १७८
मन्त्रकल्पविशेषज्ञो भक्तिमान् नियतेन्द्रियः।
शुद्धात्मा सत्यसन्धश्च स्नानशीलश्च योगवित्।। १७९
एवं गुणसमायुक्तः पूजकः शस्यते बुधैः।

## दशाङ्गं पूजनम्

पूजार्थभोगपर्याप्तभूमिर्देवालयस्तथा।
बिम्बञ्च लक्षणोपेतं पूजकस्यात्मसंस्कृतिः।। १८१
ध्यानमावाहनञ्चैव मन्त्रो द्रव्यं तथैव च।
विहितस्सम्प्रयोगश्च भक्तिरेभिः पुरस्कृता।। १८२
एभिर्दशभिरङ्गैस्तु सम्पूर्णं पूजनं भवेत्।
एवमेव विधानेन कारयेद्योऽर्चनं हरेः।। १८३
सर्वैः सम्बन्धिभिः पुत्रैस्सहैवाभूतसम्प्लवम्।
विहृत्य पुण्यलोकेषु विष्णोस्सायुज्यमाप्नुयात्।। १८४

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे उपचारस्वरूपकथनं नाम
द्वाविंशोऽध्यायः

-------

अथ त्रयोविंशोऽध्यायः

-------

## जातिलक्षणकथनम्

ऋषय ऊचुः –

'नमस्ते भगवन् ब्रह्मन् नमस्ते ब्रह्मणस्सुत!।
त्वत्प्रसादशेषेण श्रुतं विष्णोस्समर्चनम्।। १
कथं पञ्चविधा पूजा विष्णोरमिततेजसः।
आलयार्चाविधौ लोके के मुख्या अधिकारिणः।। २
आदेयं हि धनं केभ्यो विष्णोराराधनाय वै।
विस्तरेणैतदस्माकं वक्तुमर्हसि सुव्रत'।। ३

भृगुरुवाच –

अर्घ्यान्तमर्चनं प्रोक्तं हविरन्तंञ्च पूजनम्।
होमान्तं शान्तिकं ज्ञेयं बल्यन्तं पौष्टिकं भवेत्।। ४
शान्तिपुष्टिकरं मुख्यं मुखवासान्तमर्चनम्।
(नित्यं नैमित्तिकं वापि होमबल्यन्तमर्चनम्)
एवं पञ्चविधा पूजा विष्णोरमिततेजसः।। ५
निर्माणे देवगेहस्य प्रतिमाकल्पनेऽपि च।
स्थापने देवदेवस्याधिक्रियन्ते त्रिवर्णजाः।। ६

## चत्वारो वर्णाः

ब्राह्मणाः क्षत्रियाः वैश्यास्त्रयस्त्रैवर्णिकास्स्मृताः।
सिसृक्षोब्रह्मणो जाता मुखादुरस ऊरुतः।। ७
पद्भ्यं शूद्रास्तु सम्भूताश्चतुर्थास्समुदाहृताः।
भक्तिमन्तस्तु ये शूद्रास्तेऽपि स्युरधिकारिणः।। ८
नाऽऽददीत धनं किञ्चित् प्रतिलोमात्कदाचन।
हरेराराधनार्थन्तु नाभक्तान्नानुलोमकात्।। ९
अनुलोमात्तु सङ्ग्राह्यं भक्ताद्देवार्चनाय तु।
पापरोगार्दितानाञ्च ग्राह्यं भक्तिमतां धनम्।। १०

## भक्तिमहिमा

अनेकजन्मस्वभ्यासाद्विष्णौ भक्तिः प्रजायते।
येषान्तु तादृशी भक्तिः ते विप्राः कृतिनः स्मृताः।। ११

## अनुलोमलक्षणम्

अतः परं प्रवक्ष्यामि अनुलोमादिकान् क्रमात्।
धर्मांश्च तेषां वृत्तिञ्च यद्यद्राजा नियोजयेत्।। १२

द्वावेतौ शूद्रयोनी तु सञ्ज्ञौ परिकीर्तितौ।
सूतश्च रथकारश्च सूतावित्युपलक्षितौ।। १३

-----

जातो ब्राह्मणकन्यायां नृपाच्च विधिपूर्वकम्।
स सूत इति निर्दिष्टः प्रतिलोमेषु पूजितः।। १४
सर्वेषां प्रतिलोमानामेष धर्मः सनातनः।
वेदानर्हास्तथाऽप्येते सूता धर्मार्थबोधकाः।। १५

-----

ब्राह्मण्यां क्षत्रियाज्जातोऽविधिना रथकारकः।
वृत्तिस्तु शूद्रस्येव स्याद्विजत्वं प्रतिषिद्ध्यते।। १६
वाहको वाहनानाञ्च तेषाञ्च परिचारकः।
ईदृशी वृत्तिरेतेषां शूद्राणामिव वा भवेत्।। १७

-----

ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते।
वन्दित्वञ्चापि सर्वेषां राज्ञां प्रेष्यत्वमेव च।। १८
तेषां वृत्तिश्च संस्पृश्याः शूद्रैश्शूद्रान्नवर्जिताः।
जीवन्ति लोके सर्वत्र चरमाणा यतस्ततः।। १९

-----

ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चण्डाल उच्यते।
सीसमाभरणं तेषां कार्ष्णायिसमथापि वा।। २०
कण्ठे वार्ध्रा झल्लरीश्च कक्षे चाबद्ध्य बाह्यतः।
चरन्ति ते मलं ग्रामादपोहन्ति विशेषतः।। २१
ग्रामाद्बहिश्च नैर्ऋत्यां सङ्घशो निवसन्त्युत।
आमध्याह्नान्निवर्तन्ते सर्वत्र मलहारकाः।। २२

मध्याह्नवेलामालक्ष्य ग्रामं न प्रविशन्ति ते।
वध्या यदि विशेयुस्ते नो चेद्राजा तु किल्बिषी।। २३
भ्रूणहत्यामवाप्नोति नास्ति तत्र विचारणा।

-----

विधिना नृपकन्यायां ब्रह्मणाज्ञातपुत्रकः।। २४
सवर्णनामा स ख्यातः अनुलोमेषु पूजितः।
बाह्मणश्च स विज्ञेयः कर्मणाऽऽथर्वणः स्मृतः।। २५
रथमश्वान् हस्तिनो वा वाहयेत्स नृपाज्ञया।
सेनापत्यं चमूनां वा स कुर्याद्यावदायुषम्।। २६

-----

विप्रात् क्षत्रियकन्यायां जातस्त्वविधिना सुतः।
अभिषिक्तो नाम भवेत् पठेद्वै कायवेधनम्।। २७
आयुर्वेदमथाष्टाङ्गं तत्रोक्तं धर्ममाचरेत्।
पोषणं प्राणिनां नित्यं पठेद्वा भूतमन्त्रकम्।। २८
दयावान् सत्यवादी च भवेदेष विशेषतः।
ज्यौतिषं गणितं वापि जीवनार्थं प्रकल्पयेत्।। २९

-----

क्षत्रियात्क्षत्रकन्यायां गूढजातः प्रमादतः।
स च क्षत्रिय एव स्यान्नाभिषेकं समर्हति।। ३०
भोजो नाम्ना राजवृत्तिमुपजीवेत्स सर्वतः।
राज्ञो नियुक्तं कुर्याद्वै शासनं पट्टबन्धनम्।। ३१

-----

राज्ञः पुनर्भ्वां जातश्च नृपनामा भविष्यति।
स भोजतुल्यवृतिः स्यात्कानीनोऽपि नृपस्स्मृतः।। ३२

सुशुद्धो नृपतिः रव्यात एवमन्ये स्वयोनिजाः।

-----

वैश्यात् क्षत्रियकन्यायां जात आयोगवः स्मृतः।। ३३
तन्तुवायाः भवन्त्येते वस्त्रकांस्योपजीविनः।
तस्यां चौर्यात्तथा जातः पुलिन्दो नाम वै सुतः।। ३४
आरण्यवृत्तिकस्स स्याद्दुष्टसत्त्वविधानतः।

-----

शूद्रात् क्षत्रियकन्यायां जातः पुल्कस उच्यते।। ३५
मधुविक्रयकृत्स स्यात्सुरां वृक्षेभ्य आहरेत्।
कृतकानां सुराणाञ्च विक्रेता पाचको भवेत्।। ३६
तस्यां जातश्चौर्यवृत्त्या अस्पृश्यो वेलवाभिधः।
नर्तको गायको वा स भवेज्जृम्भकवृत्तिकः।। ३७

-----

वैश्यायां विप्रसंसर्गाज्जातो ह्यम्बष्ठ उच्यते।
कक्ष्याजीवी भवेदेष तथैवाग्नेयनर्तकः।। ३८
ध्वजविश्राविको वाथ विचरेच्च यतस्ततः।
तस्यां वै चौर्यवृत्त्या तु जातः स्यात्कुम्भकारकः।। ३९
कुलालवृत्त्या जीवेच्च नापितश्च भवेत्तथा।
सूतके प्रेतके चापि दीक्षायां चौलकर्मणि।। ४०
केशानां वपनं कुर्यान्नाभेरूर्ध्वं यतस्ततः।
नृपाज्जात इभो नाम तस्यामेव यथाक्रमम्।। ४१
श्रेष्ठित्वं समवाप्नोति महो नाम्ना स हि स्मृतः।
स वैश्यवृत्त्या जीवेत्तु न क्षात्रं कर्म चाचरेत्।। ४२

तस्यां तस्माच्चौर्यजातो मणिकार इति स्मृतः।
मणीनां रञ्जनं कुर्यान्मुक्तानां वलयक्रियाम्।। ४३
प्रवालानां सूत्रकर्म शङ्खानां वलयक्रियाम्।

-----

वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः।। ४४
अजानां पालनं कुर्यान्महिषाणां गवामपि।
विक्रीणन् सरसं तेषां वैश्यवृत्त्या चरेच्च वै।। ४५
तस्यां तस्मात् चौर्यजातो लवणक्रयकः स्मृतः।
स एव चाक्रिको ज्ञेयः तैलपिण्याकजीवनः।। ४६
तदन्नं भुञ्जते नैव शूद्राश्चापि यथाक्रमम्।
स्पृश्योऽयमितरेषां स्यादृते विप्रोत्तमान् सदा।। ४७

-----

विप्राज्जातस्तु शूद्रायां स्मृतः पारशवस्तु सः।
भद्रकालीं पूजयेत्स पूजावृत्त्या हि वर्तनम्।। ४८
चित्रकर्माङ्गविद्यां वा जीवेन्मर्दलवृत्तिकः।
तस्यां वै क्षत्रियाज्जातो .... .... .... ।। ४९

.... .... .... .... .... ।
शूद्रायां वैश्यसंसर्गाज्जातश्चूचुक उच्यते।। ५०
पण्यमाजीवमाजीवेद्वेणुकाष्ठतृणादिकम्।
पर्णं वापि समारोप्य क्रमुकानां पटैर्युतम्।। ५१
तस्यां तस्मात् चौर्यजातो ज्ञेयः कर्मकराभिधः।

-----

(शूद्रायां शूद्रसंसर्गाज्जातः शूद्र इति स्मृत्यः)?।। ५२
चौर्यान्मालवको ज्ञेयः अश्वानां तृणहारकः।

चूचुकादेव विप्रायां जातः क्षत्ता स्मृतः सुतः।। ५३
तस्मादेव क्षत्रियायां जातस्स्यान्मत्स्यजीवनः।
तस्माज्ञातस्तु वैश्यायां भवेत्सामुद्रजीवनः।। ५४

-----

अम्बष्ठादपि विप्रायां जातो नाविक उच्यते।
नावं संवाहयेत्सोऽपि समुद्रस्य च पारगः।। ५५
समुद्रमध्यमाजीवेन्मत्स्यादिक्रयविक्रयैः।
अम्बष्ठात् क्षत्रियायान्तु जातो नापित उच्यते।। ५६
कुर्यात्स वपनं रोम्णामधोनाभेर्विशेषतः।

-----

मागधाद्विप्रकन्यायां जातो पोण इति स्मृतः।। ५७
तस्माज्ञातः क्षत्रियायां कर्मकार इति स्मृतः।

-----

वैदेहकात्तु विप्रायां जातस्स्याच्चर्मजीवनः।। ५८
तस्माज्ञातः क्षत्रियायां सूतकश्चार्मिकः स्मृतः।

-----

आयोगवात्तु विप्रायां जातस्स्यात्ताम्रजीवनः।। ५९
तस्माज्ञातः क्षत्रियायां उच्यते खनकस्तथा।

-----

खनकात् क्षत्रियायान्तु जात उद्बन्धकः स्मृतः।। ६०
वस्त्रनिर्णेजकस्स स्यात् स्पृश्योऽस्पृश्यश्च स स्मृतः।
पुल्कसाद्विप्रकन्यायां जातो रजक उच्यते।। ६१
तृणान्तरेण सम्भाष्यः नोच्छिष्टः प्रोक्षयेद्बुधः।

-----

चण्डालाद्विप्रकन्यायां जातः श्वपच उच्यते।। ६१

श्वमांसभक्षणं तस्य चार्मिकं वारवाणिकम?।
श्मशाने च तथा वासः अमेध्योद्वासनं तथा।। ६३

-----

असङ्ख्या एवमाद्यास्तु जातयः स्मृतिपूजिताः।
न शक्यन्ते हि केनापि वक्तुं वर्षशतैरपि।
ज्ञात्वार्हादाददीतार्थं पात्राद्विष्णवर्चनाय वै।। ६४

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे जातिलक्षणकथनं नाम
त्रयोविंशोऽध्यायः।

-----

अथ चतुर्विंशोऽध्यायः

-----

## नवविधार्चनम् - नित्यार्चनविधिश्च

अथातस्सम्प्रवक्ष्यामि नवधा पूजनक्रमम्।
उत्तमं मध्यमञ्चैव कनिष्ठञ्चानुपूर्व्यशः।। १
एकैकन्तु त्रिधा कृत्वा नवधा भेद ईरितः।
त्रिकालबलिसंयुक्तैः विग्रहैस्सार्धयामकैः।। २
माल्यैर्दिव्यैश्च गन्धैश्च धूपैर्दीपैस्तथोत्तमैः।
महार्घरत्नसंयुक्तैः मकुटादिविभूषणैः।। ३
नानावर्णाम्बरैश्चित्रैः चित्रकक्ष्यासमन्वितैः।
हविर्भिरुत्तमैश्चपि मूर्तिहोमैस्त्रिकालकैः।। ४
समस्तपरिवाराणां मूर्तिमन्त्रहुतादिभिः।
पानीयैर्मुखवासैश्च गन्धोत्तमसुवासितैः।। ५

योषितां नृत्तगीतैश्च पञ्चगान्धर्वसंयुतैः।
वीणावेणुमृदङ्गाद्यैः वाद्यैर्गेयैरनेकशः।। ६
स्तोत्रैश्च देवदेवस्य विजयक्रीडनक्रमैः।
पुराणोक्तैश्च गाधाभिरसंङ्ख्याभिस्समायुतम्।। ७
पूजनं देवदेवस्य विष्णोस्स्यादुत्तमोत्तमम्।

-----

हविषा मध्यमेनापि बलिना मध्यमेन च।। ८
पूर्ववन्मूर्तिहोमेन अर्धयामार्चनेन च।
नित्यं हि पूजनं विष्णोरेतदुत्तममध्यमम्।। ९

-----

विग्रहैरेव तावद्भिः हविषा मध्यमेन च।
अर्धयामेन हविषा मध्यमेनाधमेन वा।। १०
द्विकालमूर्तिहोमेन पूजनञ्चोत्तमाधमम्।

-----

विग्रहैरेव तावद्भिः हविषा मध्यमेन च।। ११
मध्याह्ने वाऽन्त्यकाले वा हविषा चाधमेन च।
द्वारालयदिगीशानामनपायिगणस्य च।। १२
गर्भालयस्थदेवानां वीशशैषिकयोरपि।
मूर्तिहोमसमायुक्तं मध्याह्ने प्रातरेव वा।। १३
नित्यं यत्पूजनं विष्णोरेतत्स्यान्मध्यमोत्तमम्।

-----

विग्रहैरेव तावद्भिः हविषा चाधमेन च।। १४
त्रिकालमर्धयामेन होमेनापि च पूर्ववत्।
उक्तं यत्पूजनं तद्धि हरेर्मध्यममध्यमम्।। १५

-----

विग्रहैरेव तावद्भिः यथालब्धैश्च व्यञ्जनैः।
हविषा चाधमेनापि मध्यरात्रार्चनं विना।। १६
वीशशैषिकहोमेन सह वा विधुरेण वा।
पूजनं यत्समुद्दिष्टं तद्विष्णोर्मध्यमाधमम्।। १७

-----

विग्रहैस्सप्तविंशद्भिः हविषा चाधमेन च।
एकेन व्यञ्जनेनापि द्वाभ्यं वा मुनिसत्तमाः।। १८
युक्तं तद्दधिर्सीपभ्यां अधमोत्तमपूजनम्।

-----

विग्रहैस्सप्तविंशद्भिः हविषा चाधमेन च।। १९
एकेन व्यञ्जनेनापि मधुरेण फलेन वा।
मध्याह्न एककाले तु दधिसर्पिस्समन्वितम्।। २०
अधमे मध्यमं प्रोक्तमेतद्वै पूजनं हरेः।

-----

विग्रहैस्सप्तविंशद्भिः हविषा चाधमेन च।। २१
चरुणा वा समायुक्तं यत्रयोदशविग्रहैः।
पूजनं तद्यथालाभलब्धैस्तदधमाधमम्।। २२

-----

मुखवासं यथालाभमुत्तमादिषु कल्पयेत्।
द्रव्यमुत्तमपूजायां नागुणं क्वचिदाहरेत्।। २३
उत्तमं पूजनं कार्यमनुत्कृष्टेऽपि नैत्यके।

## आलये त्रिकालार्चनम्

देवालयेषु प्रशस्तं त्रिकालं पूजनं भवेत्।। २४

एककालं द्विकालं वा यथेष्टं स्याद्गृहार्चने।

## अर्चनकालव्यवस्था

अर्कोदयाच्चामध्याह्नात्तथैवाऽस्तमयाद्रवेः।। २५
कालस्स्यादुत्तमे यामो मध्यमे पञ्च नाडिकाः।
यामार्धमधमे प्रोक्तः पूजने मधुघातिनः।। २६
(अह्नि द्वादशनाड्यस्स्युः रात्रौ चेद्दश नाडिकाः।
पञ्च पञ्चैव घटिकास्सन्ध्याकाल उदाहृतः ?।।)
उत्तमे पूजनाकालो दश पञ्च च नाडिकाः।
मध्यमे पूजनाकालः एकयाम उदीरितः।।
अधमे नाडिकाः पञ्च तिस्रो नाड्योऽधमाधमे।
उक्तसन्ध्यादिकालस्तु विज्ञेयस्त्वर्धयामकः।।
पूजनं सर्वदा सन्ध्याकालानतिक्रममाचरेत्।
सङ्गीतादिप्रवृत्तन्तत् सन्ध्यन्तरमथाचरेत्।।
उत्तमादिषु चैतेषु यथायोग्यं विधानवित्?)

## नित्यार्चनाविधिः

अथातस्सम्प्रवक्ष्यामि नित्यपूजाविधिक्रमम्।
उद्घाटयेद्गोपुरस्य कवाटावरणोदये।। २७
प्रविश्यान्तर्ध्वजस्थानात् देवदेवं प्रबोधयेत्।
भेरीपणवशङ्खादिसर्ववाद्यानि घोषयेत्।। २८
आलयेऽन्तर्बहिश्चैव मार्जन्या शोधयेच्छुचि।
शुद्धोदकैः प्रोक्षयेच्च गोमयेनोपलेपयेत्।। २९
कुर्युः पदार्थिनस्त्वेवमेष नित्यो हितो विधिः।

## आलयप्रवेशादिः

अर्चको यजमानश्च पाचकाः परिचारकाः।। ३०
स्नात्वा स्नानविधानेन यथाकालं समाहिताः।
समाप्य नित्यकृत्यानि यथोक्तानि यथार्हतः।। ३१
गच्छेयुरालयं पश्चादाचार्यस्त्वथवाऽर्चकः।
शिष्यान् स्नातान् नियुञ्जीत स्वस्वकर्मस्वतन्द्रितान्।। ३२
द्वारसंरोधनं कुर्यात्ततो यवनिकामुखात्।

## दीपारोपणम्

शिष्यस्तूदीपयेद्दीपान् नित्यदीपादखण्डितात्।। ३३
घृतेनापूरयेद्दीपान् कुर्यात्प्रज्वलितान् कृतान्।

## विश्वरूपसेवाप्रकारः

नीत्वा यवनिकां देवस्याऽऽदर्शं कन्यकां गजम्।। ३४
तुरगं गायकान् विप्रान् पुरतः स्थाप्य दर्शयेत्।
कर्पूरदीपेनैतद्धि विश्वरूपप्रदर्शनम्।। ३५
सद्यस्सवत्सां गां दुग्ध्वा क्षीरं धारोष्णमादरात्।
आनीय शर्करायुक्तं देवेशाय निवेदयेत्।। ३६

## मात्रादानम्

मात्रां दद्यादर्चकाय कुर्याद्यवनिकां पुनः।

## शुद्धिः

तीर्थमानीयार्चनार्थं पात्राणि परिशोधयेत्।। ३७
कुर्यात्पुण्याहमाचार्यः पञ्चगव्यञ्च साधयेत्।
गर्भालयादि सर्वत्र प्रोक्षणैः प्रोक्षणं चरेत्।। ३८

पात्रशुद्धिं ततः कुर्याच्छोषणाद्यैस्ततः क्रमात्।

## भूतशुद्धिः

आत्मनो भूतशुद्धिञ्च योगमार्गेण कारयेत्।। ३९
बिम्बशुद्धिं ततः कुर्यात्-देवदेवस्य पादयोः।

## मन्त्रस्नानासने

पुष्पाणि न्यस्य मन्त्रेण समादाय तु कौतुकम्।। ४०
अथवा स्नापनं बेरं स्नानपीठे निधापयेत्।
स्नापयेत्पञ्चकलशस्नपनोक्तविधानतः।। ४१

## अलङ्कारासनम्

अलङ्कारासनं पश्चात् सङ्कल्प्य विहितांस्तदा।
समर्पयेच्च विधिना उपचारान् समाहितः।। ४२

## भोज्यासनम्

भोज्यासनं कल्पयित्वा हविः पाकोक्तमार्गतः।
दध्यन्नमथ मुद्गान्नं ससूपं व्यञ्जनैर्युतम्।। ४३
शुद्धान्नं सघृतं प्रातः पायसञ्च निवेदयेत्।

## मध्याह्नार्चनम्

मध्याह्ने चोपचारांश्च प्रातरुक्तान् समर्पयेत्।। ४४
दर्शयेद्धटदीपञ्च पाद्यार्घ्याचमनानि च।
तिन्त्रिणीरससंयुक्तं तैलार्द्रं चित्रमोदनम्।। ४५
हविश्शुद्धञ्च चोष्यादि पञ्चभक्ष्यसमन्वितम्।
सोपदंशं घृतगुडं देवेशाय निवेदयेत्।। ४६
ततः परं गुडापूपं घृतं सूपञ्च पायसम्।
नानाव्यञ्जनसंयुक्तहवींषि च निवेदयेत्।। ४७

## सायमर्चनम्

पश्चात् सायाह्नसमये सम्भाराहरणं चरेत्।
सन्ध्यामुपास्य विधिना आलयं सम्प्रविश्य च ।। ४८
तुलसीपुष्पमालाभिरलङ्कुर्यात्प्रभुं हरिम्।
कदलीबृहतीकारवल्लिकाद्यैस्सुपाचितैः।। ४९
शाकैस्सतिन्त्रिणीकैश्च पक्वमन्नं तथा हविः।
घृताक्तमन्नञ्चापूपं माषक्लृप्तं निवेदयेत्।। ५०
पश्चात् प्रक्षाल्य पात्राणि पूजार्थानि यथाविधि।
नवेनापूर्य तोयेन सङ्कल्प्यार्चनमारभेत्।। ५१
अष्टोत्तरशतेनोपचाराणां देवमर्चयेत्।
आलयेऽन्तर्बहिश्चैव दीपानुद्दीपयेत्क्रमात्।। ५२
मृणालसूक्ष्मसूक्ष्मैश्च तन्तुभिः क्लृप्तवर्तिकान्।
दीपयेद्ध्वजदण्डादिसमीपे ज्वलनान्तरान्।। ५३
वेदसूत्रपुराणादीन् श्रावयेद्देवसन्निधौ।
नृत्तं गीतञ्च वाद्यानि यथावित्तं प्रकल्पयेत्।। ५४

## हविर्दानप्रकारः

भोज्यासने तु क्षीरान्नं द्रोणतण्डुलपाचितम्।। ५५
स्वर्णादिपात्रेष्वादाय अभिघार्य घृतेन वै।
दिव्यवस्त्रेण चाच्छाद्य धृत्वा मूर्ध्नि महानसात्।। ५६
आनाय्य सन्न्यसेद्देवदेवस्य पुरतः शुचौ।
मण्डले चतुरश्रे तु देशे यवनिकान्तरे।। ५७
समाहरेच्च सुहितं मधुपर्कं यथाविधि।

नानाव्यञ्जनसंयुक्तं सूपापूपफलादि च।
दिव्यान्नं षड्रसोपेतं कृसरञ्च गुडौदनम्।। ५९
निवेद्य शीतं सुरभि पानीयञ्च निवेदयेत्।
हविरर्पणकाले तु घण्टासन्ताडनञ्चरेत्।। ६०
वाद्यानि वादयेच्चैव यथाविभवविस्तरम्।
कर्पूरयुक्तं ताम्बूलं कालेकाले निवेदयेत्।। ६१
परिवारार्चनं होमं धूपदीपादिभिर्बलिम्।
त्रिषु कालेषु दद्याच्च कालेष्वन्येषु नाचरेत्।। ६२

## शयनासनम्

अर्चाबिम्बे तु माल्यादीन् विमोच्य च सुगन्धिभिः।
अलङ्कृत्य पुनर्देवं कल्पयेच्छयनासनम्।। ६३
गुडान्नं क्षीरसम्पृक्तं घृतसूपगुलोत्तरम्।
मरीचिमिश्रमन्नं वा कटाहे पात्र एव वा।। ६४
घनक्षीरं शुण्ठिरसशर्करायुतमर्पयेत्।
एलालवङ्गतक्कोलजातिकर्पूरसंयुतम्।। ६५
ताम्बूलं विनिवेद्यैव कर्पूरं दीपमर्पयेत्।
अखण्डदीपमुद्दीप्य वीणावाद्यञ्च वादयेत्।। ६६
'सूर्यस्त्वेति' कवाटौ च बन्धयेत्सुसमाहितः।
उत्तमोत्तममित्युक्तमर्चनं परमेष्ठिना।
एवं कृते राजराष्ट्रवृद्धिस्स्यान्नात्र संशयः।। ६७

## बल्युत्सवप्रकारः-बेरलक्षणम्

उत्तमत्रिकपूजासु कुर्याद्बल्युत्सवं पुनः।
बिम्बं सलक्षणं प्रोक्तं बल्यर्थं शास्त्रकोविदैः।। ६८

कौतुकस्य त्रिभागैकमितं बिम्बं बलेस्स्मृतम्।
ध्रुवबेरमुखायाममितमर्धायतन्तु वा।। ६९
यजमानस्य मानेन षोडशाङ्गुलमेव वा।
(त्रयोदशाङ्गुलं वापि रुद्राङ्गुलमथापि वा)।। ७०
सुवर्णरूप्यताम्राणामेकलोहेन कारयेत्।
ब्रह्मभागादन्यदेशे स्थापयेदुचिते क्रमात्।। ७१
कौतुकस्य प्रतिष्ठाप्य वामपार्श्वे समर्चयेत्।
आसीने स्थानके वापि शयाने वा ध्रुवे सदा।। ७२
बलिबेरं कारयेत्तु केवलं स्थानकं बुधः।
नित्यसन्ध्याबलेरग्रे समलङ्कृत्य नाययेत्।। ७३
एष सन्ध्युत्सवो नाम नित्योत्सव उदाहृतः।
अनेन चोत्सवेन स्यान्महोत्सवफलं नृणाम्।। ७४
तस्मान्नित्योत्सवं भक्त्या कुर्यादेवाविचारयन्।
उत्तमाधममध्येषु यथाविभवविस्तरम्।। ७५
अनिर्वाणप्रदीपानां कर्तव्यं स्थापनं बुधैः।

## आलयाश्रितदेवपूजानियमः

पारिषद्यगणस्यापि पूजनन्तूत्तमत्रिके।। ७६
द्वारालयदिगीशानामनपायिगणस्य च।
पूजनं पारिषद्यानां कार्यं स्यान्मध्यमत्रिके।। ७७
द्वारालयपतीनाञ्चाप्यनपायिगणस्य च।
पूजाऽधमत्रिके युक्ता तथाऽऽद्ये तरुणालये।। ७८
गर्भगेहान्तरस्थानां वीशशैषिकयोस्तथा।
पूजा सर्वत्र कर्तव्या अभेदेनार्चनाविधौ।। ७९

न्यक्षादीनर्चयेन्न्यक्ष देवस्यं प्रमुखेऽर्चयेत्।
त्रीनन्यांश्चोक्तमार्गेण तत्तद्दिशि समर्चयेत्।। ८०
स्वे स्वे स्थाने दिगीशांश्च प्रादक्षिण्यक्रमेण वै।
धात्रादीनान्तु षण्णां वै धामपानां तथैव च।। ८१
तथाऽनपायिनाञ्चापि विहाय विहगाधिपम्।
आलये वा बालगेहे पीठे चाप्यर्चनं भवेत्।। ८२
प्रतिमां वापि चित्रं वा चित्राभासमथापि वा।
कल्पयेत्पारिषद्यानामन्येषां विहिते स्थले।। ८३
तदा तदग्रे पीठे वै नित्यं पूजां समाचरेत्।
बालगेहे तु सर्वेषां पीठ एवार्चनं मतम्।। ८४

## नित्ययात्राबलिक्रमः - बलिपात्रम्

अतः परं प्रवक्ष्यामि नित्ययात्राबलिक्रमम्।
वृत्तं वा चतुरश्रं वा भुवङ्गार्धप्रमाणतः।। ८५
कुर्याद्वै बलिपात्रन्तु यथाशास्त्रामतन्द्रितः।
भुवङ्गं पञ्चधा कृत्वा द्विभागं संव्यपोह्य च।। ८६
द्विभागं वा त्रिभागं वा बलिपात्रन्तु कारयेत्।
तन्मध्ये कर्णिकायाममष्टाङ्गुलमिति स्मृतम्।। ८७
एकाङ्गुलोन्नतञ्चापि अष्टदिक्षु दलान्वितम्।
दलस्य विस्तारायमौ भागमात्रमितौ तथा।। ८८
कुर्यात्पद्मं पात्रभित्तिः द्व्यङ्गुलप्रमिता भवेत्।
अर्धाङ्गुलमितश्चापि पात्रसीमा विधीयते।। ८९
सौवर्णं राजतं ताम्रं शतत्रयपलैर्धनम्।

अथवा द्विशतैः कुर्यात्पञ्चाशत्पलमानकम्।
चत्वारिंशद्भिरथवा द्वात्रिंशद्भिः पलैस्तु वा।। ६०
वित्तशाठ्यं न कुर्वीत कुर्याद्वित्तानुसारतः।
तत्र निक्षिप्य बल्यन्नं सायं प्रातर्बलिं ददेत्।। ६१

## बलिद्रव्यम्

बलिद्रव्यं प्रवक्ष्यामि यथावदनुपूर्वशः।
यवैर्वा शालिभिर्वापि व्रीहिभिर्वा प्रियङ्गुभिः।। ६२
श्यामाकैर्वैणवैर्वापि तण्डुलैः पाचयेद्धविः।

## बलिद्रव्यप्रमाणम्

द्विप्रस्थं वा चतुःप्रस्थं षडष्टप्रस्थसम्मितम्।। ६३
यथाशक्ति समाहृत्य तण्डुलान् पाचयेद्बलिम्।

## बलिकालः

त्रिकालं बलिरुक्तं स्यादुत्तमोत्तमकल्पतः।। ६४
द्विकालं मध्यमं विद्यादधमञ्चैककालिकम्।

## बलिभेदः

पूर्वाह्णे बलिरन्नं स्यान्मध्याह्ने न बलिं चरेत्।। ६५
सायञ्चार्घ्यबलिं कुर्यान्मध्यमं हि तदुच्यते।
प्रातः पुष्पबलिं कुर्यान्मध्याह्नेऽन्नबलिं ददेत्।।
सायञ्चार्घ्यबलिं दद्यादधमं हि विदुर्बलिम्।

## बलिपीठम्

बलिपीठमहं वक्ष्ये कारयेत्तु शिलादिभिः।। ६७
द्वादशाङ्गुलमानोच्चमुत्तमं पीठमुच्यते।
दशाङ्गुलप्रमाणोच्चं मध्यमन्तु विदुर्बुधाः।। ६८

अष्टाङ्गुलप्रमाणोच्चमधमं परिचक्षते।
आयामाद्द्विगुणं नाहं क्रमादग्रं क्षयं नयेत्।। ९९
(तत्प्रतिष्ठोक्तमार्गेण प्रतिष्ठाप्य यथाविधि
तथा तद्देवमावाह्य बलिं तदुपरि क्षिपेत्)

## बलिमूर्तिकल्पनम्

अभिघार्य चरुं पूर्वं पात्रञ्चैवाभिघार्य च।
हविषा सह पक्वञ्चेद्धविः प्रक्षिप्य पूर्ववत्।। १००
पात्राधिपं रविञ्चार्च्य पश्चादन्नं विनिक्षिपेत्।
बलिरूपं प्रमाणेन पश्चात्सम्मर्दयेद्बुधः।। १०१
पूर्वोक्तेन प्रमाणेन मर्दयित्वा बलिं पुनः।
'अन्नं प्रजापतिञ्चेति ब्रह्माणमिति चार्चयेत्।। १०२
विष्णुशक्तिं सर्वभूतहित' मित्येव नामभिः।
आवाह्यान्ने बलिं सम्यगर्घ्यान्तञ्च समर्चयेत्।। १०३
पात्रेऽर्घ्यबलिमापूर्य चार्घ्यद्रव्यैस्तु भाजनम्।
अभ्यर्चयेद्धरिं तत्र दद्यादर्घ्यबलिं क्रमात्।। १०४
यदि पुष्पबलिस्स्यात्तु पुष्पमालासमायुतम्।
अष्टाङ्गुलोन्नतं वापि भागोन्नतमथापि वा।। १०५
पात्रं पुष्पैः प्रपूर्यैवं तत्र देवं समर्चयेत्।

## बलिबिम्बप्रकारः

अथवा कारयेद्विद्वान् बलिबिम्बं सलक्षणम्।। १०६
नित्योत्सवार्थं विधिवत्सर्वाभिरणसंयुतम्।
सौवर्णं राजतं वापि तथा ताम्रमयन्तु वा।। १०७

अष्टाङ्गुलादहीनोच्चं प्रभामण्डलसंयुतम्।
पूर्वभागे कौतुकस्य दक्षिणे चोत्तरेऽपि वा।। १०८
स्थापयेन्नित्यपूजायामन्तरालेऽथवा न्यसेत्।
अर्ध्यान्तमर्चयेद्विद्वान् त्रिकालञ्चैव यत्नतः।। १०९
वस्त्रोत्तरीयसंयुक्तं सर्वालङ्कारसंयुतम्।
शिष्यं गरुडवद्ध्यात्वा पूजयेद्विधिकोविदः।। ११०
अर्ध्यान्तं पूजयित्वा तु गरुडं मनसा स्मरन्।
पश्चात्प्रणम्य देवेशं घण्टां सन्ताड्य मन्त्रवित्।। १११

## धामप्रदक्षिणम्

वैष्णवं मन्त्रमुच्चार्य हस्ताभ्यां बिम्बमाहरेत्।
पूर्वं बिम्बं समादाय शिष्यस्य शिरसि न्यसेत्।। ११२
बलिं पश्चात्समादाय 'बृहस्पति' रितीरयन्।
शिष्यस्यैव तथा तूर्णं हस्ताभ्यां शिरसि न्यसेत्।। ११३
'उद्यन्ते' ति ततो जप्त्वा देवमानम्य चादरात्।
शिष्य आदाय हस्ताभ्यामुत्तराभिमुखो व्रजेत्।। ११४
अथवा यानमारोप्य सर्ववाद्यसमायुतम्।
देवं समानयेदन्नबलिं शिष्यस्समाहरेत्।। ११५
न तिष्ठेन्न द्रुतं गच्छेत् न जल्पेन्न हसेच्च वा।
न कुप्येद्वाग्यतो भूत्वा नयेत्तद्गतमानसः।। ११६
(विमानं परितो गच्छेत्परिवारयुतः पुनः।
भूतपीठं ततः पश्चात्कुर्याच्चैव प्रदक्षिणम्।।
पूर्वं तोयं ततश्चान्नं पश्चात्तोयं ददेद्बुधः।
बलिपीठं प्रतिदिनं क्षालयेदुदकेन वै)।।

## प्राकारबहुत्वे प्रदक्षिणव्यवस्था

एकप्राकारके चैवं द्विप्रकारविमानके।
(प्राकारे प्रथमे पूर्वं कुर्यादिकं प्रदक्षिणम्)
पूर्वोक्तेन क्रमेणैव त्रिः प्रदक्षिणमाचरेत्।। ११७
द्वितीयावरणे हीने प्राकारे प्रथमे पुनः।
प्रदक्षिणत्रयं कुर्यादिति पूर्वजशासनम्।। ११८

## अन्तःप्रवेशः

प्रथमद्वारपार्श्वे तु स्थित्वा चैवोत्तरामुखः।
पादौ प्रक्षाल्य चैवाद्भिः देवागारं विशेद्गुरुः।। ११९

## रक्षादीपः

तार्क्ष्यस्य पश्चिमे स्थित्वा देवदेवं निरीक्ष्य वै।
.... .... .... ....।
रक्षादीपं दर्शयित्वा देवायार्घ्यं प्रदापयेत्।। १२०
आदाय दीपं गणिका त्रिर्वाद्यैस्तु परिक्रमेत्।
अपूपं फलताम्बूलं दद्यादाचमनीयकम्।। १२१
पुष्पाञ्जलिं समर्प्याथ नमस्कृत्य यथाविधि।

## यथास्थाने प्रवेशः

बिम्बमादाय हस्ताभ्यां पूजकः प्रयतात्मवान्।। १२२
जीवस्थाने प्रतिष्ठाप्य नमस्कुर्याद्यथाविधि।

## बल्यग्रसमर्पणम्

बल्यग्रन्तु समादाय विष्वक्सेनालयं व्रजेत्।। १२३
निवेद्य विष्वक्सेनाय बलिवाद्यसमन्वितम्।
निवेदितान्नं पृष्ठे वै विष्वक्सेनस्य निक्षिपेत्।। १२४

चरक्यादीन् समुद्दिश्य बलिशिष्टान्नमादरात्।
आदाय तोयसहितं बलिपीठे विनिक्षिपेत्।। १२५
बलिद्रव्याणि सर्वाणि भूतपीठे विनिक्षिपेत्।
एवं त्रिसन्ध्यं कर्तव्यं हविर्युक्तार्चनाविधौ।। १२६
एवं कर्तुमशक्तश्चेत्केवलं बिम्बमेव वा।
गृहीत्वा बलिदेवेभ्यो बलिमात्रं प्रदापयेत्।। १२७

## बलिकालः

बलिकालं प्रवक्ष्यामि श्रुणुध्वं सुसमाहिताः।
प्रातरर्कोदयात्पश्चात् नाड्यस्सप्त बलेस्स्मृताः।। १२८
मध्याह्ने च तथा सायं बलिकाल उदाहृतः।
काले ह्यतीते तु कृतं सन्ध्यातीतकृतं भवेत्।। १२९

## बलिदानफलम्

आयुष्मान् बलवान् धीमान् भवेदन्नबलिं ददत्।
पुत्रवान् वीर्यवांश्च स्यात् कुर्वन् पुष्पबलिं नरः।। १३०
धनवान् धान्यवांश्च स्यात् कुर्वन्नर्घ्यबलिं तथा।

## बलिकालवाद्यफलम्

भेरीमृदङ्गपटहकाहलादिध्वनिस्तथा।। १३१
घण्टाध्वनिर्बलिक्षेपकाले यावद्धि श्रूयते।
तावत्प्रेताः पिशाचाश्च रक्षांसि न विशन्ति वै।। १३२
तस्मात्सन्ध्याबलिं कुर्यान्नित्यमेव जितेन्द्रियः।
उत्तमोत्तमपूजायां बलिमुत्तममाचरेत्।। १३३
मध्यमाधमयोश्चापि शक्तश्चेद्बलिमुत्तमम्।
कुर्यादुत्तमपूजायाः फलं प्राप्नोत्यसंशयम्।। १३४

अनुगच्छन्ति ये भक्त्या बलिकाले दिदृक्षया।
पदे पदे क्रतुफलं ते लभेरन् न संशय।। १३५

बलिर्यत्रैव क्रियते तत्र स्थानविवर्धनम्।
धनधान्यसमृद्धिस्स्यात् वेदानामुपबृंहणम्।। १३६

कुलस्य क्षेत्रपश्वादेः यानवाहनसम्पदाम्।
समृद्धिः किं बहूक्तेन सर्वसम्पत् समृद्ध्यते।। १३७

बल्यङ्गं साधनं दद्यात् यो भक्त्या पटहादिकम्।
तस्य पापं प्रणश्येद्धि तमस्सूर्योदये यथा।। १३८

## देवस्वापहरे दोषः

स्वदत्तं परदत्तं वा देवदेवस्य यद्धनम्।
हर्तुमिच्छति यः पापी नरके स पतेत् ध्रुवम्।। १३९

## वर्षपातादौ बलिदानम्

बलिभ्रमणकाले तु वाद्यादीनामसम्भवे।
अतिवातातिवर्षादौ शिष्याभावे त्वयानके।। १४०

सायं प्रातश्च नित्यार्चाघटविभ्रमहीनके।
दीपहीने तथा भक्त्या द्वाराग्रे निक्षिपेद्बलिम्।। १४१

किष्किन्धतीर्थयोरग्रे बलिदेवांत्स्मरन् हृदि।
जलं क्षिप्त्वा बलिं न्यस्येदुदकञ्च यथाक्रमम्।
परेऽह्नि शान्तिं कृत्वा तु नित्योत्सवमथाचरेत्। १४२

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे नवविधार्चन - नित्यार्चनविधिर्नाम
चतुर्विंशोऽध्यायः।

-------

अथ पञ्चविंशोऽध्यायः

---------

## अष्टादशगणस्वरूपकथनम्

अथ वक्ष्येऽष्टादशगणस्वरूपं विस्तरेण हि।
देवाश्च ऋषयश्चैव पितरो दैत्यदानवाः।। १
असुराश्चैव गन्धर्वाः तथैवाप्सरसां गणाः।
यक्षाश्च राक्षसाश्चैव नागा भूताः पिशाचकाः।।
अनावृष्टिगणाश्चैव तथाऽमृतमुचां गणाः।
मातरश्चैव रोहिण्यः पूता आर्यागणास्तथा।। ३
अष्टादशगणाश्चैते प्रोक्ता वै देवयोनयः।

### १. देवगणाः

एतेषु गणमुख्यानां विशेषस्तु प्रवक्ष्यते।। ४
साध्या विश्वे च वसवो मरुतो ऋभवस्तथा।
तथैवाङ्गिरसो रुद्रा आदित्याश्च तथैव च।। ५
एते देवगणा अष्टौ मन्वन्तरगणेश्वराः।

### २. ऋषिगणाः

भार्गवाः काश्यपाश्चैव आत्रेयाः श्रेष्ठभागिनः।। ६
भारद्वाजा गौतमाश्च वासिष्ठाः कौशिकास्तथा।
सप्तैते प्रवराः प्रोक्ता ऋषिमुख्याः तपस्विनः।। ७

### ३. पितृगणाः

अग्निष्वात्ता बर्हिषदो वैराजाश्चाप्यमूर्तयः।

एते पितृगणाः प्रोक्तास्सप्त वै लोकपूजिताः।

### ४. दैत्यगणाः

कालकेया हालहला बालेयाश्चेति वै क्रमात्।। ९
त्रयो दैत्यगणाः प्रोक्ता दानवान् श्रुणुतर्षयः।

### ५. दानवगणाः

असुन्वानगणाश्चैव स्युस्सुन्वानगणास्तथा।। १०

### ६. आसुरगणाः

सौंहिकेयाश्च भौमेयास्तथाऽनायुगणा अपि।
धातृनामासुरगणाः चत्वारः पूर्वदेवताः।। ११

### ७. गन्धर्वगणाः

प्रालेयाश्चैव मौनेया अरिष्टगण एव च।
अत्र तु ब्रह्मणा प्रोक्ताः गन्धर्वाणां गणास्त्रयः।। १२

### ८. अप्सरोगणाः

वैदिकाप्सरसश्चैव आहत्यगणिकास्तथा।
शोभयन्त्यो वेगवत्य ऊर्जायुवतयोऽपि च।। १३
वैखनास्त्वङ्कणा वध्वो याश्चामृतमुचां गणाः।
भैरवाश्शोधयन्त्यश्च ते स्युरप्सरसां गणाः।। १४

### ९. यक्षगणाः

गृह्यकानां गणाश्चैव तथा पुण्यजना गणाः।
देवजनगणाश्चैव यक्षानान्तु त्रयो गणाः।। १५

### १०. राक्षसगणाः

ब्रह्मरक्षोयातुधानाः ब्रह्मधानगणास्तथा।
पौलस्त्यः पौलहाश्चैव आगस्त्याश्च तथैव च।। १६

विश्वामित्रगणाः प्रोक्ताः सप्तैते रक्षसां गणाः।

## ११. नागगणाः

गिरिजातगणाश्चैव काद्रवेयगणास्तथा।। १७
सौरभेयीगणाश्चैव नागानान्तु त्रयो गणाः।

## १२. भूतगणौ

ब्रह्मभूतगणाञ्चैव तथा वै पौलहा गणाः।। १८
भूतानां द्वौ गणौ प्रोक्तौ सर्वप्राणिभयङ्करौ।

## २३. पिशाचगणाः

कूश्माण्डानुक्रमं वक्ष्ये अजामुखगणास्तथा।। १९
चक्रीगणाः पूतगणाः तथा वै स्कान्दिका गणाः।
निषादशारकाश्चैव कुम्भीपात्रगणास्तथा।। २०
प्रतुन्दुकाश्चोपवीराः त्रिलोला मार्कटाक्षकाः।
कूश्माण्डकाः पांसवश्च पाणिपात्रगणास्तथा।। २१
तैतिन्दुकाः निपुणकाः सूचीमुखगणास्तथा।
एते कूश्माण्डकाः प्रोक्ताः पिशाचानान्तु षोडश।। २२

## १४. अनावृष्टिगणाः

मरुत्स्कन्धा मुहूर्ताश्च धोषानलविधायिनः।
त्रिपथाश्च ग्रहाश्चैव नक्षत्राणि च सर्वशः।। २३
अनावृष्टिगणाः प्रोक्तास्सप्तैते अन्तरिक्षगाः।

## १५. अमृतमुचां गणाः

व्याधीनान्तु गणाश्चैव मूर्तीनान्तु गणास्तथा।। २४

## १६. मातृगणाः

कालीगणाश्च ब्रह्माणी रुद्राणी वैष्णवी तथा।। २५
वाराही चैव कौमारी माहेन्द्री च गणेश्वरी।
एतासाञ्च गणाश्चैव मातॄणां स्त्रीगणाः स्मृताः।। २६

## १७. रोहिणीगणाः

कुष्ठिनी ग्रन्थिनी चैव कृच्छिणी कुण्डिनी तथा।
विकारिणी दद्रुणी च तथेन्द्रियविकारिणी।। २७
एतासान्तु गणास्सप्त रोहिणीगणसंज्ञिताः।
एते वै स्त्रीगणास्सप्त सप्तमन्वन्तराधिपाः।। २८

## १८. आर्यागणाः

नैरृतानां गणाश्चैव ज्येष्ठानाञ्च गणास्तथा।
तथा विघ्नगणाश्चैव तथा वै पूतनागणाः।। २९
ग्रामसन्धीश्वरगणाः तथा कृष्णगणाश्च ये।
आर्यागणास्स्युस्सप्तैते एतास्तु गृहदेवताः।। ३०
एतेषां वै गणानान्तु असङ्ख्येयगणा मताः।
एतानष्टादशगणान् ज्ञात्वा स्थानेषु योजयेत्।। ३१

## मन्वन्तराधिपाः

स्वायम्भुवो मनुः पूर्वः रोचिषश्चोत्तमो मतः।
तामसो रैवतश्चैव चाक्षुषश्च ततः परम्।। ३२
वैवस्वतश्च सावर्णिः ब्रह्मसावर्णिरेव च।
तथैव दक्षसावर्णिः धर्मसावर्णिरेव च।। ३३
तथैव रुद्रसावर्णिः रोचमानस्तथैव च।
तेभ्यस्तथैव विज्ञेयाः प्रोक्ता वै मनवः क्रमात्।। ३४

(अत्र चोदाहरिष्यामि तुल्यार्थानि पदानि तु।
विशिष्टाद्वैतवादी च विखना ब्रह्मवित्तमः।।
जलं तोयमथाधावं पवित्रं क्षीरमित्यपि।
विग्रहाश्चोपचाराश्च बिम्बं बेरं समार्थकाः।।
अधिकारेषु सर्वत्र तत्र तत्र विशेषतः।
ज्ञात्वा प्रोक्तञ्च यत्सर्वमाचरन्ति हि सत्तमाः)।।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे अष्टादशगणस्वरूपकथनं नाम
पञ्चविंशोऽध्यायः।।

---------

अथ षड्विंशोऽध्यायः

---------

## आग्रयणदीपोत्सवौ

अथ वक्ष्ये हरेराग्रयणदीपोत्सवौ क्रमात्।
उक्तो नवभिदाभिन्नः श्रीपतेरर्चनक्रमः।। १
संवत्सरोचितावेतौ द्वौ हरेरुत्सवौ मतौ।

## आग्रयणस्य उक्तकालः

कार्तिके मास्याग्रयणं दीपदानञ्च कारयेत्।। २
तयोराग्रयणस्यायं भवेद्वै पूजनक्रमः।
शरदि व्रीहिभिः कुर्यान्नीवारैः शैशिरे तथा।। ३
श्यामाकैश्चैव वर्षासु वसन्ते च तथा यवैः।
कुर्यादाग्रयणं देवयागाङ्गं प्रतिवत्सरम्।। ४

तत्कालसम्भवैर्धान्यैर्निर्वर्त्योऽयं मखः सदा।

## अलङ्कारः

धान्यान्यादाय स्तृणुयात्परितो देवमन्दिरम्।। ५
अलङ्कुर्यादालयञ्च दर्भमालादिभिस्तथा।
अश्वत्थपल्लवाद्यैश्च द्वारालङ्करणं तथा।। ६
क्रमुकैः कदलीस्तम्भैः पुष्पमालादिभिस्तथा।
मुक्तादामादिभिश्चैव पूर्णकुम्भाङ्कुरादिभिः।। ७
धूपैस्सुगन्धिभिर्दीपैस्सर्वत्रालङ्कृतिं चरेत्।
देवेशमप्यलङ्कृत्य यथाविभवमादरात्।। ८
प्रदक्षिणं नयेद्ग्रामं चक्रशेषसमायुतम्।
शाकभेदैः कालपक्वैः धान्यबन्धैश्च शोभनैः।। ९
सर्वैः भक्तजनैस्सार्धं सर्ववाद्यैस्समन्वितम्।
नृत्तैर्गेयैश्च भक्तानां तत्तद्देशोचितैरपि।। १०

## आग्रयणोत्सवक्रमः

आस्थानमण्डपे श्रीशं स्थापयित्वा समर्चयेत्।
अङ्कुरार्पणपूर्वन्तु कुर्यात्कर्माणि कर्मवित्।। ११
शुभे मुहूर्ते सम्प्राप्ते कुर्यात् होममुपासकाः।
नित्याग्नावथवाऽन्यत्र प्रज्वाल्यग्निं विधानतः।। १२
वैष्णवं पार्षदञ्चापि हुनेद्दिक्पालदैवतम्।
आदित्यचन्द्रमन्त्रैश्च तथा मूर्तिभिरेव च।। १३
हुत्वा ततस्तु देवेशं सम्पूज्योचितविग्रहैः।
प्राक्सिद्धधान्यसंसिद्धतण्डुलान् गुडसंयुतान्।। १४

रम्भाफलानि पक्वानि नारिकेलफलानि च।
निवेदयेन्महाविष्णोर्मन्त्रे 'णाप्यायता' मिति।। १५

तत्तन्मन्त्रैर्निवेद्यैव श्रीभूम्योः पार्षदामपि।
दद्यादाचमनं पश्चान्मुखवासं तथा नवम्।। १६

पश्चाद्भक्तजनेभ्यश्च तण्डुलादीन् निवेदितान्।
दापयेच्च यथायोगं तेन तुष्यति केशवः।। १७

ततोऽष्टविग्रहैर्देवमर्चयेच्च विधानतः।
अहतं वस्त्रामास्तीर्य देवस्य पुरतस्ततः।। १८

नवतण्डुलसंसिद्धं हविस्सम्यक् निवेदयेत्।
मूर्तिहोमादिकं सर्वं पूर्ववच्चाचरेद्बुधः।। १९

प्रभूतञ्च निवेद्यैव अन्तहोमं समाचरेत्।
अग्रे यूथाधिपस्यैव अर्चयित्वा विधानतः।। २०

अष्टादशगणेभ्यश्च बलिं दद्याच्च तण्डुलैः।
गोचर्ममात्रभूमिन्तु गोमयेनोपलिप्य च।। २१

आस्थानमण्डपे पश्चाद्वितानाद्यैरलङ्कृते।
देवेशं नववस्त्रैश्च सोत्तरीयैरलङ्कृतम्।। २२

भूषणैर्भूषितं दिव्यैः समासाद्य यथोचितैः।
अर्चयेदुपचारैश्च नृत्तगीतादिभिस्तथा।। १३

निवेदयेद्विशेषेण लोकानां हितकाम्यया।
अन्तर्निनीय देवेशं पूर्वकुम्भाद्भिरुक्षयेत्।। २४

## कल्पान्तरम्

आश्वयुज्यां पूर्णिमायां केचिदाग्रयणं हरेः।

वर्षदं सर्वलोकानां सर्वसम्पत्प्रदायकम्।
एवमाग्रयणं विष्णोः कारयेद्यो विधानतः।
सर्वपापविनिर्मुक्तो भुक्तिं मुक्तिञ्च विन्दति।। २६

## कृत्तिकादीपोत्सवः

कृत्तिकर्क्षयुता या सा
कार्तिके मासि पूर्णिमा।
प्रशस्ता दीपदानाय
तस्यां दीपोत्सवं चरेत्।। २७
यथाशक्ति समानीय सर्पिस्तैलमथापि वा।
प्रदोषे देवतागारे दीपमालाः प्रकल्पयेत्।। २८
प्राकारादिषु सर्वत्र विशेषाद्द्वारगोपुरे।
रात्रिपूजावसाने तु विमाने चालयादिषु।। २९

## दीपस्तम्भः

देवस्य पुरतः स्तम्भे देवालयसमोन्नते।
अधिके वा महादीपं महास्नेहं प्रकल्पयेत्।। ३०
दीपकूटांस्तटाकादौ कल्पयेच्च चतुर्दिशम्।
देवेशं समलङ्कृत्य निवेश्यास्थानमण्डपे।। ३१
नृत्तगेयादिभिर्दिव्यैः ततः सम्पूजयेद्धरिम्।
(कुम्भं संस्थाप्य चाघारितेऽग्नौ चावाहनं चरेत्)।। ३२
जुहुयाद्वैष्णवैर्मन्त्रैः मूर्तिहोमपुरस्कृतैः।
हुनेच्छ्रीभूमिदैवत्यमाग्नेयञ्चापि मन्त्रवित्।। ३३
होमान्तेऽत्र प्रभूतञ्च हवींषि च निवेदयेत्।
(महानसे शरावांस्तु न्यस्य पुण्याहमाचरेत्)।।

## दीपदानम्

रौक्मे ताम्रेऽथ वा पात्रे शरावांस्तांश्च सन्न्यसेत्।
वर्तिकास्तासु सन्न्यस्य घृतेनाऽऽपूर्य मन्त्रतः।। ३५
'उद्दीप्य' स्वेति मन्त्रेण दीपानुद्दीप्य तेषु च।
श्रियमावाहयेद्देवीमर्चयेदष्टविग्रहैः।। ३६
निवेद्य च विशेषेण मुखवासं निवेदयेत्।
द्विजमूर्धसु निक्षिप्य शरावान् वाद्यसंयुतम्। ३७
धामप्रदक्षिणं नीत्वा देवस्याभिमुखं नयेत्।
आराध्य दीपैर्देवेशं प्रदोषसमये क्रमात्।। ३८
नारिकेलञ्च ताम्बूलं पाद्यमाचमनं ददेत्।
प्रतिद्वारं ददेद्दीपान् पारिषद्यालयेषु च।। ३९
आस्थाने संस्थितं देवमानयेन्मण्डपाद्बहिः।
वास्तुहोमं ततो हुत्वा पुण्याहमपि वाचयेत्।। ४०

## स्वर्गतालः

विमानतुलितायामविस्तारं स्वर्गतालकम्।
कल्पयेत्तालपत्रेण घनीकृत्य कृतेन वै।। ४१
चतुर्द्वारयुतं तालवृक्षाकारं विशेषतः।
पुण्याहवारिणा प्रोक्ष्य कृत्वा पर्यग्निमेव च।। ४२
श्रियमावाह्य तन्मूर्ध्नि शिष्येणोद्दीपयेत्तरुम्।
वर्तिकादीपिका दिक्षु क्षिप्त्वा चोद्दीपयेत्ततः।। ४३
आचार्यस्स्वर्गसोपानदीपेनोद्दीपयेत्तथा।
जनानाञ्च भवेच्छ्रेयः भक्त्या तद्भस्मधारिणाम्।। ४४

तेषां व्याधिभयं न स्याद्रक्षामूर्ध्वे हरेर्लिखेत्।
पश्चादाराध्य देवेशं घटदीपञ्च दर्शयेत्।। ४५
हविर्लाजान् निवेद्यैव ग्राममालयमेव वा।
परिक्रम्य च देवेशं सर्वालङ्कारसंयुतम्।। ४६
यथास्थानं नयेच्चैव नित्यपूजाविधौ कृते।
बहुलाजगुडैर्मिश्रं मरीच्यैलासमन्वितम्।। ४७
गुडान्नं घृतसम्मिश्रं सापूपञ्च निवेदयेत्।
भक्तानां दापयेत्तैलं लाजान् सर्वं निवेदितम्।। ४८
ददेद्राज्ञाञ्च लाजांश्च ध्रुवं सम्प्रेक्षयेद्बुधः।
मासे तु कार्तिके कुर्यान्नित्यं दीपसमर्पणम्।। ४९
सन्ध्यादीपार्पणञ्चापि कुर्याच्छ्रद्धासमन्वितः।
आलये मण्डपे कूटे गृहद्वारे मठेऽपि वा।। ५०
बहुदीपानथैकं वा योऽर्पयेद्यत्र कुत्रचित्।
तस्य देवेश्वरो विष्णुः प्रसीदति न संशयः।। ५१
किंपुनस्सन्निधौ विष्णोरर्पणात्तन्महत्फलम्।
नित्यं कर्तुमशक्तश्चेन्मासर्क्षे वा विशेषतः।। ५२
दीपैस्सम्पूजयेद्विष्णुं सोऽपीष्टान् समवाप्नुयात्।
तस्माद्दीपं समारोप्य योऽर्चयेत्स तु सान्वयः।
इह लोके सुखीभूत्वा विष्णुलोके महीयते।। ५३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगृप्रोक्तायां संहितायां
खिलाधिकारे आग्रयणदीपोत्सवविधिर्नाम
षड्विंशोऽध्यायः।



## अथ सप्तविंशोऽध्यायः

-----------

### हविःपाकविधिः - धान्यानि

अतः परं प्रवक्ष्यामि हविः पाकविधिं क्रमात्।
हविरुद्दिश्य धान्यानि वस्तून्यन्यानि चाहरेत्।। १
हविरर्थञ्च सर्वेषां प्रशस्ताः शलिजातयः।
अलाभे तत्र शालीनां व्रीहीनन्यांत्समाहरेत्।। २

### वर्ज्यधान्यानि - गुणाधिक्यञ्च

कङ्क्वादीनि कुधान्यानि वर्ज्यानि वरकोद्रवौ।
व्रीहीणाञ्चैव सर्वेषां शालिर्दशगुणाधिकः।। ३
शताधिकः प्रियङ्गुस्स्यान्नीवारश्च सहस्रशः।
द्विगुणो गर्भषष्टिस्स्यादनन्तौ यववेणुकौ।। ४
कोशधान्यानि सर्वाणि वर्जयेच्च विधानतः।
कोशधान्येषु च ग्राह्या मुद्गा माषास्तिलाः क्रमात्।। ५

### धान्यसंस्काराः

उक्तं धान्यं समाहृत्य आतपे सुष्ठु शोषयेत्।
शुद्धैर्भक्तजनैश्चापि शुद्धे देशे मनोरमे।। ६
वितुषञ्च विकम्बूकमवधातञ्च कारयेत्।
ततस्तण्डुलमाहृत्य शुद्धपात्रे तु निक्षिपेत्।। ७
देवतार्थं न गृह्णीयात्स्विन्नधान्योत्थतण्डुलान्।

## पञ्चधा हविः

शुद्धौदनं पायसञ्च कृसरं गौल्यमेव च।
यावकञ्चैव देवानां पञ्चधा हविरुच्यते।। ८
तण्डुलैर्मुद्गमिश्रैर्वा केवलैर्वाथ तण्डुलैः।
सम्यक्पक्वन्तु विधिना शुद्धौदनमिति स्मृतम्।। ९
पयसा संशृतञ्चान्नं पायसन्तु विदुर्बुधाः।
तिलचूर्णैश्च सम्मिश्रमोदनं कृसरं विदुः।। १०
तण्डुलात्त्रिगुणं दुग्धं दुग्धार्धं तोयमेव च।
गुलं सर्पिस्तथा मुद्गं तण्डुलार्धं तथैव च।। ११
एवं पक्वन्त्वोदनं तद्गौल्यमित्यभिधीयते।
यवतण्डुलसम्मिश्रं यावकं परिकीर्त्यते।। १२

## हविः प्रमाणम्

तण्डुलैः षोडशप्रस्थैः कुडुबेन घृतेन च।
दध्ना प्रस्थद्वयेनापि पञ्चभिर्व्यञ्जनैर्युतम्।। १३
प्रत्येकं पञ्चभिर्भक्ष्यैः पलेनापि गुडेन वा।
प्रस्थेन मुद्गसाराणां बैदलानामथापि वा।। १४
सम्यक्पक्वैः फलैरुक्तैर्मधुरैश्च रसोत्कटैः।
उत्तमं हविरुद्दिष्टं (देवेशाय निवेदयेत्।। १५
नित्यसान्निध्यसिद्ध्यर्थं) तदर्धं मध्यमं भवेत्।
तदर्धमधमञ्चेति कीर्तितं ब्रह्मणा पुरा।। १६

## पाकप्रकारः

मृद्भाण्डे पाचनं श्रेष्ठं लोहपात्रेऽथवा पुनः।
नूतनैरेव मृद्भाण्डैः पचनन्तु प्रशस्यते।।

एकस्मिन्न पचेत्पात्रे मृद्भाण्डे तु पुनः पुनः।
लोहपात्रे पचेन्नित्यमिङ्गपर्यूषवर्जिते (?) ।। १८
शुद्धिं कृत्वा देवतार्हं पचेन्नित्यं पुनः पुनः।
वर्जयेच्चैव मृद्भाण्डे पचनन्तु पुनः पुनः।। १९
(यथोक्तमन्त्रैः पात्रेषु द्रोणार्धाधिकतण्डुलान्)।
एकस्मिन्न पचेत्पात्रे द्रोणार्धादधिकं हविः।। २०

## हविः प्रभूतादिभेदः

अधिकं षोडशप्रस्थात्प्रभूतं हविरुच्यते।
द्रोणानां पञ्चसप्तत्या तण्डुलानां प्रकल्पितम्।। २१
हविर्बहुव्यञ्जनैश्च दध्ना चापि घृतेन च।
फलैर्बहुविधैश्चैव नानायोगरसैर्युतम्।। २२
नैमित्तिकप्रभूताख्यं हविः प्रोक्तं पुरातनैः।
द्रोणार्धादधिकान्नं वा यथाशक्ति निवेदयेत्।। २३
तण्डुलैरेकजातीयैः मिश्रितैर्वा यथायथम्।
प्रभूतादधिकं यत्तु महाहविरितीरितम्।। २४
सप्तशतेन विंशत्या द्रोणानां तण्डुलैः कृतम्।
श्रद्धया चैव भक्त्या च उत्तमं स्यान्महाहविः।। २५
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्।

## आश्रितदेवानां हविर्दानम्

आलयाश्रितदेवानामन्येषां पार्षदामपि।। २६
देवोक्तहविषोऽर्धं वा यथाशक्ति हविर्ददेत्।

## निष्कपलादिमानसंज्ञा

दशनिष्कं पलं प्रोक्तं कुडवं तच्चतुर्गुणम्।। १७

चत्वारि तानि तु प्रस्थं तानि चत्वारि चाढकम्।
तच्चतुर्गुणितं द्रोणं प्रमाणं हविषां परम्।। २८

## व्यञ्जनानि

हविरेवंविधं प्रोक्तं व्यञ्जनानि भवन्ति च।
कदली बृहतीभेदाः चूतं पनसयुग्मकम्।। २९
कूश्माण्डं ककुभाण्डञ्च उर्वारुकमतः परम्।
गान्धं नाली च कार्कोटं नारिकेलमर्ककम्।। ३०
कर्कन्धुस्तिन्त्रिणी चैव कारवल्लीविकल्पकम्।
मुद्गाढक्यस्तथा भेदः माषा जीरकमेव च।। ३१
मसूरं मारिचञ्चैव सर्षपाश्च तथा परे।
बिम्बमौदुम्बरञ्चैव क्षरसी रक्तहल्लकम्। ३२
क्षुद्रकन्दं महाकन्दं कन्दं वै सूरणस्य च।
उत्पलस्य च कन्दं वै शकु[illegible]स्यार्द्रकस्य च।। ३३
वल्ल्यश्चैव महावल्ल्यो नागवल्ल्यस्तथैव च।
मधुवल्ल्यश्च भाण्ड्यश्च वनवल्ल्यश्च संम्भरेत्।। ३४
फलानि यत्रपक्वानि वर्जयेत्तु विचक्षणः।
रम्भाफलञ्च चूतञ्च यत्नतः पक्वमाहरेत्।। ३५
धान्यानि चान्यवस्तूनि योग्यान्येव समाहरेत्।
धर्मशास्त्रेषु सिद्धानि देवप्रियकराणि च।। ३६
उपदंशांश्च सङ्ख्यातान् यथालाभं समाहरेत्।

## वर्ज्यशाकादीनि

बृहन्मरीचिं शिग्रुञ्च शाकजातिञ्च नीव्रकम्।। ३७

कोशातकीमलाबुञ्च लशुनादींश्च वर्जयेत्।

## निर्माल्यपर्युषितादिदोषविचारः

निवेदितावशिष्टन्तु पुनर्देवाय नार्पयेत्।। ३८
अन्नं वा व्यञ्जनं वापि भक्ष्यं वा फलमेव वा।
नालिकेरार्धभागं वा पनसस्यार्धमेव वा।। ३९
कूश्माण्डाद्युपदंशानामर्धं पक्त्वाऽर्पितं यदि।
शिष्टार्धं सन्त्यजेदेव पाकार्थं नैव कल्पयेत्।। ४०
तत्स्यान्निवेदितसमं तस्मात्सर्वं समर्पयेत्।
तत्तथैव न कुर्याच्चेन्महान् दोषो भविष्यति।। ४१
तीर्थं पुष्पाणि गन्धाश्च सर्पिस्तैलं घृतं तथा।
अवशिष्यार्धमर्धञ्चेदर्पयेन्नैव दोषकृत्।। ४२
अपक्वञ्चापि विक्लिन्नं वर्णान्तरगतन्तु वा।
गन्धदुष्टं सपाषाणमाघ्रातञ्च विसर्जयेत्।। ४३
अनाच्छन्नं हविर्यत्तु मुखवातविदूषितम्।
तुषकेशादिसन्दुष्टमन्त्यजात्यक्षिसङ्गतम्।। ४४
लङ्घितं विवृतं शीतमन्यपात्रे न साधितम्।
हविर्वा व्यञ्जनं वापि दुष्टं स्यात्तद्विसर्जयेत्।। ४५
हवींषि च व्यञ्जनानि सम्यक्पक्वानि सर्वदा।
कोष्णान्येव यथाकालं निरवद्यानि चार्पयेत्।। ४६
न शुल्बे दधि गृह्णीयान्मासादूर्ध्वं घृतं तथा।
सद्यो दुग्धं पयः श्रेष्ठं यामातीतं न चाहरेत्।। ४७
गव्यं पयः सदा ग्राह्यं नवनीतं घृतं दधि।
न माहिषं दधि ग्राह्यं नाजं नाविकमेव वा।। ४८

तोयं पर्युषितञ्चापि नैव ग्राह्यं कदापि च।
अपूपानि सुपक्वानि पैष्टिकानि च यानि वै।। ४९
पृथुकानि विकारांश्च तण्डुलानान्तु ये स्मृताः।
भक्ष्याणि च रसाढ्यानि पुनः पाकयुतानि च।। ५०
हविरर्पणकालात्तु भिन्ने काले निवेदयेत्।

## ग्राह्याग्राह्यफलानि

आम्रञ्च पनसञ्चैव कदलीफलमेव च।। ५१
नारिकेलञ्च खर्जूरं द्राक्षा जम्बूफलानि च।
ककुन्दञ्च कपित्थञ्च फलं राजादनस्य च।। ५२
बदरामलके चैव भव्यं पारावतं तथा।
दाडिमं मातुलुङ्गञ्च देवार्हाणि फलानि वै।। ५३
मधुरेषु फलेष्वेकं वर्जयेत्तालवृक्षजम्।
नारिकेलं कपित्थञ्च बिल्वञ्च बहिरस्थिकम्।। ५४
अन्तरस्थीनि शेषाणि सर्वाणीति न संशायः।
क्षालयित्वाऽन्तरस्थीनि बहिरस्थि निरस्य च।। ५५
निवेदयेद्भगवते तदा तुष्यति केशवः।
येषामन्तर्बहिश्चास्थि तानि नैव निवेदयेत्।। ५६
समुद्धृत्य रसालिं वै पनसस्य निवेदयेत्।
तदस्थि च सुसन्तप्तं निवेद्यं कोष्णमुत्तमम्।। ५७

## फलेषु सात्त्विकादिभेदः

मधुरं सात्त्विकं प्रोक्तं राजसञ्चाम्लमुच्यते।
तामसं कटुकाषायमिति पक्वं फलं त्रिधा।। ५८

उत्तमं सात्त्विकं प्रोक्तं मध्यमं राजसं फलम्।
अधमं तामसञ्चेति फलभेद उदाहृतः।। ५९

## भक्ष्याणि

अपूपानि तथा सक्तुतिलमुद्गादिकल्पितम्।
भक्ष्यवस्तु निवेद्यं स्यान्मरीचिलवणादिभिः।। ६०
निवेदितं भगवते नाभक्ताय तु दापयेत्।
पूजकानाञ्च भक्तानामेव दद्यादिति स्मृतिः।। ६१

## मुखवासः

एलालवङ्गतक्कोलयुक्तं ताम्बूलमुत्तमम्।
.... .... .... .... ....।। ६२

## हविर्दानफलश्रुतिः

हवींषि चोपदंशांश्च यथायोग्यं प्रगृह्य च।
फलान्यपि च भक्ष्याणि देवदेवस्य शार्ङ्गिणः।। ६३
अर्हाण्येव विचिन्त्यैवं यो दद्याच्छ्रद्धयाऽन्वितः।
सर्वपापविनिर्मुक्तस्सर्वान् कामानवाप्नुयात्।। ६४
(द्रोणं तण्डुलमुक्तमेव हि ततो द्रोणद्वयं गोपयः
द्रोणार्घ्यर्धजलं तथा घृतमपि द्रोणार्धमेवेष्यते।
अष्टाविंशदथाधिकं ..............पि
ग्राह्यं सप्तदशप्रमाणमुदितं गौल्ये हविश्चोत्तमम्।।
द्रोणार्धं शालिसारं त्रिगुणमथ पयस्तत्पयोऽर्धन्तु तोयं
गौल्यंहृत्वाढकं स्याद्गुडमपि च चतुष्षष्टिमानं पलानि।
पञ्चप्रस्थं तमेतद्धविरपि च ................
सम्यक्प सुयोग्यं विखनसवचनं मध्यमं गौलिकान्नम्।।

शालीतण्डुलमाढकं त्रिगुणितं गोक्षीरमुक्तं जलं
क्षीरार्धं घृतमाढकार्धमपि च प्रस्थद्वयं मुद्गजम्।
सारं तत्कुडुबद्वयाधिकमतो . . . . . . . . . . . . . .
मानं तत्र पलानि गौलिकविधौ विष्णोर्हविश्चाधमम्।।)

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे हविःपाकविधिर्नाम
सप्तविंशोऽध्यायः।

---------

अथ अष्टाविंशोऽध्यायः

---------

## फलपाककथनम् - आलयनिर्माणस्य

अथातः सम्प्रवक्ष्यामि फलपाकविनिर्णयम्।
सर्वैर्दानतपोयज्ञैः प्राप्यते यत्फलं महत्।। १
देवयागस्य सङ्कल्पात् तत्फलं समवाप्नुयात्।
संसिद्धे ब्रह्मपद्मे तु विमानारम्भकर्मणि।। २
विष्णुलोकमवाप्नोति पूज्यमानस्सदाऽमरैः।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु।। ३
विष्णोरालयविन्यासप्रारम्भादेव नश्यति।
सिद्धे कर्मण्यसिद्धे वा तत्फलं सर्वमाप्नुयात्।। ४
प्रशस्तदेशे भूभागे यो भक्त्या भवनं हरेः।
कारयेदक्षयान् लोकान् स नरः प्रतिपद्यते।। ५
सप्तलोकमयो विष्णुस्तस्य सप्ततलालयम्।
यः कारयेत्सोऽवाप्नोति प्रतिष्ठां साप्तलौकिकीम्।। ६

इष्टकानान्तु विन्यासो यावद्वर्षाणि तिष्ठति।
तावद्वर्षसहस्राणि तत्कर्ता दिवि मोदते।। ७

अहन्यहनि यज्ञैश्च यजतो यत्फलं भवेत्।
प्राप्नोति तत्फलं विष्णोर्मन्दिरं कारयेत्तु यः।। ८

यश्च देवालयं भक्त्या विष्णोः कारयति स्थिरम्।
स सप्त पुरुषान् विष्णोर्लोकान् नयति मानवः।। ९

## महाप्रतिष्ठायाः

स्थापिते ह्यमरेज्ये तु शङ्खचक्रधरे हरौ।
तद्रूपालंकृतो भूत्वा स्वकीयैस्सहितस्सुखी।। १०

विष्णुलोके स रमते यथाकामं यथेश्वरः।
यावन्त्यब्दानि नित्यार्चा हरेस्तिष्ठति मन्दिरे।। ११

तावद्वर्षसहस्राणि विष्णुलोके महीयते।
विष्णुयागसमाप्तौ तु प्रक्रान्ते चार्चनाक्रमे।। १२

आविंशतेरतीतानां गुरूणां तस्य वंशिनाम्।
तावताञ्च भविष्याणां विष्णुलोके भवेत् स्थितिः।। १३

मातृपक्षप्रसूतानामपि लोकस्स लभ्यते।
शुश्रूषकानां दासानां तदीयानाञ्च तैस्सह।। २४

हरेर्लोके निवासस्स्यादलभ्यो दैवतैरपि।
स्थानकप्रतिमां स्थाप्य सामीप्यफलमाप्नुयात्।। १५

असीनप्रतिमां स्थाप्य सारूप्यं फलमश्नुते।
शयानप्रतिमां स्थाप्य कर्ता सायुज्यमाप्नुयात्।। १६

प्रतिमां लक्षणवतीं यः कारयति मानवः।

प्रतिष्ठाप्य हरेरर्चां सुप्रशस्ते निवेशने।
पुरुषः कृतकृत्यस्स्यात् न चैनं मरणं तपेत्।। १८
षष्टिर्वर्षसहस्राणां सहस्राणां स मोदते।
स्वर्गौकसां निवासेषु प्रत्येकमृषिसत्तमाः।। १९
आसतेऽगतयोऽतीता आकल्पात् पुरुषाः कुले।
तांस्तारयेत्स संस्थाप्य देवस्य प्रतिमां हरेः।। २०
इन्द्रादयस्सरुद्राश्च ब्रह्मणा च समन्विताः।
देहं त्यक्त्वा दिवं यन्तं गृह्णीयुस्तं नरोत्तमम्।। २१
सम्पूज्यमानस्तैस्सार्धं वैष्णवं लोकमास्थितः।
हरेः सायुज्यमासाद्य नित्यानन्द स मोदते।। २२
शङ्खचक्रगदापाणिः विष्णुरूपधरः पुमान्।
अलभ्यं सर्वदेवैश्च तत् स्फुटं वैष्णवं पदम्।। २३
प्राप्नोतीति पुरा प्राह भगवान् पूर्वजः पिता।
स्थापिते हरिसेनेशे हरेस्सामीप्यमाप्नुयात्।। २४
अर्चने तु कृते पश्चान्मत्पदं समवाप्नुयात्।
मत्तः प्रियतरो लोके देवस्य स भविष्यति।। २५
इति विष्णुः पुरा प्राह न पुनर्जायतेऽर्चकः।

## मार्जनाद्युपचाराणाम्

पूजनार्थं जलं दत्वा वारुणं लोकमाप्नुयात्।। २६
यस्सदा कुरुते विष्णोरालये मार्जनक्रियाम्।
तस्य देहात्सर्वपापं सद्य एव व्यपोहति।। २७
यावन्त्यः पांसुकणिका मृज्यन्ते केशवालये।
तावद्वर्षाणि तिष्ठेत्स सत्यमस्तमलो नरः।। २८

अहन्यहनि यत्पापं कुरुते भुवि मानवः ।
तत्सर्वं नश्यति हरेर्मन्दिरे मार्जनेन वै ।। २९
यो बाह्याभ्यन्तरं देवगेहे सम्मार्जयेत्क्वचित् ।
बाह्यमाभ्यन्तरं तस्य देहो निष्कल्मषो भवेत् ।। ३०
यश्चोपलेपनं कुर्याद्विष्णोरायतने नरः ।
स हरेर्लोकमासाद्य मोदते वै शतक्रतोः ।। ३१
मृदा धातुविकारैर्वा वर्णैर्वा गोमयेन वा ।
उपस्करणकृद्याति विमाने मणिचित्रिते ।। ३२
उदकाभ्युक्षणं विष्णोर्यः करोति तथा गृहे ।
सोऽपि गच्छति यत्रास्ते भगवान् यादसां पतिः ।। ३३
विमानमतिविद्योति समारुह्य विहायसा ।
पुष्पप्रकारैरत्यर्थं सुगन्धैः केशवालये ।। ३४
अनुलिम्पेत यो मर्त्यो न दुर्गतिमवाप्नुयात् ।

## पुष्पादीनाम्

पुष्पं गन्धञ्च यो दद्यादिन्द्रलोकं समाप्नुयात् ।। ३५
धूपस्य तु प्रदानेन रविलोके वसेच्चिरम् ।
विमानमतिविद्योति समारुह्य विहायसा ।। ३६
दीपं दत्वा त्वनिर्वाणं मानवः केशवालये ।
तेजस्वी स यशस्वी च भूयान्नास्य पुनर्भवः ।। ३७
अष्टाङ्गमर्घ्यं यो दद्याच्छ्रद्धया जगदीशितुः ।
जन्मान्तरेऽपि न स्यातां क्षुत्पिपासे तु तस्य वै ।। ३८
स्नानार्थानि च वस्तूनि दद्यात्स्रोतादिकानि यः ।

## घण्टाध्वजछत्रादीनाम्

यस्तु देवालये भक्त्या महाघण्टां प्रलम्बयेत् ।
स कीर्तिं लभते भूमौ पश्चात् स्वर्गेऽपि पूज्यते ।। ४०
यस्तु संवत्सरं पूर्णं तिलपात्रं प्रयच्छति ।
ध्वजञ्च विष्णवे दद्यात् स महाफलमाप्नुयात् ।। ४१
विधुनोति ध्वजः दातुः पापानि विविधानि च ।
धुन्वानस्तु दिवा रात्रौ विष्णोरायतने कृतः ।। ४२
यस्तु विष्णोरायतने प्रच्छन्नपटमुत्तमम् ।
दद्यात् ध्वजप्रदातुस्तु यत्फलं तदवाप्नुयात् ।। ४३

## भूषणादीनाम्

पुष्पाणि हेम रत्नानि दिव्यान्याभरणानि च ।
सौवर्णानि च पात्राणि गवाश्वादींश्चतुष्पदान् ।। ४४
यो दद्याद्विष्णवे भक्त्या तथाऽन्यानपि कांश्चन ।
स तद्वस्तूनि लब्ध्वा वै सुखी स्याद्भाविजन्मसु ।। ४५

## हविषाम्

शुद्धान्नहविषां दाता विष्णुलोके महीयते ।
पायसादिप्रदानेन पूर्वोक्तं लभते फलम् ।। ४६
फलं प्रभूतदानस्य महादानाद्विशिष्यते ।
तस्मात्तु द्विगुणं पुण्यं निवेद्य तु महाहविः ।। ४७
यथाशक्ति निवेद्यापि विष्णुयागफलं लभेत् ।
ताम्बूलं मुखवासञ्च स्रजः कर्पूरदीपकम् ।। ४८
यस्तु भक्त्या हरेर्दद्यात् तस्य दुःखं न सम्भवेत्।

## वाद्यविशेषाणाम

भेरीशङ्खादिवाद्यार्थं भृतिं दद्यात्तु यो नरः ।
तस्य मन्वन्तरं यावत्स्वर्गे लोके स्थितिर्भवेत् ।। ४९

## आरामादीनाम्

आरामञ्च तटाकञ्च मठं कूपं तथैव च ।
विष्ण्वालयसमीपे तु निर्मापयति यो धनी ।। ५०
तस्य पुण्यफलं लोके महादानफलात्परम् ।
देवकार्यपरो भूत्वा स्वां तनुं यः परित्यजेत् ।। ५१
स याति विष्णुसायुज्यमपि पातककृन्नरः ।

## स्नपने द्रव्यविशेषस्य

यस्स्नापयति देवस्य दिव्यमङ्गलविग्रहम् ।
प्रतिप्रस्थन्तु द्रव्याणां स ददाति गवां शतम् ।। ५२
ज्ञानतोऽज्ञानतो वापि यत्पापं कुरुते नरः ।
तत् क्षालयति सन्ध्यायां घृतेन स्नापनं हरेः ।। ५३
प्रतिमासं सिताष्टम्यां घृतस्नापरो हरेः ।
सर्वपापविशुद्धात्मा भविष्यति न संशयः ।। ५४
अयने चोत्तरे प्राप्ते यः स्नापयति केशवम् ।
घृतप्रस्थेन सकलं तस्य पापं क्षयं व्रजेत् ।। ५५
कपिलां विप्रवर्याय दत्वा यद्विन्दते फलम् ।
घृतस्नानेन देवस्य तत्फलं समवाप्नुयात् ।। ५६
स्नाप्यमानन्तु सेवन्ते ये घृतेनोत्तरायणे ।
देवेशं ते विष्णुलोकं यास्यन्ति हतकल्मषाः ।। ५७

दध्यादीनां विकाराणां क्षीरतस्सम्भवो यथा ।
तथैवाशेषकामानां क्षीरस्नापनतो हरेः ।। ५८
आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं यान्ति रूपताम् ।
यथा सुविमलं क्षीरं यथा च सुखकारणम् ।। ५६
तथा स्नापयितुर्ज्ञानं भवेदेव न संशयः ।
ग्रहानुकूलतां पुष्टिं प्रियत्वञ्चाखिले जने ।। ६०
अनुगृह्णाति भगवान् क्षीरस्नापनतोषितः ।
बहुनाऽत्र किमुक्तेन घृतक्षीराभिषेचनम् ।। ६१
नारायणस्य देवस्य कृतं सर्वार्थसाधनम् ।
पुष्पाणि च सुगन्धीनि मनोज्ञानि च यः पुमान् ।। ६२
प्रयच्छेद्देवदेवाय तद्भावेन सुभावितः ।
धूपद्रव्याणि च तथा गन्धाद्यञ्चानुलेपनम् ।। ६३
दीपान् बल्युपहारांश्च यच्चाभीष्टमथात्मनः ।
नरः प्रतिदिनं यज्ञकर्ता स्यादर्पणाद्धरेः ।। ६४
यानि हृद्यानि पुष्पाणि धूपं गन्धानुलेपनम् ।
भूषणानि महार्हाणि यानि दिव्याम्बराणि च ।। ६५
यानि चाभ्यवहार्याणि भक्ष्याणि च फलानि च ।
प्रयच्छेद्देवदेवाय तद्गतेनान्तरात्मना।। ६६
नित्ययाजी भवेत्सोऽपि सर्वयज्ञफलं लभेत् ।
पुण्यतीर्थोदकैर्दध्ना मधुना सर्पिषा तथा ।। ६७
क्षीरेण स्नापयेद्देवीमच्युतञ्च जगत्पतिम्।
दधिक्षीरघृतस्पृष्टान् लोकान् प्राप्य मधुस्रवान्।। ६८
एधिष्यते नरश्रेष्ठो परां प्रप्नोति निर्वृतिम्।
गीतवाद्यादिभिर्देवं य उपास्ते जनार्दनम्।। ६९

गन्धर्वगीतैर्नृत्तैस्स विमानस्थो निषेव्यते ।
जातिस्मरत्वं मेधाञ्च तथैवोपरतिस्मृतिम् ।। ७०
प्राप्नोति विष्वायतने पुण्याख्यानकथाकरः।
तुलस्या देवदेवेशमाराध्य गरुडध्वजम् ।। ७१
देवेन्द्रपदवीं याति स स्यात्पूज्यतमो नरः ।
भक्त्या च पुरुषैः पूजा कृता दूर्वाफलाङ्कुरैः ।। ७२
हरेः तोषकरी सा स्यात्सर्वयज्ञफलप्रदा ।
'दम्भमानविहीनानां स्वार्थं विन्यस्य वै मयि ।। ७३
अपराधहतानाञ्च मत्‌भक्त्या कर्म कुर्वताम् ।
प्रपन्नानामहं यामि शरण्यश्शरणं सदा ।। ७४
करोमि सर्वं साहाय्यं तद्धि मे परमं व्रतम्' ।
इति प्राह पुरा विष्णुर्भगवान् भक्तवत्सलः ।। ६५
विष्वक्सेनप्रसादाच्च प्रसादाच्छार्ङ्गधन्वनः ।
प्रपन्नानां करस्था हि मुक्तिर्भक्तिर्हि तादृशी ।। ७६

इत्यार्षे श्रीवैखानसे भगच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे फलपाककथनं नाम
अष्टाविंशोऽध्यायः ।

----------

अथ एकोनत्रिंशोऽध्यायः

----------

## महास्नपनविधिः उक्तकालाः

अथातस्सम्प्रवक्ष्यामि स्नपनस्य विधिं हरेः ।

महीपालस्य जन्मर्क्षे अयने विषुवे तथा ।
पुण्यर्क्षेषु व्यतीपाते यजमानस्य जन्मभे ।। २
पञ्चपर्वसु चान्यस्मिन् निमित्ते स्नापयेद्धरिम् ।
कालेष्वेतेषु कस्मिंश्चिच्चिकीर्षुस्स्नपनं दिने ।। ३

## अङ्कुरार्पणम

तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे ।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम् ।। ४

## सम्भाराहरणम

ततः परन्तु सम्भारान् यथोक्तान् सुसमाहरेत् ।
मृदोऽचलांश्च धान्यानि अङ्कुरांश्चाष्टमङ्गलान् । ५
पञ्चगव्यं घृतञ्चैव मधु चाथ ततो दधि ।
क्षीरं गन्धोदकञ्चैव अक्षतोदकमेव च ।। ६
फलोदकं कुशोदञ्च रत्नजप्योदके तथा ।
सर्वौषध्युदकञ्चेति क्रमेणैतान् समाहरेत् ।। ७
पुण्यपुष्पाणि चूर्णानि कषायं तीर्थवारि च ।
(सर्वगन्धान् ततः प्लोतं मूलगन्धांस्तथैव च) ।। ८
वनौषधीश्च हारिद्रं चूर्णं सूक्ष्मं मनोहरम् ।
धातून् वस्त्रं भूषणानि सर्वाणि च पृथक् पृथक् ।। ९

## प्राग्द्रव्यलक्षणम् - मृदः

मृदादीनां स्वरूपन्तु विस्तरेण निबोधत ।
नदीतटाकयोस्तीरे केदारे दर्भमूलके ।। १०
गजदक्षिणदन्ते च वृषशृङ्गे तथैव च ।
कुलीरवासे वल्मीके शुद्धामेव मृदं हरेत् ।। ११

## पर्वताः

हिमवानूर्जको विन्ध्यो विदूरो वेदपर्वतः ।
महेन्द्रश्च पुरुश्चन्द्रश्शतशृङ्गश्च पर्वतः ।। १२
पलाशैस्तु तथाश्वत्थैः बिल्वैर्वा खादिरैरपि ।
मृद्भिर्वा कारयेदष्टौ पर्वतानुक्तमानतः ।। १३
अष्टाङ्गुलसमुत्सेधांश्चतुरश्रान् समन्ततः ।
मूले षडङ्गुलघनानग्रे चैव त्रियङ्गुलान् ।। १४
मूलादग्रं क्रमेणैव कर्शितान् पर्वतान् नयेत् ।
श्वेतः पीतोऽसितो रक्तो बर्णस्तेषां दिशां क्रमात् ।। १५

## अङ्कुराणि

शालिव्रीहियवा मुद्गास्तिलमाषप्रियङ्गवः ।
गोधूमाश्चणकास्तिल्वा मसूरास्सर्षपास्तथा ।। १६
धान्यान्युक्तान्यनिन्द्यानि यथालाभं समाहरेत् ।
अङ्कुरांश्चापि यत्नेन तस्मिन् काले समाहरेत् ।। १७

## मङ्गलानि

श्रीवत्सं पूर्णकुम्भञ्च भेरीमादर्शमेव च ।
मत्स्ययुग्माङ्कुशौ शङ्खमावर्तं मङ्गलाष्टकम् ।। १८
पर्वतोक्तैर्दारुभिर्वा मृदा वा कारयेद्बुधः ।
मात्राङ्गुलप्रमाणेन सप्ताङ्गुलसमुच्छ्यान् ।। १९
सर्वेषां पीठमानं स्याद्भागाङ्गुलसमुन्नतम् ।
एवमेतानुक्तमानान् स्वस्वरूपान् प्रकल्पयेत् ।। २०
सुवर्णवर्णं श्रीवत्सं शङ्खभेर्यौ च लोहितौ ।
दर्पणं श्वेतवर्णं स्यान्मत्स्ययुग्मं सितं भवेत् ।। २१

ऊर्ध्वास्यं रक्तनेत्रञ्च कृष्णपक्षं प्रकल्पयेत् ।
अङ्कुशं रक्तदण्डं स्यात् कृष्णवर्णा सृणिर्भवेत् ।। २२
शङ्खं शङ्खनिभं कुर्यादावर्तं रक्तमेव च ।

## प्रधानद्रव्याणि - पञ्चगव्यम

पादप्रस्थं घृतञ्चैव द्विगुणञ्च ततो दधि ।। २३
त्रिगुणञ्च ततः क्षीरं गोमयञ्च चतुर्गुणम् ।
षड्गुणञ्चैव गोमूत्रं योजितं पञ्चगव्यकम् ।। २४

## (२) घृतम्

सद्यस्तप्तं सुवर्णाभं समपक्वं घृतं हरेत्।

## (३) मधु

पुष्पद्रावणकं वापि फलद्रावणकं तथा।। २५
माक्षिकं वा मधु भवेदलाभे कापिलं घृतम्।
अथवा नालिकेराम्बु मधुप्रतिरिधिं हरेत्।। २६

## (४) दधि

न शुक्तं दधि गृह्णीयाद्गृह्णीयात्प्रियदर्शनम्।

## (५) क्षीरम

क्षीरं गव्यञ्च यत्नेन सद्यो दुग्धं समाहरेत्।। २७
गव्यमेव तु सङ्ग्राह्यं वर्ज्यमानञ्चे माहिषम्।

## (६) गन्धोदकम

सर्वगन्धद्रव्ययुतं वारि गन्धोदकं स्मृतम्।। २८

## (७) अक्षतोदकम्

अक्षतैर्मिश्रितं तोयमक्षतोदकमुच्यते।
यवसर्षपकव्रीहिमाषैर्युक्तं तथाऽक्षतम्।। २६

## (८) फलोदकम

कदलीचूतपनसकपित्थामलकैस्तथा।
बिल्वैस्तथा मातुलुङ्गैः कामरैश्च तथा फलैः।। ३०
नारिकेलोदकेनापि मिश्रं स्यात्तत्फलोदकम्।
फलोदकं फलैर्मिश्रं पनसाद्यैः स्मृतं जलम्।। ३१

## (९) कुशोदकम

कुशाग्रैर्मिश्रितं तोयं कुशोदकमिति स्मृतम्।

## (१०) रत्नोदकम्

पद्मारागञ्च वज्रञ्च वैदूर्यं मौक्तिकं तथा।। ३१
प्रवालेन सहैतानि पञ्चरत्नानि निर्दिशेत्।
पुष्परागं मरकतं गोमेदञ्चेन्द्रनीलकम्।। ३३
पञ्चरत्नैस्सहैतानि नवरत्नानि निर्दिशेत्।
नवरत्नयुतं तोयं रत्नोदकमिति स्मृतम्।। ३४
अलाभे सर्वरत्नानां स्वर्णं प्रतिनिधिं क्षिपेत्।

## (११) मन्त्रोदकम

स्पृष्ट्वा तु वैष्णवान् मन्त्रान् कलशं जलपूरितम्।। ३५
जपेददङमखो भत्वा तज्जप्योदकमुच्यते।

## (१२) सर्वौषध्युदकम्

सर्वास्तु फलपाकान्ता ओषध्यस्समुदाहृताः।। ३६
सर्वौषधियुतं तोयं सर्वौषध्युदकं भवेत्।

## अनुद्रव्याणि - पुण्यपुष्पाणि

बिल्वञ्च करवीरञ्च पद्मं कुमुदमेव च।। ३७
नन्द्यावर्तञ्चैकपद्मं तुलसीं क्रान्तमाहरेत्।
अष्टौ वै पुण्यपुष्पाणि स्नपनेऽस्मिन् समाहरेत्।। ३८

## पुष्पलक्षणम्

दिवा वै करवीराख्यं रात्रौ श्वेतं समाहरेत्।
श्वेतञ्च कुमुदं श्रेष्ठं रक्तं पुष्पं विवर्जयेत्।। ३९
दिवा रात्रौ पद्मयुगं रक्तं श्वेतञ्च पूज्यते।

## चूर्णानि

श्रीवेष्टकं मसूरञ्च उशीरञ्चैव चन्दनम्।। ४०
एलालवङ्गकादीनि चूर्णार्थञ्च समाहरेत्।

## कषायचूर्णानि

अश्वत्थस्य वटस्यापि मधूकस्यासनस्य च।। ४१
खदिरस्य कषायस्य वञ्जुलस्यार्जुनस्य च।
पितृद्रुमस्य पट्टानि कषायार्थं समाहरेत्।। ४२

## तीर्थोदकम्

नदीतटाकवापीषु पल्वले निर्झरेषु च।
सद्यो गृहीतमुदकं तीर्थोदकमिहोच्यते।। ४३

## वनौषधयः

सिंही च नकुली व्याघ्राऽनन्ता चादित्यसाह्वया।
पाठा च सहदेवी च दूर्वा चैव जलाम्बुजम्।। ४४
अपामार्गा वशा तिक्तं कण्टकारिः कृशा तथा।
कुरुण्डञ्च मरीचञ्च सूर्यबोधी च सर्षपम्।। ४५
वनौषधय उक्तास्ताश्चूर्णार्थन्तु समाहरेत्।

## हारिद्रचूर्णम्

हरिद्रायाश्च यच्चूर्ण हारिद्रं हि तदुच्यते।। ४६

## सर्वगन्धचूर्णम

स्थौणेयकं हरेणुञ्च पत्रं व्याघ्रनखागरु।
चणकश्श्यामकञ्चैला लवङ्गककचोरके।। ४७
मांसी फलत्वगेळा च स्थिरा नारदसादरम्।
जलं कर्बुरमाहृत्य सर्वान् गन्धान् समाहरेत्।
प्राण्यङ्गञ्च पुरीषञ्च वर्जयेद्गन्धसङ्ग्रहे।। ४८

## उष्णोदकम्

नात्युष्णं नातिशीतञ्च क्वथितं शुद्धवारि च।
पूरयित्वा च करके तत्काले चाहरेत्पुनः।। ४९

## प्लोतम्

प्लोतार्थमपि गृह्णीयाद्वस्त्रयुग्मं ततः परम्।

## मूलगन्धाः

तुलसीं करवीरञ्च बिल्वमामलमालती।
मूलगन्धांस्तु गृह्णीयान्मार्जनार्थं विशेषतः।। ५१

## धातवः

जातिहिङ्गुलिकञ्चापि मञ्जनञ्च मनश्शिलाम्।
धातून् गोरोचनादींश्च अलङ्कारार्थमाहरेत्।। ५२

## अम्बराणि

शुद्धं कौशेयकं वस्त्रं कार्पासं वा समाहरेत्।
चित्रकक्ष्यादिकांश्चैव भूषणानि च शक्तितः।। ५३
अलाभे चोक्तवस्तूनां यथालाभं समाहरेत्।

## आहरणार्हपात्राणि

मृदादिद्रव्याण्याहर्तुं प्रतिद्रव्यं पृथक् पृथक्।। ५४
पात्राण्याढकपूर्णान्येवाहरेन्न कृशानि वै ।
सुवर्णरौप्यताम्राणि अलाभे मृण्मयानि वा।। ५५
पक्वालर्कफलाकारं कलशं सुमनोहरम्।
सुपक्वं खण्डस्फुटितकृष्णमण्डलवर्जितम्।। ५६
ईदृग्विधं प्रशंसन्ति कुम्भमाढकपूरितम्।
कलशानां पिधानार्थं शरावानपि सम्भरेत्।। ५७
ये वै शरावा अत्रोक्ताः प्रस्थप्रस्थार्धपूरणाः।
षट्प्रस्थमेव करकं कुम्भा वै द्रोणपूरणाः।। ५८
उदधानी तु सङ्ग्राह्या चतुर्द्रोणप्रपूरिता।

## कलशालङ्कारः

'देवस्य त्वेति मन्त्रेण कलशादीन् प्रगृह्य च।। ५९

एकाङ्गुलान्तरं विद्वांस्तन्तुना परिवेष्टयेत्।

## दर्भाः

सप्तविंशतिदर्भैस्तु कुर्यात् प्रोक्षणकूर्चकम्।। ६०
वेदः षडङ्गुलायामो मार्जनार्थं विधीयते।
दर्भैस्तु पञ्चदशभिः नवभिर्वाथसप्तभिः।। ६१
दक्षिणावर्तकग्रन्धीन् कूर्चान् कुर्वीत यत्नतः।
ग्रन्ध्यधस्ताद्धस्तमात्रान् दक्षिणावर्तकान् क्रमात्।। ६२
कलशप्रोक्षणायैव कुशान्वापि समाहरेत्।
परिस्तरणकूर्चांश्च अग्निकुण्डे यथा तथा।। ६३
द्वादशाङ्गुलमानेन कलशादिषु कूर्चकाः।
पूर्ववत्तोरणं कुर्याच्चतुर्दिक्षु यथाक्रमम्।। ६४
द्विताललम्बदर्भाभ्यां रशना दर्भमालिका।
स्नपनानान्तु सर्वेषामेतावान् द्रव्यसङ्ग्रहः।। ६५

## नवधा स्नपनम्

उक्तः प्रयोगभेदेन नवधा स्नपने विधिः।
इदानीं सम्प्रवक्ष्यामि स्नपनं त्वधमोत्तमम्।। ६६
क्लृप्तमष्टोत्तरशतकलशैर्विस्तरेण वः।

## शताष्टकलशस्नपनम् - स्नानशाला

आलयात्प्राच्युत्तरे वा ऐशान्यां वा यथाविधि।। ६७
मण्डपं वाथ कूटं वा प्रपां वापि विधानवित्।
स्नपनार्थं यथाशक्ति कारयेन्निलये हरेः।। ६८

मानं चतुर्विंशतिभिः किष्कुभिस्स्याच्चतुर्दिशम्।
तथा षोडशभिर्द्वाभ्यां दशभिर्वाथ किष्कुभिः।। ६९
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमण्डितम्।
सर्वालङ्कालसंयुक्तं वितानादिविभूषितम्।। ७०
पूर्णकुम्भाङ्कुरोपेतं चतुर्द्वारसमायुतम्।
दर्भमालाविलसितं द्वारतोरणसंयुतम्।। ७१

## स्नानश्वभ्रम्

एवं निर्माय तन्मध्ये शिलयेष्टकयापि वा।
मृदा वा कल्पयेच्छभ्रं जलनिर्गमसंयुतम्।। ७२
औपासनानलाकारं स्नानश्वभ्रमुदाहृतम्।
बिम्बपीठप्रमाणात्तु प्रतिदिक्चतुरङ्गुलम्।। ७३
विशालं वेदियुगलयुतं श्वभ्रं प्रकल्पयेत्।
कुल्यां ततः प्रकुर्वीत ततो गच्छेज्जलादिकम्।। ७४
श्वभ्रोत्तरादधः कुल्यां कारयेत्तु विचक्षणः।
अश्वत्थफलकां श्वभ्रे बैल्वीं वा निक्षिपेच्छुभाम्।। ७५

## प्रतिसरः- शयनम्

पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके।
बद्ध्वा प्रतिसरं देवं श्वभ्रदक्षिणपार्श्वतः।। ७६
शयने शाययेद्देवं पूर्वोक्तेन विधानतः।
कौतुकाबन्धनादूर्ध्वं यावत्स्नपनसम्भवः।। ७७
तावदाराधयेद्देवं पाद्याद्यैरष्टविग्रहैः।
प्रातरुत्थाप्य देवेशं हविर्नैव निवेदयेत्।। ७८

## शयनापवादः

(रात्रौ यदि स्यात्स्नपनं शयनं नैव कारयेत्।
तत्काले कौतुकं बद्ध्वा पश्चात्स्नपनमाचरेत्)

## श्वभ्रालङ्कारः - पङ्क्तिः

व्रीहिभिस्तण्डुलैश्चैव चतुः प्रस्थप्रमाणकैः
श्वभ्राद्बहिः समन्ताच्च कलशस्थापनाय वै।। ७९
नवकिष्कुप्रमाणे पङ्क्तिं कुर्यात्प्रयत्नतः।
द्वितालमात्रविस्तीर्णां यथायोगसमुच्छ्रिताम्।। ८०
पङ्क्तिस्स्यात् द्वारमाना वै चतुर्दिक्षु द्वितालका।
शुद्धैस्तु कदलीपत्रैः पद्मपत्रैरथापि वा।। ८१
हारिद्रैर्वाथ पत्रैर्वा पत्रैर्वा कुमुदस्य च।
श्वभ्रमाच्छाद्य तत्रैव कूर्चांश्चोपरि विन्यसेत्।।
सावित्रीमन्त्रमुच्चार्य पूर्वादिषु यथाक्रमम्।
ऐन्द्रादीशानपर्यन्तमूर्ध्ववेद्यां यथाक्रमम्।। ८३

## जयाद्यावाहनम्

जयाञ्च विजयां विन्दां पुष्टिकां नन्दकामपि।
कुमुद्वतीमुत्पलकां विशोकाञ्च प्रपूजयेत्।। ८४

## कलशपूरणम्

पूरयेदुदधानीञ्च वस्त्रपूतेन वारिणा।
रात्रौ जलं न गृह्णीयाद्देवपूजाविधौ बुधाः।। ८५
यदि चेन्निशि कार्यार्थी गृह्णीयादग्निसन्निधौ।

'धारा' स्विति च मन्त्रेण कलशान् परिपूरयेत्।
पूरितान् कलशांश्चैव शरावैः पिहितांश्चरेत्।। ८७
प्रक्षालितशरावेषु मृदादीनि निधाय च।
पञ्चगव्यैस्समभ्युक्षेत्पङ्क्तिं दर्भैश्च संस्तरेत्।। ८८

## सम्भारन्यासप्रकारः - प्राग्द्रव्याणाम्

ईशानशक्रयोर्मध्ये शरावान् सन्न्यसेन्मृदाम्।
हिमालयाद्यानद्रींस्तु प्रादक्षिण्यवशेन वै।। ८६
द्वारनिर्गममार्गेषु आग्नेयादिक्रमात्तथा।
अष्टस्वैन्द्रादिषु न्यस्येद्धान्यान्यग्नियमान्तरे।। ६०
यमनैर्ऋतयोर्मध्ये अङ्कुराणि न्यसेद्बुधः।
द्वारदक्षिणभागेषु पावकादिषु च क्रमात्।। ६१
श्रीवत्सादीनि सन्न्यस्येन्मङ्गलान्यष्ट वै ततः।
न्यस्य प्राक्करणान्येवं कलशन्यासमाचरेत्।। ६२

## प्रधानद्रव्याणाम्

ऐशान्यां पञ्चगव्यस्य प्रधानं कलशं न्यसेत्।
ईशानशक्रयोर्मध्ये घृतस्थानमुदाहृतम्।। ६३
मधुस्थानं तथेन्द्राग्नयोरन्तरे दधि पावकं।
कृशानुयमयोः क्षीरं गन्धोदं यमनीलयोः।। ६४
अक्षतोदन्तु नैर्ऋत्यां नीलाप्पत्योः फलोदकम्।
वरुणोदानयोर्मध्ये कुशोदन्तु न्यसेद्बुधः।। ६५
वायौ न्यसेच्च रत्नोदं जप्योदं वायुसोमयोः।
सोमेशयोस्तथा मध्ये सर्वौषध्युदकं न्यसेत्।। ६६

तत्तत्पार्श्वे न्यसेदष्टावुपस्नानान् पृथक् पृथक्।

**अनुद्रव्याणाम्**

सन्न्यस्य कलशानेवमनुद्रव्याणि च न्यसेत्।। ९७

यमनीलान्तरे पात्रे पुण्यपुष्पाणि विन्यसेत्।

श्रीवेष्टकादिचूर्णञ्च नीलाप्पत्योस्तु मध्यमे।। ९८

वरुणोदानयोर्मध्ये कषायाम्बु विनिक्षिपेत्।

उदानसोमयोर्मध्ये विन्यसेत्तु वनौषधीः।। ९९

जलेशनीलयोर्मध्ये न्यसेद्धारिद्रचूर्णकम्।

सोमसेनेशयोर्मध्ये सर्वगन्धांश्च विन्यसेत्।। १००

शरावस्थानि वस्तूनि पङ्क्त्यभ्यन्तरपार्श्वतः।

उक्तदेशेषु विन्यस्य क्रमेण विधिकोविदः।। २०१

अमितोदानयोर्मध्ये प्लोतादीन्यपि विन्यसेत्।

**उक्तमन्त्रालाभे सावित्र्या क्रिया**

देवदेवं समुद्दिश्य नामन्त्रं किञ्चिदाचरेत्।। १०२

सावित्र्या तत्कर्म कुर्यान्न निर्दिष्टोऽस्ति चेन्मनुः।

**अष्टोत्तरकलशनिष्पत्तिः**

द्वौ द्वौ तु पूरयेद्द्रव्यैः षट् षट् तोयेन पूरयेत्।। २०३

कलशानां प्रधानानां स्याच्चतुर्विंशतिस्तथा।

त्रयस्त्रयस्तु सर्वेषामुपस्नानाय वै पृथक्।। २०४

आहत्य द्वौ सप्ततिस्स्युरुपस्नानास्ततः परम्।

चत्वारस्तीर्थकलशाः नद्यादिजलपूरिताः।। २०५

हरिद्राचूर्णकलशौ द्वावुपस्नानकास्तु षट्।

## कलशालङ्कारः

कलशादीनि विन्यस्य कूर्चांस्तेषु विनिक्षिपेत्।
उत्कूर्चं शान्तिकं विद्यादधः कूर्चन्तु पौष्टिकम्।। २०७
अन्तः कूर्चञ्च कलशं भवेत्तत्राभिचारिकम्।

## सम्भाराधिदेवाः- प्राग्द्रव्याणाम्

मृद्देवता तु हरिणी पर्वतानान्तु हव्यवाट्।। २०८
धान्यानां वायुरुद्दिष्टः अङ्कुराणाञ्च पक्षिराट्।
मङ्गलानां तथेन्द्रस्स्यादेवं प्राक्करणाधिपाः।। २०९

## प्रधानद्रव्याणाम्

प्रधानानां प्रवक्ष्यामि पञ्चगव्याधिपश्शिवः।
उपस्नानाधिपास्तस्य विश्वेदेवाः प्रकीर्तिताः।। ११०
घृतेशस्सामवेदस्तूपस्नानानान्तु वत्सराः।
ऋग्वेदो मधुनश्चोपस्नानानान्तु जलाधिपः।। १११
दध्नोऽधिपो यजुर्वेदः रुद्रास्स्नानाधिपाः स्मृताः।
अथर्ववेदः क्षीरस्य उपस्नानस्य चाश्विनौ।। ११२
गन्धोदकस्यर्तवस्स्युः स्नानानां मरुतः स्मृताः।
काश्यपस्त्वक्षतोदस्योपस्नानानाञ्च गीष्पतिः।। ११३
फलोदकाधिपस्सोमः उपस्नानस्य नागराट्।
कुशोदकस्य मुनयः उपस्नानस्य तक्षकः।। ११४
विष्णू रत्नोकदकस्येशः गन्धर्वाश्च जलाधिपाः।
जप्योदानां सर्वमन्त्रा आपो विद्याधराधिपाः।। ११५
सर्वौषध्युदकस्यार्कः स्नानानामप्सरोगणः।

## अनुद्रव्याणाम्

तथाऽनुकरणानाञ्च देवताश्च निबोधत।। ११६
धाता वै पुण्यपुष्पाणां चूर्णानां चक्र उच्यते।
कषायस्याप्पतिः प्रोक्तः तीर्थोदस्य च षण्मुखः।। ११७
वनौषधीनां रुद्राश्च अधिपाः परिकीर्तिताः।
हारिद्रचूर्णस्य सिनीवाली च परिकीर्तिता।। ११८
उपस्नानस्य राका स्याद्गन्धस्येन्द्रोऽधिदेवता।
उष्णोदके समभ्यर्चे ' त्सर्वतीर्थजल न्त्विति।। ११९
प्लोते त्वष्टा समुद्दिष्टः मूलगन्धे पितामहः।
कात्यायनी धातुषु च कथिता अधिदेवताः।। १२०
उत्तरीये तु सोमस्स्यात् उपवीते तु षण्मुखः।
उपस्नानाधिपा देवा यत्र नोक्तः क्रमेण तु।। १२१
पवित्रं तत्र गृह्णीयादिति प्रोवाच पूर्वजः।

## अधिदेवार्चनक्रमः

कलशोपरि निर्दिष्टं तं तं देवमनुस्मरन्।। १२२
आवाहानाद्यैरर्घ्यन्तैरर्चयेद्विधिपूर्वकम्।
अभ्यर्च्याहतवस्त्रैश्च सर्वानाच्छादयेत्क्रमात्।। १२३

## पङ्क्तीशाद्यर्चनम्

नीलवारणयोर्मध्ये पङ्क्तीशमपि पूजयेत्।
कुबेरेशानयोर्मध्ये शान्तं सम्यक् समर्चयेत्।। १२४

## देवस्यानयनम्

अथ शय्यागतं देवं समुत्थाप्य विधानतः।
अलङ्कारैरलङ्कृत्य तोयधारापुरस्सरम्।। १२५

परीत्य मन्दिरं पश्चात् स्थापयेच्छ्भ्रमध्यमे।

## होमप्रकारः

प्रतीच्यां सर्वशान्त्यर्थं कुण्डमौपासनं चरेत्।। १२६
आघारञ्च ततः कृत्वा पूर्वोक्तेन विधानतः।
आघारान्ते च पूर्वोक्तं हौत्रं सम्यक् प्रशंस्य च।। १२७
देवं श्रियं महीञ्चैव दक्षिणप्रणिधौ जले।
आवाहयेदथाध्वर्युः भक्तिश्रद्धासमन्वितः।। १२८
पङ्क्तीशञ्चापि सेनेशं जयाद्याः कलशाधिपान्।
उत्तरप्रणिधौ देवान् सर्वानावाहयेद्बुधः।। १२९
जुष्टाकारं तत्क्रमेण स्वाहाकारञ्च कारयेत्।
मूलमन्त्रैः क्रमेणैव हुत्वा सर्वं समाचरेत्।। १३०
क्रियाहीने विपर्यासे मन्त्राणां सङ्करेऽपि च।
द्रव्यहीने मानहीने ध्यानहीनेऽन्यथापि च।। १३१
सर्वदोषोपशमनं सर्वसम्पत्समृद्धिदम्।
जुहुयात्पौरुषं सूक्तं विष्णुसूक्तं तथैव च।। १३२
वैष्णवैर्मनुभिष्षड्भिः प्रायश्चित्ताहुतीः हुनेत्।
विदितानान्तु दोषाणां प्रायश्यित्तं यथोदितम्।। १३३
तत्तन्मन्त्रैर्हुनेदग्नावज्ञातं पूर्ववच्चरेत्।

## आचार्यसम्मानम् - स्नापनप्रकारः

यजमानो यथाशक्ति सशिष्यं पूजयेद्गुरुम्।। १३४
आचार्यश्य विशुद्धात्मा सोष्णीषस्सोत्तरीयकः।
प्राङ्मुखस्सन् दधि प्राश्य भक्तिमान् संयतेन्द्रियः।।२३५

आचम्य विधिवद्विद्वान् नमस्कृत्य च भास्करम्।
भूमिं निपीड्य जानुभ्यामासित्वाऽभिमुखं हरेः।। १३६
स्थित्वा वा स्नापयेद्देवं यथार्हञ्च यथोचितम्।
न्यसेत्पुष्पाणि हस्ताभ्यां देवदेवस्य पादयोः।। १३७
सम्प्रणम्य च देवेशं मनसा भावयन् हरिम्।
वेदेन देवपीठात्तु निर्माल्यं परिमार्जयेत्।। १३८
पाद्याद्यर्घ्यान्तमभ्यर्च्य दद्यादाचमनीयकम्।
अष्टभिर्विग्रहैर्देवमर्चयेत्स्नपनासने।। १३९
स्नपने च प्रतिद्रव्यं घण्टां सन्ताड्य चार्पयेत्।
तत्काले तूर्यघोषैश्च शङ्खध्वनिसमन्वितैः।। १४०
नृत्तैर्गेयैश्च वाद्यैश्च विविधैः प्रीणयेद्धरिम्।
ततो मृदस्समादाय आचार्यस्य तु दक्षिणे।। १४१
हस्ते दद्यात् स्थितश्शिष्यः आचार्यः करके स्थितम्।
तोयमादाय कूर्चेन मन्त्रेणैकाक्षरादिना।। १४२
मृदः प्रोक्ष्य तु हस्ताभ्यामाददीत तदा गुरुः।
कूर्चयुक्तं मृदं गृह्य ब्रुवं ' स्त्वं विश्वभू रिति।। १४३
स्नापयेद्देवतीर्थेन मूर्तिमन्त्रैर्यथाक्रमम्।
उद्वर्तयेच्च पाणिभ्यां स्नापयेदुष्णवारिणा।। १४४
वामपार्श्वस्थशिष्यस्य दद्यात्पात्रं ततः करे।
शिष्योऽप्यादाय पात्रन्तु स्वस्थाने स्थापयेत्तु तत्।। १४५
प्रतिद्रव्यं शोधयेच्च निर्माल्यञ्चार्चयेन्नवम्।
येन द्रव्येण देवेशं यस्मिन् कालेऽभिषेचयेत्।। १४६
तद्द्रव्याधिपदेवन्तु तस्मिन् काले विसर्जयेत्।
सर्वमेतेन विधिना विजानीयात् क्रियाक्रमम्।। १४७

## स्नपनमन्त्राः- प्राग्द्रव्याणाम्

'विश्वे निमग्न' इत्युक्त्वा पर्वतान् प्रोक्ष्य गृह्य च।
'अजस्त्वमग्र' इत्युक्त्वा प्रतिदिक् प्रणिपातयेत्।। १४८
नगनामक्रमेणैव मन्त्रेणानेन योजयेत्।
'प्राणप्रसूति' रित्युक्त्वा प्रोक्ष्य धान्यानि पूर्ववत्।। १४६
'त्वं विश्वभू' रिति जपन् धान्यैस्संस्नापयेत्ततः।
'वितत्य बाण' मित्युक्त्वा अङ्कुरान् प्रोक्ष्य चात्वरः।।१५०
'भासा त्व' येति मन्त्रेण अङ्कुरैरर्चयेद्विभुम्।
'त्वं वज्रभृ' दिति प्रोक्ष्य मङ्गलानि पृथक् पृथक्।। १५१
'स्वाहा स्व' धेति मन्त्रेण कारयेत्तु प्रदक्षिणम्।
एवं प्राक्करणैरुक्तं स्नानं द्रव्यैश्च पञ्चभिः।। १५२

## प्रधानद्रव्याणाम्

ततः प्रधानद्रव्यैश्च कूर्यात् स्नपनमादितः।
कलशं पञ्चगव्यस्य चादाय प्रोक्ष्य वै बुधः।। १५३
'वसोः पवित्र' मित्युक्त्वा कूर्चेन द्रव्यमाहरेत्।
स्त्रावयेत्मूर्ध्नि मन्त्रैस्तु पश्चात्स्नानं समाचरेत्।। १५४
सर्वप्रधानद्रव्याणां उपस्नानोदितो मनुः।
'वारीश्चतस्त्र' मन्त्रः स्यात्तेन वार्यभिषेचनम्।। १५५
'अग्न आयाहि' मन्त्रेण घृतेन स्नापयेद्धरिम्।
मधुना स्नापयेद्देव 'मग्निमील' इति ब्रुवन्।। १५६
'इषे त्वोर्जे' त्वेति दध्ना मन्त्रेण स्नापयेद्धरिम्।
'शन्नो देवी' रिति जपन् क्षीरेण स्नापयेत्तथा।। १५७

'अभित्वा शूर' इत्युक्त्वा गन्धोदैस्स्नापयेत्तथा।
'इमा ओषधय' इति स्नापयेदक्षतोदकैः।। १५८
'जपन् द' त्वेति मन्त्रेण स्नापयेत्तु फलोदकैः।
'चत्वारि बा' गिति जपन् स्नापयेच्च कुशोदकैः।। १५६
'तत्पुरुषाये' ति वदन् रत्नतोयाभिषेचनम्।
'पूतस्तस्ये' ति च जपन् जप्योदेनाभिषेचयेत्।। १६०
'चत्वारि शृङ्गे' ति स्नानं सर्वौषध्युदकेन तु।
द्वादशेमानि द्रव्याणि प्रधानानि स्मरन्ति हि।। १६१

## प्रतिद्रव्यमाराधनम्

प्रतिद्रव्यं विशेषेण प्रत्येकाराधनं चरेत्।
पाद्याद्यर्घ्यान्तमभ्यर्चेत् प्लोताद्यैश्चापि विग्रहैः।। १६२

## अनुकरणानाम्

अथानुकरणैरर्चां कुर्याद्देवस्य वै क्रमात्।
'ऋचो यजूंषि' चोच्चार्य पुण्यपुष्पैस्ततोऽर्चयेत्।। १६३
श्रीवेष्टकादीन् सम्प्रोक्ष्य 'त्वं यज्ञ' इति च ब्रुवन्।
उद्वर्तनञ्च तैः कुर्या 'त्स एष' इति च ब्रुवन्।। १६४
सम्प्रोक्ष्य वै कषायञ्च 'हिरण्मय' इति ब्रुवन्।
उद्वर्तनं तेन कुर्या 'त्स सर्व' इति सञ्जपन्।। १६५
तीर्थवारि च सम्प्रोक्ष्य 'प्रोता' स्येत्यभिषेचयेत्।
'सामैश्चे' ति तु सम्प्रोक्ष्य 'यमध्वर' इति ब्रुवन्।। १६६
वनौषधीभिर्देवेशं मार्जयेज्जगतः पतिम्।
'अतो देवादि' ना प्रोक्ष्य चूर्णं हारिद्रकं तथा। १६७

'सिनीवा' लीति मन्त्रेण तेन चोद्वर्तयेद्धरिम्।
'त्वं स्त्री पुमा' निति प्रोक्ष्य सर्वगन्धांश्च भाजने।। १६८
'त्वमेव धाते' ति जपन् गन्धैरुद्वर्तयेत्तथा।
स्नापयेदुष्णतोयेन शोधयेत्तदनन्तरम्।। १६९
विमोच्य च प्रतिसरं स्नापयेच्छुद्धवारिणा।

## पीठान्तरे स्थापनम्

श्वभ्रस्य दक्षिणे पार्श्वे पीठं विन्यस्य भक्तिमान्।। १७०
तत्रोपवेश्य देवेशं शिष्यैश्च सह मन्त्रवित्।
'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतं प्रोक्ष्य यथाक्रमम्।। १७१
'त्वं विष्णु' रिति मन्त्रेण प्लोतेन विमृजेत्ततः।
'त्वं भूर्भुव' इति प्रोच्य मूलगन्धैस्तु मार्जयेत्।। १७२
नवानुकरणान्येवं पुण्यपुष्पादिकानि वै।
'य एवं नित्य' मित्युक्त्वा अलङ्कुर्व्याच्च धातुभिः।। १७३
वस्त्रैराभरणैश्चापि चित्रकक्ष्याभिरेव च।
पाद्यादिनाऽर्चयेद्देवं प्रणिपत्य मुहुर्मुहुः।। १७४
धात्वादिकं त्रिकं विद्याद्भूषणद्रव्यमेव तु।

## अन्तहोमः

अन्तहोमं ततः कुर्याद्विधिना विधिकोविदः।। १७५

## देवस्य स्वस्थानप्रवेशः

आचार्यो यजमानश्च देवदेवं प्रणम्य च।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।। १७६
कनिक्रदादि सूक्तञ्च स्वस्तिसूक्तं तथैव च।
जपन्वै देवमादाय कृत्वाऽगारप्रदक्षिणम्।। २७७

अभ्यन्तरं प्रविश्याथ ब्रह्मभागे यथाक्रमम्।
'प्रतद्विष्णु' रिति जपन् स्थापयेद्विधिकोविदः।। १७८
आराध्य पूर्ववन्मन्त्रैः हविर्भिस्सन्निवेदयेत्।
नैत्यकानि च कुर्वीत बल्यादीनि च पूर्ववत्।। १७९
एष स्नपनसामान्यो मन्त्रद्रव्यक्रियाक्रमः।

## अस्य क्रमस्यान्यत्रातिदेशकथनम्

एवमुक्तौ घटानान्तु सङ्ख्या यत्र विभिद्यते।। १८०
प्रकारभेदो विन्यासे स्नानोपस्नाननिर्णये।
तादृशेष्वभिषेकेषु भेदः पश्चात् प्रवक्ष्यते।। १८१

## चत्वारिंशत्कलशस्नपनक्रमः

अथाष्टचत्वारिंशद्भिः कलशैः स्नपनं हरेः।
वक्ष्यामि नवधा भेदेष्वधमे मध्यमं क्रमात्।। १८२
मृद्भिस्सम्पूरितस्त्वेक एकोपस्नानसंयुतः।
धान्यैस्सम्पूरितस्त्वेकस्तथोपस्नानसंयुतः।। १८३
पञ्चगव्यादिकलशा उपस्नानद्वयेन तु।
तीर्थोदकार्थाश्चत्वारः कलशाः पूर्ववत्स्मृताः।। १८४
हरिद्राचूर्णकलशः उपस्नानैस्त्रिभिर्युतः।
कलशा अष्टचत्वारिंशदेवं गण्या भवन्ति हि।। १८५
सङ्ख्यायामेव भेदोऽत्र शेषं पूर्ववदाचरेत्।

----------

वक्ष्ये चतुर्विंशतिभिः कलशैस्स्नपनक्रमम्।। १८६
पञ्चगव्यादिकलशैरेकोपस्नानसंयुतैः।
चतुर्विंशतिभिश्चैव कलशैस्स्नापयेद्धरिम्।। १८७

हारिद्रेणैव चूर्णेन सर्वगन्धयुतेन च।
शङ्खस्थेन यथालाभं चरेदुद्वर्तनं क्रमात्।। १८८
उष्णोदकेन शुद्ध्यर्थं स्नापयेच्च ततः परम्।
सर्वालङ्कारसंयुक्तं देवमादाय पूर्ववत्।। १८९
जीवस्थाने प्रतिष्ठाप्य कुर्यात्पूर्ववदर्चनम्।

## फलश्रुतिः

एवं यः कारयेत् भक्त्या विष्णोः स्नापनमादरात्।।१९०
सप्तजन्मकृतैः पापैः तत्क्षणाद्विप्रमुच्यते।
पुत्रपौत्रधनादीनां वृद्धिस्तस्य भविष्यति।। १९१

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे महास्नपनविधिर्नाम
एकोनत्रिंशोऽध्यायः।

----------

अथ त्रिंशोऽध्यायः

----------

## सहस्रकलशस्नपनम् - कालः

अथातस्स्नपनं वक्ष्ये सहस्रकलशैस्तथा।
कालः पूर्ववदेव स्यादथ स्यात् द्रव्यसङ्ग्रहः।। १

## सम्भाराः

सस्यक्षेत्रे नदीतीरे तटाके दर्भमूलतः।
गजदक्षिणदन्ते च वृषशृङ्गे तथैव च।। २

कुलीरवासे वल्मीके मृदमष्टसु सम्भरेत्।
पर्वतान् कारयेद्विद्वान् पूर्वोक्तेनैव वर्त्मना।। ३

शालिव्रीहियवान् मुद्गतिलमाषांश्च तिल्वकान्।
निष्पावान् सर्षपांश्चापि धान्यानि सुसमाहरेत्।। ४

एतान्येव तु गृह्णीयादङ्कुरार्थं विचक्षणः।
अष्टौ च मङ्गलान् कुर्यात्पूर्वोक्तेन विधानतः।। ५

पञ्चगव्यादिद्रव्याणि द्वादशोक्तानि पूर्ववत्।
बिल्बञ्च करवीरञ्च कुमुदं पद्ममेव च।। ६

नन्द्यावर्तञ्च तुलसीं धातकीं चम्पकं तथा।
अष्टौ वै पुण्यपुष्पाणि पूजनार्हाणि चाहरेत्।। ७

श्रीवेष्टकं मसूरञ्च उशीरञ्चैव चन्दनम्।
जातीफलञ्च कर्पूरं मुद्गं दमनकं तथा।। ८

उद्वर्तनार्थमेतानि गृह्णीयाच्चूर्णितानि वै।
अश्वत्थस्य वटस्यापि मधूकस्यासनस्य च।। ९

खदिरस्य त्वचश्चैव वञ्जुलस्यार्जुनस्य च।
पितृद्रुमस्य त्वचश्च कषायार्थं समाहरेत्।। १०

नदीतटाकवापीषु पल्वले निर्झरे तथा।
ह्रदे सरसि सेतौ च जलं तीर्थोदकं स्मृतम्।। ११

सिंही च नकुली व्याघ्री अनन्ताक्षीस्सुवर्चला।
मार्जनार्थञ्चौषधयः स्मृता दूर्वा च पाठका।। १२

हरिद्रायाश्च चूर्णञ्च हारिद्रं हि भवेत्पुनः।
हरेणूशीरपत्रञ्च स्थौणेयागरुचन्दनम्।। १३

आहरेत्सर्वगन्धार्थमेलां कर्पूरमेव च।
प्लोतार्थमष्टौ वस्त्राणि गृह्णीयाच्च विशेषतः।। १४

स्पर्शनार्थं मूलगन्धान् कृष्णं कृष्णप्रियां (?) तथा।
दूर्वापामार्गदमनान् पलाशकुशभूस्तृणान्।। १५
मनश्शिलां हरितलं जातिहिङ्गुलिकं तथा।
सौवर्णं गौरिकञ्चैव राजावर्तञ्च गौरिकम्।। १६
श्यामाकञ्चाञ्जनं धातूनलङ्कारार्थमाहरेत्।
कौशेयादि यथाशक्ति वस्त्रमाभरणं हरेत्।। १७
विद्यात्प्राक्करणानीति मृदादीनान्तु पञ्चकम्।
पञ्चगव्यादिद्रव्याणि प्रधानानि तु द्वादश।। १८
पूण्यपुष्पादिनवकं तथाऽनुकरणं स्मृतम्।
धात्वादिकं त्रिकं विद्याद्भूषणं प्रियदर्शनम्।। १९
एवं चतुर्भिरङ्गैस्तु स्नपनं स्यात्सुपुष्कलम्।

## अङ्कुरार्पणम्

अङ्कुरानर्पयित्वैव गुरुरेतान् समाहरेत्।। २०

## स्नानालयः

प्रमुखे चोत्तरे वापि ऐशान्ये वा यथोचितम्।
त्रिपञ्चहस्तविस्तीर्णं त्रिंशद्धस्तायतं तथा।। २१
मण्डपं वाथ कूटं वा प्रपां वापि च कारयेत्।
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम्।। १२
सर्वालङ्कारसंयुक्तं वितानादिविभूषितम्।
पूर्णकुम्भाङ्कुरोपेतं मुक्तादामभिरञ्चितम्। १३
दर्भमालाभिराकीर्णं फुल्लपल्लवशोभितम्।
द्वारस्तम्भेषु सर्वत्र कदलीक्रमुकैर्युतम्।। १४

एवं कृते स्थले द्वेधा विभक्ते पश्चिमेऽङ्कणे।
शिलाभिरिष्टकाभिर्वा श्वभ्रं कुर्यात्तु मध्यमे।। १५
चतुरश्रं चतुर्दिक्षु जलनिर्गमसंयुतम्।
द्वादशाङ्गुलविस्तारं चतुरङ्गुलमुन्नतम्।। १६
एकवेदियुतं कृत्वा सुधया परिलेपयेत्।
श्वभ्रस्य दक्षिणे कुर्यात् कुण्डमौपासनं ततः।। १७

---------

पूर्वेद्युरेव वलयेद्यजमानस्सुसंयतः।
आचार्यसहितांश्चैव कार्यार्थं द्वादशर्त्विजः।। २८
तेष्वेकं योजयेदेवमाचार्यो होमकर्मणि।
हौत्रप्रशंसनायैकं चतुरोऽर्चनकर्मणि।। २९
अभिषेकाय चत्वारो द्वौ द्वौ तु परिचारकौ।

## शयनम्

पूर्वेद्युरेव शर्वर्यां बध्नीयात् कौतुकं क्रमात्।। ३०
पूर्वोक्तेन विधानेन शयने शाययेद्धरिम्।

## स्नानमण्डपपदकल्पनम्

मण्डपस्य तु पूर्वार्धे कलशस्थापनाय तु ।। ३१
प्रत्येकन्तु मृदादीनां द्विप्रस्थैर्व्रीहिभिः क्रमात्।
कुर्वीत सूत्रमार्गेण पदानि दश पञ्च च।। ३२
प्राक्पश्चिमायतां पङ्क्तिं कुर्याद्विंशत्करायताम्।
द्वितालमात्रविस्तारां यथालाभोन्नतां तथा।। ३३
यमान्तरालमन्योन्यं पंक्तयः परिकीर्तिताः ।
ईशानसोमयोर्मध्ये पीठं शान्तस्य तण्डुलैः।। ३४

नीलवारुणयोर्मध्ये मित्रस्थानञ्च कल्पयेत्।
कलशांस्तन्तुनाऽऽवेष्ट्य पूरयेदाढकोदकैः।। ३५

**कलशानां सहस्रत्वनिष्पत्तिः-प्रधानाः**

प्रत्येकञ्च चतुर्विंशाः प्रधानकलशाः स्मृताः।
तत्तद्द्रव्यैः प्रपूर्यास्स्युः पञ्चगव्यादिकैः क्रमात्।। ३६

**उपस्नानाः**

तेषामुपस्नानतया कलशाश्च पृथक् पृथक्।
चत्वारिंशत्तथाऽष्टौ च भवेयुः जलपूरिताः।। ३७

**कषायोदककलशाः - सोपस्नानाः**

कषायस्य तु चत्वार उपस्नानास्तु षोडश।

**तीर्थोदकस्य**

कलशाश्च चतुर्विंशत्तीर्थतोयस्य केवलम्।। ३८

हरिद्राचूर्णकलशाः - सोपस्नानाः

हरिद्राचूर्णकलशाः सोपस्नानाः प्रधानवत्।

**सर्वगन्धकलशाः - सोपस्नानाः**

चत्वारस्सर्वगन्धस्य उपस्नानास्तु षोडश।। ३९
सङ्ख्यैवं कलशानान्तु सहस्राणां प्रकीर्तिता।
कूर्चान् कुशान्वा निक्षिप्य शरावैस्तु पिधाय च।। ४०
प्रक्षालितशरावेषु मृदादीनि निधाय च।
पञ्चगव्यैः समभ्युक्ष्य पङ्क्तीः दर्भैस्समास्तरेत्।। ४१

**द्रव्यन्यासः**

प्रागाद्युत्तरपङ्क्तौ तु प्रत्येकं प्रस्थपूरितान्।
अष्टौ वै मृच्छरावांस्तु युग्मं युग्मं सुसन्यसेत्।। ४२

ततः पर्वतधान्याष्टमङ्गलान्यङ्कुराणि च।
न्यस्य प्राक्करणान्येवं क्रमेणान्यासु पङ्क्तिषु।। ४३
प्रधानान् पञ्चगव्यादीन् सोपस्नानान् न्यसेत्पृथक्।
चतुर्दश्यान्तु पङ्क्त्यां वै तथाऽनुकारणानि तु।। ४४
पुण्यपुष्पाणि चूर्णानि कषायकलशानपि।
तीर्थानां कलशांश्चापि विन्यसेच्च विधानतः।। ४५
ततः परस्यां पङ्क्तौ च विन्यसेच्च वनौषधीः।
हरिद्राचूर्णकलशान् सोपस्नान् क्रमेण तु।। ४६
कलशान् सर्वगन्धस्य प्लोताद्यान्यपराण्यपि।
विन्यासं पञ्चदश्यां वै पङ्क्त्यामेव तु कारयेत्।। ४७
वस्त्रैराच्छाद्य विधिना देवाभिमुखमर्चयेत्।
विष्वक्सेनञ्च पङ्क्तीशमर्चयित्वा च पूर्ववत्।। ४८
पत्रैः श्वभ्रं समाच्छाद्य कूर्चानुपरि निक्षिपेत्।
जयादीः पूजयित्वा तु बैल्वीन्तु फलकां न्यसेत्।। ४९
अश्वत्थफलकां वापि तालोच्छ्रयसमन्विताम्।
सर्वं मानं विजानीयादाचार्यस्यैव हस्ततः।। ५०
आधारञ्च ततः कुर्यात्सूत्रोक्तेन विधानतः।
शयनाद्देवमुत्थाप्य सर्वालङ्कारसंयुतम्।। ५१
ग्रामं प्रदक्षिणीकृत्य स्थापयेच्छ्वभ्रमध्यमे।
पूजयेद्यजमानस्तु वस्त्रहेमाङ्गुलीयकैः।। ५२
आचार्यपूर्वकान् सर्वान् वृतान् स्नपनकर्मणि।

## होमक्रमः

हौत्रप्रशंसनं कृत्वा तदालयगतांस्तथा।। ५३

अधिदेवान् मृदादीनां सर्वानावाहयेत्क्रमात्।
जुष्टाकारं ततः कृत्वा तत्क्रमेणाहुतीर्यजेत्।। ५४

## यथास्थानं प्रवेशः

स्नापयित्वा तु देवेशं सर्वैः द्रव्यैर्यथाविधि।
अलङ्कृत्य ततो देवमालयन्तु परीत्य च।। ५५
प्राणस्थाने प्रतिष्ठाप्य पूजयित्वा विधानतः।
प्रभूतञ्च निवेद्यैव दक्षिणाञ्च प्रदापयेत्।। ५६

## शताष्टकलशातिदेशः

अनुक्तमत्र कुर्वीत शताष्टकलशे यथा।

## आचार्यदक्षिणा

आचार्यदक्षिणा देया स्नापकानां यथाविधि।। ५७
चतुर्णामभिषेक्तॄणां दक्षिणाऽऽचार्यदक्षिणा।
अर्धं अध्वर्युहोत्रोश्च देया वै दक्षिणा भवेत्।। ५८
चतुर्णां कलशोद्धारपूजकानाञ्च तत्समा।
तदर्धं परिचर्तृभ्यां दक्षिणा स्याद्यथाक्रमम्।। ५९
उपयुक्तानि यान्यत्र द्रव्याणि स्नपनोत्तमे।
तानि सर्वाणि वस्तूनि आचार्याय ददेत्ततः।। ६०
देवयागे तु शिष्टं यदाचार्यस्य धनं मतम्।

## फलश्रुतिः

एवं यः कुरुते भक्त्या विष्णोः स्नापनमुत्तमम्।। ६१
स्नापनोक्तं फलं सर्वमवाप्नोति न संशयः।
कामार्थी स्नापयेद्देवं सर्वान् कामानवाप्नुयात्।। ६२

क्षीरेण द्रोणमात्रेण केवलेन घृतेन वा।
गव्येन स्नापयेद्विष्णुं फलमेतदवाप्नुयात्।।　६३

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे सहस्रकलशस्नपनविधिर्नाम
त्रिंशोऽध्यायः।

-----------

अथ एकत्रिंशोऽध्यायः

-----------

## उत्सवचक्रलक्षणम्

अथोत्सवार्थं चक्रस्य संप्रवक्ष्यामि लक्षणम्।
मानाङ्गुलप्रमाणेन विष्कम्भो द्वादशाङ्गुलम्।।　१
तस्यावरणपट्टस्य विस्तारः कोलको भवेत्।
आरकूटप्रदेशस्य घनमेकाङ्गुलोन्नतम्।।　२
विस्तारश्चारकूटस्य वह्न्यङ्गुलमुदाहृतम्।
अर्धाङ्गुलाधिकाः प्रोक्ता आराश्च चतुरङ्गुलाः।।　३
वेणुपत्रसमाकाराः चतुरश्रा विशेषतः।
अराः षोडश चोद्दिष्टाः ते यथायोगबन्धनाः।।　४
कूटमध्यं विजानीयात्फुल्लपङ्कजसन्निभम्।
पृष्ठं तस्य विनिर्दिष्टं पद्मस्य मुकुलोपमम्।।　५
प्रभाज्वालासमज्वालात्रितयेन युतं तु यत्।
वल्ली समचतुर्लेखा पट्टमध्यं विनिर्दिशेत्।।　६
योगदण्ड अधः स्यात्तु कोलकायाम इष्यते।
नाहस्तस्य समुद्दिष्टः गुरुभिश्चतुरङ्गुलः।।　७
फलकायामविस्तारौ पञ्चाङ्गुलमितौ स्मृतौ।
उभयोः पार्श्वयोः कुर्यादुभौ सिंहौ व्यवस्थितौ।।　८

तस्याधस्ताच्च कुम्भञ्च यथायोगमनिन्दितम्।
कुम्भाकारञ्च वलयं दण्डमध्यविभूषितम्।। ९
पद्माकारन्तु पीठस्य दलैः षोडशभिर्युतम्।
(नेमिरर्धाङ्गुल ज्ञेयं नाभिदेशन्तु गोलकम्।। १०
व्रीलितं सिंहवदनं महानासिकवल्लिखेत्)।
दलान्तरं परीणाहोऽधोमुखो यमितो भवेत्।। ११
पञ्चाङ्गुलसमुत्सेधः पद्मपीठस्य मध्यतः।
(नराकृतिः स्थितो देवः किरीटाभरणाञ्चितः) ।। १२
सर्वमेतद्यथायोगं घनयुक्तमनिन्दितम् ।
गर्भक्रियां पुनः कृत्वा मधूच्छिष्टविधानतः।। १३
विद्राव्य लोहं यत्नेन सर्वमेतत्प्रपूरयेत्।
चक्रदेवस्य यो लोहः दण्डस्तल्लोह उच्यते।। १४
अथवा शुभवृक्षस्य सारो दण्डः प्रशस्यते।
चक्रायामत्रिगुणितो दण्डायामः स्मृतो बुधैः।। १५
तस्य मूलपरिणाहो द्वादशाङ्गुलमुच्यते।
मूलादूर्ध्वं कृशं कृत्वा अग्रे नाहो नवाङ्गुलम्।। १६
पीठाग्रे द्व्यङ्गुलं योज्यं वलयं दण्डमध्यमे।
कुम्भाधस्तात् फलकयोः दण्डाग्रं कीलकं तथा।। १७
जत्वादिभिस्समालिप्य योजयेच्छङ्कुना दृढम्।
अनुक्तमत्र यत्सर्वं युक्त्या बुद्ध्या तु कारयेत्।। १८

## चक्रप्रतिष्ठा

अत ऊर्ध्वं यथोक्तेन विधिना स्थापनं चरेत्।
बिम्बशुद्धिञ्च कृत्वा तु वास्तुहोमञ्च कारयेत्।। १९

कुण्डमौपासनं कुर्यात्प्रधानं यागमन्दिरे।
तस्य दक्षिणतः कुर्याच्छय्यावेदिं विधानवित्।। २०
संस्नाप्य पञ्चकलशैश्चक्रमाघारमाचरेत्।
ततः प्रतिसरं बद्ध्वा शाययेच्च विधानतः।। २१
हौत्रं प्रशंस्य विधिवत्सर्वदैवत्यमार्गतः।
समावाह्य ततश्चक्रं तत्स्थानस्थान् सुरानपि।। २२
जुष्टाकारञ्च कृत्वा तु तत्क्रमेणाहुतीर्यजेत्।
जुहुयाच्चक्रगायत्र्या शतमष्टोत्तरं बुधः।। २३
रात्रिशेषं ततो नीत्वा उषः कालं समीक्ष्य च।
स्नात्वा सम्यग्विशुद्धात्मा पूर्वाह्णे तु विशेषतः।। २४
ततश्चक्रस्य मन्त्राभ्यां मूर्तिस्थापनमाचरेत्।
यजमानस्तु तत्काले सशिष्यं गुरुमादरात्।। २५
पूजयेद्वस्त्रभूषाद्यैर्दद्याद्विपुलदक्षिणाम्।
पुण्याहं वाच्य तत्काले चक्रमभ्यर्च्य चादरात्।। २६
हविर्निवेदयेच्चक्रमुत्सवार्थं विनिर्दिशेत्।
एवं यः कुरुते भक्त्या चक्रस्य स्थापनं नरः।। २७
सर्वान् कामानवाप्नोति कर्मसिद्धो भविष्यति।
स विशेषेण शुद्धात्मा विष्णुलोके महीयते।। २८

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे उत्सवचक्रलक्षणप्रतिष्ठाविधिकथनं नाम
एकत्रिंशोऽध्यायः।



## अथ द्वात्रिंशोऽध्यायः

-----------

### महोत्सवविधिः

अतः परं प्रवक्ष्यामि क्रमेणैवोत्सवं हरेः।
अयने विषुवे चैव विष्णुपञ्चदिनेषु वा।। १
यजमानस्य जन्मर्क्षे राज्ञो जन्मर्क्ष एव वा।
अयने मासनक्षत्रे प्रतिष्ठान्तदिने तथा।। २
उत्सवान्तन्तु सङ्कल्प्य तत्र तीर्थं प्रकल्पयेत्।
एतेष्वेकं परिग्राह्यं यजमानेच्छया दिनम्।। ३

### त्रिविध उत्सवः

उत्सवश्च त्रिधा प्रोक्तः अर्थवद्भिर्हि नामभिः।
कालश्रध्दानिमित्ताख्यास्तेषां लक्षणमुच्यते।। ४
(त्रयाणामुत्सवानान्तु ध्वजारोहणमाचरेत्)
मासे तु यस्मिन् कस्मिंश्चित्प्रतिसंवत्सरं हरेः।
क्रियते नियते काले स तु कालोत्सवः स्मृतः।। ५
श्रध्दया भक्तियुक्तेन क्रियते येन केन वा।
अभीष्टकाले स हरेः श्रद्धोत्सव इतीरितः।। ६
उत्पन्नेषु निमित्तेषु त्वनावृष्ट्यादिकेषु यः।
क्रियते दोषशान्त्यर्थं स निमित्तोत्सवो भवेत्।। ७
उत्तमञ्चोत्सवञ्चेच्छन् त्रिसप्ताहन्तु कारयेत्।
मध्यमं कर्तुकामस्तु दिनानि तु चतुर्दश।। ८
एके नवाहं ब्रुवते मध्यमं तत्र कोविदाः।
सप्ताहमधमं कुर्याद्देवदेवस्य तूत्सवम्।। ९

## उत्सवारम्भघोषणम्

उत्सवस्य च यावन्ति निर्दिष्टानि दिनानि वै।
तानि तु त्रिगुणीकृत्य तदादौ घोषणं चरेत्।। १०
केचिद्दशदिनात्पूर्वं केचिदेकादशादथ।
उत्सवादिदिने चापि घोषणं सम्प्रचक्षते।। ११

## ध्वजदारूणि

ध्वजार्थं ब्राह्मणानान्तु वेणुदण्ड उदाहृतः।
नृपाणां जातिवृक्षोत्थः वैश्यानां चम्पकस्तथा।। १२
शूद्राणां क्रमुकश्चैव सम्प्रोक्तः पुष्टिकामिनाम्।

## प्रतिनिधिः

अलाभे तूक्तवृक्षाणां सर्वेषां क्रमुकं हरेत्।। १३
अथवा यज्ञवृक्षाणां सारमिच्छन्ति केचन।
(मधूकं सालवृक्षञ्च पनसञ्च समाहरेत्
सारवृक्षः पुमान् प्रोक्तः असारः स्त्री नपुंसकः
पुंवृक्षमेव गृह्णीयान्नारीषण्डौ त्यजेद्बुधः)

## ध्वजदण्डलक्षणम्

ध्वजदण्डमृजुं कुर्याद्विमानप्रमितोच्छ्रयम्।। २४
विमानात्पादहीनं वा विमानार्धमथापि वा।
यथालाभपरीणाहं गृह्णीयाद्विधिवद्बुधः।। १५
यष्ट्याधारत्रयं कुर्यान्मध्यच्छिद्रसमन्वितम्।
यमायामार्धविस्तारं दारुणा याज्ञिकेन वै।। २६

## लोहकवचम्

(स्वर्णादिकोशसंयुक्तं यथाविभवविस्तरम्
आदिमध्यान्तभागेषु ब्रह्मेशहरिदैवतम्
तालद्वयव्यवहितौ दण्डाग्राद्विधिवत्ततः।
यष्ट्याधारं द्वितीये तु योजयेत्तत्क्रमेण वै।। १७
तस्याधस्तात्तृतीये तु यमे चैव तृतीयकम्।
यमत्रये ततोऽतीते प्रथमं योजयेत्ततः।। १८

## ध्वजस्य नैयत्यम्

हरेस्तु पुरतो नित्यं भूतपीठं ध्वजस्तथा।
नियमेन प्रतिष्ठाप्यौ हीनयोर्नोत्सवस्तयोः।। १९
तस्मात्सर्वप्रयत्नेन तयोः संस्थापनं चरेत्।
प्रतिष्ठोक्तविधानेन प्रतिष्ठां कारयेत्क्रमात्।। २०

## ध्वजपटलक्षणम्

ध्वजायामं ध्वजपटं मूलादग्रान्तमुच्यते।
अर्धायामं पादसममष्टतालमथापि वा।। २१
शुद्धकार्पासवस्त्रेण सुदृढेन नवेन वै।
आयामोचितविस्तारं यथालाभं समाहरेत्।। २२
पटस्थानं चतुर्धा तु विभज्यैकेन वै शिरः।
भागद्वयेन वै वंशं पुच्छमेकेन कारयेत्।। २३
(मध्ये हीनञ्च कृत्वा तु पादयोः पुच्छमाहरेत्।
मध्याद्धीनं तथा कुर्यादग्रान्तञ्च विचक्षणः।
अग्रे मूलेऽपि च तथा सीव्येत्सूत्रैस्सयष्टिकम्)

## पटगरुडः

तन्मध्ये विलिखेद्वीशमामीनं प्राञ्जलिं शुभम्।
पञ्चवर्णसमायुक्तं नवतालेन मानतः।। २४
आकाशारोहिणं वापि वीरासनमथापि वा।
वामपादं समाकृञ्च्य दक्षिणं सम्प्रसार्य च।। २५
साञ्जलिश्चोर्ध्वमुत्तिष्ठेदाकाशारोहणं हि तत्।
पार्श्वयोर्व्यजने कुर्यादुपरि च्छत्रमेव च।। २६
वीशस्य दक्षिणे बाहौ वालं सर्पस्य लेखयेत्।
सर्पस्य सुमुखस्येत्थं लब्धामृतमनिन्दितम्।। २७
एतत्सर्वं दिवा कृत्वा सायमुद्धोषणं चरेत्।

## मण्डपालङ्कारः

देवालयस्याभिमुखे मण्डपञ्चोपलेपयेत्।। २८
चतुर्दिशं चतुर्हस्तं पञ्चहस्तमथापि वा।
पञ्चवर्णैरलङ्कृत्य धान्यानि च समास्तरेत्।। २९
पुण्याहं वाचयित्वा च प्रोक्षणैः प्रोक्षणं चरेत्।
पश्चिमे चक्रमुद्दिश्य पीठं कुर्याद्यथोचितम्।। ३०
ध्वजदेवं समुद्दिश्य प्राच्यां पीठं प्रकल्पयेत्।
उत्तरे चामितस्थानं तथा च परिकल्पयेत्।। ३१
पश्चिमे चोन्नते पीठे देवीभ्यां स्थापयेद्धरिम्।

## पटप्रतिष्ठा

पूर्वस्मिन् दिवसे रात्रौ प्रतिष्ठोक्तक्रमेण वै।। ३२
प्रतिष्ठाप्य पटे वीशं समावाह्य समर्चयेत्।
अलङ्कृतस्त्वथाचार्यः वस्त्राभारणमण्डनैः।। ३३

अभ्यर्चयित्वा देवेशमनुमान्यच मन्त्रतः।
पुण्याहं वाचयित्वा तु सर्वत्र प्रोक्षणं चरेत्।। ३४

## भेरीताडनम्

अलङ्कृत्य च वस्त्राद्यैः भेरीं पारशवं तथा।
देवस्य पुरतः स्थाप्य भेर्यां नन्दीशमर्चयेत्।। ३५
स्नानपुष्पानुलेपैश्च भवेन्नन्दीशपूजनम्।
'भूतेशं विष्णुभक्तञ्च महाभूतं गदाधरम्'।। ३६
इति भेर्यां समभ्यर्च्य 'उपश्वासय' मन्त्रतः।
अत्रिप्रोक्तप्रकारेण गद्यतालसमन्वितम्।। ३७
भेरीं सन्ताड्य प्रथममाचार्यस्तदनन्तरम्।
ताडयेद्वादकेनाथ क्रतुदीक्षान्वितेन वै।। ३८

## बलिदानप्रकारः

आचार्यः पुरतो गच्छेत्ततो वाद्यादिसंयुतः।
विष्वक्सेनञ्च गरुडं ध्वजं चक्रं पुरो नयेत्।। ३९
बलिद्रव्यञ्च सङ्गृह्य सह शिष्येण देशिकः।
दद्याद्बलिं द्वारदेशे नित्ययात्राबलिक्रमात्।। ४०
ब्रह्मस्थानं ततो गत्वा समभ्यर्च्य बलिं ददेत्।

## देवताह्वानम्

बलिदेवांत्समावाह्य सर्ववाद्यसमायुतम्।। ४१
घोषयेदेवमुच्चैस्तु सर्वत्र बलिसन्धिषु।
'देवेशस्योत्सवं द्रष्टुमागच्छन्त्वत्र देवताः।। ४२
स्वगणैस्सह तिष्ठन्तु बलिं भुञ्जन्तु सादरम्'।
एवमुक्त्वा तु सर्वत्र बलिं तेभ्यः प्रदापयेत्।। ४३

पश्चाद्वदे 'दुत्सवेन चैतेन सुकृतेन वै।

प्रीयतां भगवान् देव' इति भक्तियुतो गुरुः।। ४४

इन्द्रादिस्थानमासाद्य तत्तन्मन्त्रमुदीरयन्।

पूर्वोक्त विधिना कुर्याद्धोषणं वाद्यसंयुतम्।। ४५

## वीथीभ्रमणम्

एवं विमानं परीत्य पश्चाद्ग्रामोत्सवं नयेत्।

आलयोक्तक्रमेणैव वीथीषु चतसृष्वपि।। ४६

दिक्ष्वष्टसु दिशां पालान् समावाह्य समर्च्य च।

बलिं दद्यात् घोषयेच्च गद्यपद्यसमन्वितम्।। ४७

भूतपीठं समासाद्य बलिशेषञ्च निक्षिपेत्।

## ध्वजारोहणक्रमः

पादौ प्रक्षाल्य चाचम्य शान्तादीन् पूर्ववन्न्यसेत्।। ४८

अर्चास्थानं प्रविश्यैव सम्भारानपि सम्भरेत्।

कूर्मपीठे समासीनः पुण्याहमपि वाचयेत्।। ४९

दशदानञ्च कृत्वैव द्विजेभ्यो दक्षिणां ददेत्।

(स्थापितश्चेद्ध्वजः पूर्वं यथाशास्त्रं क्रमेण वै।। ५०

जलेनाभ्युक्षणं कृत्वा ध्वजदण्डं विशोधयेत्)

'सुपर्णोऽसीति' मन्त्रेण पटमारोपयेत्सुधीः।

ऊर्ध्वयष्ट्या समारोप्य प्रदक्षिणवशं नयेत्।। ५१

चतुर्दशयमायामामृजुं यष्टिं प्रगृह्य च।

तदग्रात्संव्यपोह्यैव त्रितालं वै विधानवित्।। ५२

पटं तत्रैव बध्नीयात्पाशेन सुदृढेन वै।

नारिकेलयुताग्रञ्च तत्त्वचा कृतरज्जुना।। ५३

तन्तुरज्जुयुतेनापि दर्भरज्ज्वा सवंशया।
यष्ट्याधारत्रये सम्यग्योजयित्वा तु बन्धयेत्।। ५४

## प्रतिष्ठितध्वजहीने

(संव्यपोह्य चतुस्तालं पृष्ठे यूथाधिपस्य तु।
पूर्वं प्रतिष्ठाहीने तु येन केनापि हेतुना।
कालोत्सवे तु संप्राप्ते ध्वजं संस्थापयेत् द्रुतम्।
खानयित्वा ध्वजस्थाने त्रितालं निम्नमेव तु।
स्थापयित्वा ध्वजं तत्र ध्वजमन्त्रेण मन्त्रवित्।
पीठं कुर्याञ्च तन्मूले त्रिवेदिसहितं क्रमात्।
दण्डात्त्रितालविस्तीर्णं प्रतिदिक् चतुरङ्गुलम्।
एवं स्यात्प्रथमा वेदिः द्वितीया तु द्वितालका।
तृतीया चैकताला स्यादेकैकं तालमुन्नतम्।
अथवा कलयेद्विद्वान् चतुरश्रं समन्ततः।
द्वितालमात्रमायामं तथा तालद्वयोन्नतम्।
प्रतिष्ठोक्तक्रमेणैव स्थापयेद्ध्वजदण्डकम्।
पुण्याहं वाचयित्वा तु ध्वजमारोपयेत्पटम्)।
दर्भमालाचूतपत्रतोरणादीनि बन्धयेत्।
ध्वजमूलेऽर्चयित्वा तु पुष्पगन्धाक्षतादिभिः।। ५५
धूपं दीपं समर्प्यार्घ्यं मुद्गान्नञ्च निवेदयेत्।

## पटगरुडार्चनम्

ध्वजं पटस्थं गरुडं त्रिषु सन्धिषु पूजयेत्।। ५६
द्विकालं मध्यमं प्रोक्तमधमञ्चैककालिकम्।

## गरुडनिवेदितान्नभक्षणफलम्

वीशार्पितञ्च मुद्गान्नं वन्ध्या या भुञ्जते स्त्रियः।। ५७
तास्सुपुत्रानवाप्यैव भवेयुर्जीवभर्तृकाः।
महाभूतार्पितान्नञ्च भुञ्जीयाद्योऽपि वा नरः।। ५८
भूतप्रेतपिशाचादिभयान्मुच्येत सोऽनघः।
आब्रह्मभुवनाद्देवानुत्सवार्थं समाह्वयेत्।। ५६

## ग्रामालङ्कारादि

(उत्सवारम्भकाले तु ग्रामस्थाः ग्रामवासिनः।
अन्यत्र यदि गच्छेयुः कार्यार्थं शुभकाङ्क्षिणः।
प्रतिगच्छेयुरेवात्र अर्वाक् तीर्थदिनात्ततः।
सिद्धवत्कारयेच्चैव रङ्गादीन् साधयेच्छुभान्।
आलयात्पुरतो वापि दक्षिणे वा मनोरमम्।
पूर्ववद्यागशालार्थं षोडशस्तम्भसंयुतम्।
मण्डपं वाथ कूटं वा प्रपां वाऽलङ्कृतं स्थलम्।
समीकुर्यात् विधानेन यथाविभवविस्तरम्।
क्रियते यत्र वै विष्णोरुत्सवो विधिपूर्वकः।
तं ग्रामञ्चाप्यलङ्कुर्यात्तत्र रथ्या विशेषतः)।
उत्सवादिदिने विद्वान् अपराह्णे यथाक्रमम्।
मृत्तिकाग्रहणं कुर्यादङ्कुरार्थं विशेषतः।। ६०

## उत्सवाङ्गस्नपनम् - आचार्यवरणम्

एतत्पूर्वन्तु मध्याह्ने देवेशस्नपनं चरेत्।
सायं नित्यार्चनान्ते तु आचार्यो देवसन्निधौ।। ६१

स्वर्णादिपात्रे सन्न्यस्य द्विप्रस्थं तण्डुलं कुशम्।
नालिकेरञ्च ताम्बूलं निष्कं सौवर्णदक्षिणाम्।। ६२
नी 'त्वोत्सवं कुरु' ष्वेति यजमानेन पूजितः।
आचार्यस्सुप्रसन्नात्मा 'प्रीयतां भगवा' निति। ६३
प्रार्थनासूक्तमुच्चार्य देवेशं प्रणमेत्तदा।
शिष्यहस्ते ददेत्पात्रं चक्रशान्तौ समानयेत्।। ६४
पूर्वोक्तां दिशमुद्दिश्य गच्छेत्सूक्तजपैस्सह।
आचार्यस्साधनैर्युक्तः शिष्येण सहितो व्रती।। ६५

## मृत्सङ्ग्रहणम्

गोमयेनोपलिप्ते तु पुण्याहजलपाविते।
संस्थाप्य देशे शान्तादीन् पुण्याहं वाचयेत्पुनः।। ६६

## मृत्सङ्ग्रहणदेशः-तत्र गमनम्

ध्वजतूर्यादिकान् सर्वान् पुरस्कृत्य ततो व्रजेत्।
प्राच्यां सर्वसमृद्धिस्स्यात् आग्नेय्यां धान्यनाशनम्।। ६७
याम्ये जनविनाशः स्यात् नैऋत्यां धननाशनम्।
अनावृष्टिश्च वारुण्यां राजकोपश्च पावनौ।। ६८
सौम्ये पुत्रसमृद्धिस्स्यादैशान्यां सुखदं भवेत्।
एतासान्तु दिशां मध्ये प्रशस्तास्स्युरथान्तराः।। ६९
नवतालेन मानेन वर्तुलां कल्पयेद्भुवम्।
वाल्मीक्या मृत्स्नया पञ्चवर्णैस्सम्यगलङ्कृताम्।। ७०
समालिखेत्तत्र देवीं हरिणीं हरिवल्लभाम्।
ऊर्ध्ववक्त्रांञ्च शयितां ऐशान्ये न्यस्तमस्तकाम्।। ७१

नैरृतन्यस्तपादाब्जां मेदिनीं परिकल्पयेत्।
तामर्घ्यान्तं समभ्यर्च्य प्रोक्षणैः प्रोक्षणं चरेत्।। ७२
'उद्धृतासि वराहे' ति वराहं भावयेद्गुरुः।।
एकादशोपचारैश्च भूसूक्तेनार्चयेत्क्रमात्।। ७३
तत्पूर्वे वीशमभ्यर्च्य दक्षिणे चक्रमर्चयेत्।
वस्त्रेण भूषणैर्माल्यैर्गन्धैर्देवीञ्च भूषयेत्।। ७४
ततोऽनुज्ञाप्य तां देवीं तदङ्गे मृदमाहरेत्।
ललाटे सर्वदोषघ्नं बाह्वोर्बहुसुवर्णदम्।। ७५
स्तनद्वये वयोवृद्धिः जठरे सर्वसम्पदः।
अधःकाये मृदं तत्र नाहरेत कदाचन।। ७६
एवं ज्ञात्वा विधानेन मेदिनीं मनसा स्मरन्।
'त्वां खना' मीति चोक्त्वा तु खनित्रं घनमाहरेत्।। ७७
उभाभ्यामपि हस्ताभ्यां खनित्रेण खनेद्भुवम्।
महीं देवीमनुज्ञाप्य तालनिम्नन्तु खानयेत्।। ७८
अपोह्योर्ध्वगतां मृत्स्नां तदधोभागगां मृदम्।
उच्चरन् वैष्णवान् मन्त्रान् शुद्धपात्रे तु सङ्ग्रहेत्।। ७९
सौवर्णे राजते वापि ताम्रे कांस्येऽथ मृण्मये।
चक्रशान्तौ समभ्यर्च्य अपूपांश्च निवेदयेत्।। ८०
पश्चाद्गन्धांश्च ताम्बूलं दक्षिणाञ्च विशेषतः।
दद्यादाचार्यपूर्वेभ्यो द्विजेभ्यो देवसन्निधौ।। ८१

## आलयप्रवेशः

सर्ववाद्यसमायुक्तो मृदमादाय वाहने।
शिरसा धारयित्वा वा पुरस्ताच्छक्रशान्तयोः।। ८२

ग्रामप्रदक्षिणं नीत्वा देवालयमुपाव्रजेत्।

## अङ्कुरार्पणम्

आलयस्योत्तरे पार्श्वे प्रथमावरणे क्रमात्।। ८३
अङ्कुरानर्पयित्वा तु उत्सवारम्भमाचरेत्।
उत्तमं मध्यमं वापि कारयेदुत्सवं ततः।
तीर्थोक्तदिवसात्पूर्वं नवमे वाथ सप्तमे।। ८४
पञ्चमेऽहनि वा कुर्या देवमेवाङ्कुरार्पणम्।
(मरीच्युक्त विधानेन कारयेदङ्कुरार्पणम्)।। ८५
सूत्रोक्तविधिना कुर्याद्वास्तुहोमं सगव्यकम्।
पटस्थगरुडस्यापि अक्ष्युन्मेषणपूर्वकम्।। ८६
प्रोक्षणञ्चाधिवासार्थं शोषणादीनि कारयेत्।
उक्तन्याससमायुक्तं प्रतिष्ठाञ्च समाचरेत्।। ८७
वीथ्यादीनां विशुद्ध्यर्थं पर्यग्निकरणं चरेत्।
पूर्वेद्युरेव सायाह्ने कुर्याद्वाऽह्नि तु मध्यमे।। ८८

## उत्सवक्रमः

अत ऊर्ध्वं प्रवक्ष्यामि विधिनैवोत्सवक्रमम्।
प्रथमेऽहनि सायञ्च प्रदोषे च विशेषतः।। ८९
विष्णोस्सपरिवारस्य विशेषेण मुदाऽन्वितः।
पूजाञ्च कारयेद्भक्त्या यजमानस्स्वशक्तितः।। ९०
आरम्भादासमाप्तेस्तु सायं प्रातर्दिने दिने।

## नित्यहोमः

आज्येन चरुणा मूर्तिहोमं कुर्याद्दिवसन्ध्ययोः।। ९१

सर्वेभ्यः परिवारेभ्यः यथावद्विधिकोविदः।

## दिनदैवत्यम्

प्रथमं ब्रह्मदैवत्यमार्षं स्यात्तु द्वितीयकम्।। ९२
तृतीयं वै रौद्रमाहुश्चतुर्थं वासवं स्मृतम्।
पञ्चमं सोमदैवत्यं षाष्ठं वैष्णवमुच्यते।। ९३
सप्तमं सर्व दैवत्यमष्टमं याम्यमेव च।
नवमं चार्षकं प्रोक्तं दशमं सौरमुच्यते।। ९४
कौबेरमेकादशकं वायव्यं द्वादशं स्मृतम्।
त्रयोदशं स्यात्कौमारं रौहिणन्तु चतुर्दशम्।। ९५
ततः पञ्चदशञ्चैव वैष्णवं परिकीर्तितम्।
सौरन्तु षोडशं सप्तदशं कौबेरमुच्यते।। ९६
अष्टादशं नृसूक्तं कौमारमेकोनविंशकम्।
वैघ्नं विंशतिकं प्राहुरेकविंशञ्च वैष्णवम्।। ९७

----------

प्रथमेऽह्नि प्रभाते तु देवीभ्यां सहितं हरिम्।
अलङ्कृत्य विशेषेण वस्त्रैराभरणैरपि।। ९८
पीठे संस्थाप्य चादाय नयेदास्थानमण्डपम्।
आरोप्य चोन्नते पीठे परिवारांश्च पूर्ववत्।। ९९
पुण्याहं ताडनं भेर्याः देवाह्वानञ्च कारयेत्।
विष्वक्सेनमलङ्कृत्य गारुडं पटमादरात्।। १००
चक्रञ्च गन्धैर्माल्याद्यैः छत्रचामरपिञ्छकैः।
द्रोणैः द्रोणार्थकैर्वापि तदर्धैर्वापि तण्डुलैः।। १०१
निष्पावैश्च कुलुत्थैश्च सलाजैस्सक्तुभिस्तथा।
पाचयित्वा विधानेन मुद्गतिल्वसमन्वितम्।। १०२

अपूपैरपि संयुक्तं कटाहे प्रक्षिपेद्बलिम्।
पुष्पं तोयं धूपदीपगन्धाक्षतयुतं तथा।। १०३
घण्टानादसमायुक्तं सर्ववाद्यसमन्वितम्।
बलिद्रव्यं समादाय द्वारपालपुरस्सरम्।। १०४
बलिं दद्यात् विधानेन चक्रस्य पुरतो व्रजेत्।
चक्रस्य पश्चिमे वीशं तत्पृष्ठे चामितं नयेत्।। १०५
बलिर्देयः प्रयत्नेन बलिवाद्यसमन्वितम्।
आचार्यो हरिरूपस्स्याच्छत्रचामरसंयुतः।। १०६
सर्वालङ्कारसंयुक्तः सर्ववाद्यसमन्वितः।
जनैः परिवृतो गच्छेद्यजमानश्च हर्षितः।। १०७
चतुष्कोणे त्रिकोणे च द्विवीथ्यन्तरवीथिषु।
सन्धौ सन्धौ बलिं दद्याद्भूतादिभ्यो यथाक्रमम्।। १०८
मध्यमं सन्धिमास्थाय भूतेभ्यः सर्वतः क्षिपेत्।
यक्षेभ्यो दक्षिणे दद्यात्पिशाचेभ्यश्च पश्चिमे।। १०९
उत्तरे नागमुख्येभ्य इत्युक्त्वा मन्त्रवित्तमः।
'ये भूता' इति मन्त्रेण दिश्यूर्ध्वायाञ्च निक्षिपेत्।। ११०
तोयं दत्वा तु पूर्वं वै पुष्पञ्च तदनन्तरम्।
गन्धान् दद्यात्ततः पश्चात् धूपं दीपं ततः परम्।। १११
बलिं पश्चात् क्षिपेत्तत्र पश्चात्तोयं समर्पयेत्।
एवं प्रदक्षिणवशात् बलिं ग्रामे विनिक्षिपेत्।। ११२

----------

राजधानी यदि भवेद्राजवेश्माङ्कणेऽपि च।
इन्द्राय तु बलिं दद्यात् बलिमन्त्रमुदीरयेत्।। ११३

'इन्द्राय विष्णवे तुभ्यं नमोऽस्तु पृथिवीपते।
रक्षस्व जगतीमेतामपि मा' मिति चोच्चरेत्।। ११४
जयश्रियै च तत्पार्श्वे शचीदेव्यै च निक्षिपेत्।
शङ्खपद्मनिधिभ्याञ्च तत्रैव द्वारपार्श्वयोः।। ११५

-----------

पश्चादैन्द्रादिकं स्थानमासाद्य तु क्षिपेद्बलिम्।
पश्चादालयमाविश्य बलिशेषं प्रगृह्य च।। ११६
भूतपीठे विनिक्षिप्य
पश्चादभ्यन्तरं विशेत्।
चक्रादींश्च प्रतिष्ठाप्य
तत्तत्स्थाने यथाक्रमम्।। ११७
बलिं पश्चाद्यथापूर्वं तथैव च विसर्जयेत्।
मुहूर्ते पटमारोप्य देवेशाय निवेदयेत्।। ११८
मुद्गान्नञ्च ध्वजस्थाय गरुडाय निवेदयेत्।
ततो देवेशमादाय सर्वालङ्कारसंयुतम्।। ११९
ध्वजन्तु त्रिः परिक्रम्य यागस्थानं निनीय च।
अङ्कुरानर्पयित्वा तु उत्सवार्थं विशेषतः।। १२०
सभ्याग्निकुण्डे चाब्जाग्नौ कुर्यादाघारमेव च।

## प्रतिसरः

स्वर्णादिपात्रे द्विप्रस्थतण्डुलान् न्यस्य तत्र च।। १२१
नालिकेरं तदुपरि सौवर्णं कौतुकं न्यसेत्।
तस्मिन् शेषं समावाह्य स्वस्तिसूक्तं तथा बुधः।। १२२
'कृणुष्व पाज' सूक्तञ्च जप्त्वाऽलङ्कारसंयुतः।
आचार्यो यजमानश्च सर्ववाद्यसमायुतः।। २१३
घण्टानादेन च तथा कृत्वा सद्मःप्रदक्षिणम्।

उद्दिष्टस्थानमावेश्य देवेशं सम्प्रणम्य च।। २१४

अथवा मण्डपे स्थाप्य प्रणम्य च यथाविधि।
देवस्य दक्षिणे हस्ते देव्योर्वामकरे तथा।। १२५

गरुत्मदमितारीणां गुरोश्चैव पदार्थिनाम्।
बध्नीयाद्दक्षिणकरे रक्षासूत्रं समन्त्रकम्।। १२६

ततोऽर्चयित्वा देवेशं यागशालां प्रविश्य च।
नवकुम्भान् सुसंसाध्य कुम्भेष्वावाहनं चरेत्।। १२७

अत्रिप्रोक्तक्रमेणैव मूर्तिहोमं हुनेत्ततः।
निवेदयेद्धविस्सम्यक् देवदेवाय शार्ङ्गिणे।। १२८

(प्रथमेऽह्नि प्रभायां वा हंसे वाऽऽरोहयेत्प्रभुम्।
कण्ठीरवे द्वितीये तु तृतीये तु हनूमति।। १२९

तुरीये पक्षिराजे स्यादनन्ते पञ्चमेऽहनि।
षष्ठेऽहनि गजेन्द्रे तु रोपयित्वोत्सवं चरेत्।। १३०

सप्तमेऽहनि मध्याह्ने निशाचूर्णेन स्नापयेत्।
प्रभायामुत्सवं कुर्यात्सायंकाले विशेषतः।। १३१

विमाने पुष्पके रात्रौ तुरगेन्द्रे तथाऽष्टमे।
नवमे देवदेवस्य प्रभाते स्याद्रथोत्सवः।। १३२

शिबिकान्दोलिकाव्यालपुन्नागा गोपवर्धनम्।
सायमेवं तथा प्रातः उत्सवे स्याद्दिने दिने)।। १३३

रङ्गे वा शिबिकायां वा वस्त्रमाल्यादिशोभिते।
रथे वाऽऽरोप्य यत्नेन 'प्रतद्विष्णु' रिति ब्रुवन्।। १३४

चामरैर्व्यजनैरन्यैः छत्रैः पिञ्छैस्समन्वितम्।
ग्रामं प्रदक्षिणीकुर्याद्वाद्यघोषसमन्वितम्।। १३५

तत्राऽचार्यं पुरस्कृत्य वेदस्तुतिपरायणाः।

नृत्तगेयमहावीणागीतवादित्रवादकाः।। १३६
अनुगच्छेयुरानन्दवशास्ते सिद्धिमाप्नुयुः।

----------

उत्सवे येऽनुगच्छन्ति चतुर्वर्णसमुद्भवाः।। १३७
ते सर्वे वैष्णवा ज्ञेयाः स्पर्शदोषोऽत्र नो भवेत्।
अन्नं भक्ष्याणि पक्वानि भोज्यानि विविधानि च।।१३८
महानसात्सुसिद्धानि समादाय निवेदयेत्।
फलानि नारिकेलञ्च गुलं ताम्बूलमेव च।। १३९
अपक्वानि तु वस्तूनि विना मन्त्रं समर्पयेत्।
देवे तु वाहनारूढे तत्पीठे पूजकस्सदा।। १४०
आसीनोऽप्यथवा तिष्ठन् यथोक्तं पूजयेद्धरिम्।

## घटदीपः

ततः प्रविश्य चागारं पाद्याद्यैरभिपूज्य च।। १४१
तिष्ठते देवदेवाय घटदीपं प्रदर्शयेत्।
आचार्यो वाऽर्चको वापि हरिद्राचूर्णमिश्रितान्।। १४२
'अतो देवादि' मन्त्रैस्तु अन्नपिण्डान् प्रगृह्य वै।
हस्ताभ्यां देवदेवन्तु परीत्य त्रिः प्रदक्षिणम्।। १४३
भ्रामयित्वा चतुर्दिक्षु क्रमेणैव समुत्क्षिपेत्।
घटकुम्भं समादाय गणिका समलङ्कृता।। १४४
सर्ववाद्यसमायुक्तं कारयेत्तिः प्रदक्षिणम्।
पश्चात्पक्वमपक्वं वा भक्ष्यं दद्यात्तदा रहः।। १४५
अन्तः प्रवेशयित्वा च पुण्याहं वाचयेत्ततः।

----------

स्नापयित्वा ततो देवं सन्ध्यापूजां समाचरेत्।। १४६
प्रातःकालेऽर्चनं कृत्वा कारयेत्प्रातरुत्सवम्।
तथा सायार्चनान्ते वै रात्र्युत्सवमथाचरेत्।। १४७
एवमेव क्रमेणैव शिष्टाहेषु च श्रद्धया।
कारयेदुत्सवं सायं प्रातर्देवस्य शार्ङ्गिणः।। १४८

-----------

तीर्थस्नानदिनात्पूर्वं रात्रौ तत्र विचक्षणः।
सायं कालोत्सवं कृत्वा रात्रिपूजां समाप्य च।। १४९
चक्रं प्रतिसरञ्चापि कृत्वा ग्रामप्रदक्षिणम्।
चक्रं संस्नाप्य तीर्थे तु ततो देवालयं विशेत्।। १५०
यमपावकयोर्मध्ये पूर्वोक्तेन क्रमेण वै।
बद्ध्वा प्रतिसरं पश्चात् शयने शाययेद्धरिम्।। १५१
पुनः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः।
शयनाद्देवमुत्थाप्य चार्घ्यान्तमभिपूज्य च।। १५२
पूर्वोक्तेनैव विधिना प्रातरुत्सवमाचरेत्।
रथं त्रिः सम्परिक्रम्य सर्वालङ्कारशोभितम्।। १५३
तस्मिन् देवेशमारोप्य श्रीभूमिसहितं प्रभुम्।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।। १५४
ग्रामप्रदक्षिणं नीत्वा समभ्यर्च्यावरोपयेत्।
डोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम्।। १५५
रथस्थं केशवं दृष्ट्वा न पुनर्जायते नरः।

## चूर्णोत्सवः

आस्थाने स्थापयेद्देवं नृत्तगेयसमन्वितम्।। १५६

हरिद्रां चूर्णयित्वा तु शुद्धैर्भक्तान्वयोद्भवैः।
पूरयित्वा तेन कुम्भान् धान्यवेद्यां त्वभिक्षिपेत्।। १५७
पुण्याहसलिलेनोक्ष्य अधिदेवान् समर्चयेत्।
स्नपनान्ते देवदेवं चूर्णैः संस्नापयेत्क्रमात्।। १५८
चक्रञ्च स्नापयेच्चूर्णैः पश्चाद्ग्रामप्रदक्षिणम्।
नाथवन्नाययेद्देवं सर्ववाद्यसमन्वितम्।। १५९
चूर्णशेषञ्च भक्तेभ्यो दापयेद्विकिरेत्ततः।

## तीर्थोत्सवः

तीर्थोन्मुखं देवदेवमनुगच्छेयुरादरात्।। १६०
भक्तास्तीर्थेऽवगाहार्थं तीर्थराजं विशेषतः।
समुद्रं वा नदीं वापीं तटाकं वाऽथ निर्झरम्।। १६१
तत्र पीठे समावेश्य देवदेवं जगद्गुरुम्।
देवदेवस्य पुरतः कलशान् पञ्च विन्यसेत्।। १६२
तण्डुलोपरि वेद्यान्तु वस्त्रालङ्कारसंयुतान्।
मृत्तोयं मध्यमे न्यस्येत्पूर्वे चैव कुशोदकम्।। १६३
पुष्पोदकन्तथा याम्ये गन्धतोयञ्च वारुणे।
सौम्येऽक्षतोदकं न्यस्य अधिदेवांत्समर्चयेत्।। १६४
अङ्कुराणि च तत्रैव परितः स्थापयेत्ततः।
'आपो हिष्ठा' दिभिर्मन्त्रैः प्रोक्षयेच्छ्रीमहीपतिम्।। १६५
तत्तन्मन्त्रं समुच्चार्य प्रोक्षयेत्कलशोदकैः।
चक्रं पश्चात् समभ्युक्ष्य शिष्टतोयैश्च स्नापयेत्।। १६६
पश्चाच्चक्रं तीर्थतोये मुहूर्ते मज्जयेच्छुभे।
तत्काले सह चक्रेण कुर्युः स्नानं महाजनाः।। १६७

पश्चादालयमाविश्य कलशैः स्नापयेद्धरिम्।
जीवस्थाने प्रतिष्ठाप्य प्रभूतञ्च निवेदयेत्।। १६८
ततस्सन्ध्यार्चनादीनि क्रमाच्चैव समाचरेत्।
तस्मिंस्तु तीर्थनक्षत्रे पूर्वरात्रौ विशेषतः।। १६९
केवलं बलिमादाय देवैश्चक्रादिभिर्विना।
पूर्ववत् निर्वपेत्सर्वस्थानेषु क्रमशो बलिम्।। १७०
तत्तन्मन्त्रं समुच्चार्य भवेद्ग्रामहिताय सः।
यत्र यत्र बलिस्थानं तत्र तत्र च घोषयेत्।। १७१
शून्यालयप्रदेशेषु चैत्यवृक्षश्मशानयोः।
वापीकूपतटाकादौ प्रक्षिपेद्बलिमादरात्।। १७२
तत्तत्स्थानस्थभूतानामिदमित्यनुचिन्तयन्।
स्नात्वाऽग्निसन्निधौ पश्चात् देवालयमुपाव्रजेत्।। १७३

## ध्वजावरोहणम्

उत्सवार्थं समायातास्सर्वे यान्तु यथागतम्।
शान्तिरस्त्विति चोक्त्वा तु पटं समवरोपयेत्।। १७४
पौराणिकेषु स्थानेषु तथा पर्वतसानुषु।
नदीतीरेऽन्यत्र वापि वेलायां सागरस्य वा।। १७५
आलयो यत्र सङ्क्लृप्तः तत्रैवोत्सवमाचरेत्।
यत्रैव क्रियते विष्णोरुत्सवस्सर्वशान्तिदः।। १७६
तस्मिन् देशेऽन्यदेवानामुत्सवं नैव कारयेत्।
देवदेवप्रतिष्ठादिदेवकार्ये महोत्सवे।। १७७
न कुर्युः शुभकर्माणि गृहेषु ग्रामवासिनः।
यदि कुर्युः प्रमादाद्वै न सुखं प्राप्नुयुः ध्रुवम्।। १७८

आचार्यपूर्विका यस्मात् क्रियाः शास्त्रेषु चोदिताः।
तस्मात् सर्वप्रयत्नेन यजमानस्स्वशक्तितः।। १७९
सौवर्णैर्भूषणैर्वस्त्रैः गोभूम्यादिभिरादरात्।
आचार्यं पूजयेत्पूर्वं नियुक्तांश्च पदार्थिनः।। १८०

## फलश्रुतिः

एवं यः कारयेद्भक्त्या देवदेवस्य चोत्सवम्।
देहान्ते बन्धुभिः गच्छेद्विष्णुलोकन्तु पञ्चमिः।। १८१
शान्तिस्स्यात् सर्वलोकानां दुःखानाञ्च निवारणम्।
वर्षदं सर्वलोकानां सस्यानामभिवृद्धिदम्।। १८२
राष्ट्राभिवृद्धिदञ्चैव राज्ञाञ्च बलवर्धनम्।
ऋद्धिदं सन्ततीनां स्याद्वेदानामपि बृह्मणम्।। १८३
भेरीपटहशङ्खानां यावदाप्नोति वै ध्वनिः।
पिशाचप्रेतरक्षांसि तावन्नैव विशन्त्यपि।। १८४
तस्मात्सर्वप्रयत्नेन कारयेदुत्सवं हरेः।

## अशक्तस्य एकाहोत्सवप्रकारः

ऐकाहिकोत्सवं वक्ष्ये चतुर्मुखसमीरितम्।। १८५
श्रवणे मासनक्षत्रे राजजन्मर्क्ष एव वा।
एकादश्याञ्च द्वादश्यां तथा मकरसङ्क्रमे।। १८६
भक्तिश्रद्धे यदा स्यातां कुर्यादैकाहिकोत्सवम्।
पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके।। १८७
समभ्यर्च्य च देवेशं हविर्भिस्सन्निवेद्य च।
पूर्वोक्तेन विधानेन बद्ध्वा प्रतिसरं ततः।। १८८

शयने शाययेद्देवं शयनोक्तविधानतः।
प्रभाते पुनरुत्थाप्य श्रीभूमिसहितं हरिम्।। २८६
अर्घ्यान्तमर्चयित्वा तु वस्त्रालङ्कारभूषणैः।
सुमनोभिरलङ्कुर्याद्यावन्नेत्रमनःप्रियम्।। १६०
वीशचक्रमितान् देवान् पूजयेद्बलिसंयुतान्।
हविर्निवेदयेद्बिम्बाभावे पात्रेऽथवाऽर्चयेत्।। १६१
उत्सवोक्तमलङ्कारं सर्वमन्यं प्रकल्पयेत्।
ध्वजस्यारोपणं नेष्टमङ्कुरारोपणं तथा।। १६२
चक्रमग्रे बलिं पश्चात्ततो
वीशं ततो बलिम्।
प्रस्थाप्यैवं क्रमात् पश्चा-
दुत्सवोक्तक्रमेण वै।। १६३
उत्सवोक्तविधानेन बलिद्रव्यैस्सुसाधितैः।
रथमारोप्य देवेशं पीठिकां रङ्गमेव वा।। १६४
ग्रामप्रदक्षिणं कुर्याद्बलिमार्गक्रमेण वै।
प्राप्य देवालयं पश्चादुत्सवोक्तक्रमेण वै।। १६५
वाद्यैश्चतुर्विधैर्गानैः नृत्तभेदैः स्तवैरपि।
गद्यैः पद्यैस्तथाऽन्यैश्च विभवैरभिनन्दयेत्।। १६६
ततो हारिद्रचूर्णेन विकिरेत् देवमूर्धनि।
स्नपनोक्तेन मार्गेण ततः संस्नापयेद्धरिम्।। १६७
प्रभूतञ्च हविर्दद्यात् हवींषि विविधानि च।
पूजयेच्च हरिं देवमेवं बहुलविग्रहैः।। २६८
ऐकाहिकोत्सवं त्वेवं यो देवेशस्य कारयेत्।
सप्तजन्मकृतात्पापात्स मुच्येत न संशयः।। १६६

ग्रामशन्तिश्च सर्वोपद्रवशान्तिस्तथा भवेत्।
अल्पयत्नेन सिद्ध्येत महायत्नकृतं फलम्।। २००

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे महोत्सविधिर्नाम
द्वात्रिंशोऽध्यायः।

----------

अथ त्रयस्त्रिंशोऽध्यायः

----------

## तीर्थोत्सवपुष्पयागौ

अत उर्ध्वं प्रवक्ष्यामि तीर्थकालविनिर्णयम्।
रथरङ्गोत्सवस्यापि तथा कालविनिर्णयम्।। १
एकमासे तीर्थऋक्षं द्विवारं सम्भवेद्यदि।
परस्मिन्नेव नक्षत्रे कुर्यात्कालोत्सवं हरेः।। २
तस्मिन् सङ्कमदुष्टे तु पूर्वस्मिन्नेव कारयेत्।
उभयत्र तु सङ्कान्तौ उत्सवञ्चोत्तरे चरेत्।। ३
दोषयुक्तं दिनं त्यक्त्वा शुद्धे तीर्थन्तु कारयेत्।
वारद्वये खण्डिते भे यस्मिन् वारे इनोदयः।। ४
तस्मिंस्तीर्थोत्सवं कुर्यादिति पूर्वजशासनम्।
दिनद्वये तिथावृक्षे त्रिदिने वाऽर्यमोदये।। ५
कलामात्रं स्थिते वापि तस्मिन्नुत्सवमाचरेत्।
पूर्वस्मिन् दिवसे ऋक्षं विना सूर्योदयो यदि।। ६
परस्मिन्नुदये दृष्ट्वा ऋक्षमुत्सवमाचरेत्।
दिनद्वयोदये व्याप्तौ परस्मिन्नेव चोत्सवः।। ७

वारद्वये समव्याप्तौ यस्मिन्नधिकनाडिकाः।
मध्याह्नसङ्गतास्तस्मिन् दिने तीर्थं समाचरेत्।। ८
उदयव्यापिनक्षत्रे रथोत्सवमथाचरेत्।
अन्यथा चेन्महान् दोषो भविष्यति न संशयः।। ९
तस्मात्सर्वप्रयत्नेन रथारोहादनन्तरे।
दिवसे एव कर्तव्यः क्रमात्तीर्थमहोत्सवः।। १०
तस्मिन् दिने तीर्थदानं पुण्यमाहुर्महर्षयः।
देवप्रीतिकरं भद्रं महीशविजयप्रदम्।। ११
तस्मात्परस्मिन् दिवसे तीर्थं केचिद्वदन्ति हि।
रथोत्सवं विना सर्वमुत्सवं त्रिमुहूर्तके।। १२
स्नपनञ्च प्रकुर्वीत तद्धीने तन्न कारयेत् (?)।

----------

नाडीद्वयं मुहूर्तः स्यात् षण्णाड्यस्त्रिमुहूर्तकम्।। १३
तारका वा तिथिर्वाऽपि पुच्छ एवोत्ववं चरेत्।
त्रिमुहूर्ताधिके एते विष्णुप्रीतिकरे मते।। १४
त्रिमुहूर्तात् कलामात्रे हीने पूर्वदिने चरेत्।
पूर्णश्चेत्तिमुहूर्तस्तु उत्तमस्स्याद्रमापतेः।। १५
घटीद्वयार्धं केचित्तु मुहूर्तं प्रवदन्ति हि।
घटीत्रयं तथा केचिन्मुहूर्तं प्रवदन्ति हि।। १६
एवमिष्टप्रकारेण कुर्याच्छास्त्रविनिश्चितम्।
शास्त्रस्यास्य तु सिद्धान्तो मुहूर्तो घटिकाद्वयम्।। १७
तस्माच्छास्त्रं समालोच्य देवकार्यं समाचरेत्।
तिथेर्मूलं पितॄणां स्यात् तदन्त्यं दैविकं भवेत्।। १८

मनुष्याणां यथा तद्वद्वृक्षमालयपूजने।
षण्मुहूर्तं त्रिमुहूर्तं दीपाष्टम्योर्न लक्षयेत्।। १९

## पुष्पयागविधिः - ग्राह्यपुष्पाणि

अथ वक्ष्ये पुष्पयागे ग्राह्यपुष्पसमुच्चयम्।
श्वेतपुष्पं शान्तिकरं पीतं पुष्पन्तु पौष्टिकम्।। २०
विद्वेषणं कृष्णपुष्पं रक्तं वश्यकरं भवेत्।
एषाञ्च पुष्पवत्पत्रं अङ्कुराणि तथैव च।। २१
फलं पक्वमपक्वं त्वक् साधनान्यर्चने हरेः।
पद्मं श्वेतं तथा रक्तं स्थलपद्मं तथैव च।। २२
कुमुदं करवीरञ्च चणकं चम्पकं तथा।
मल्लिका जातिपुष्पञ्च नन्द्यावर्तञ्च नन्दकम्।। २३
पलाशपुष्पपत्राणि बकं दूर्वाग्रमेव च।
अन्यानि वन्यपुष्पाणि घ्राणदृष्टिप्रियाणि च।। २४
सर्वेषामपि पुष्पाणां सहस्रगुणमुत्पलम्।
तस्मात्पद्मं ततश्चापि पद्मन्तु शतपत्रकम्।। २५
तस्मात्सहस्रपत्रन्तु पुण्डरीकं ततः परम्।
पुण्डरीकसहस्राद्धि बकपुष्पं विशिष्यते।। २६
सौवर्णञ्च ततः पुष्पं तुलसी च ततोऽधिका।
तुलस्यास्तत्प्रसूनाच्च नान्यं विष्णोः प्रियं भवेत्।। २७
पुष्पालाभे तुलस्यास्तु पत्रैश्चाप्यर्चयेद्धरिम्।
तदलाभे च शाखाभिः शिफाभिरथवा मृदा।। २८
पूर्वालाभे परेणापि भक्तिमानर्चयेद्धरिम्।

## अग्राह्यपुष्पाणि

पुष्पाणि वर्जनीयानि सन्ति तानि ब्रवीमि वः।। २९
किणिजं मुनिपुष्पञ्च दुत्तूरं पटलं तथा।
तथाऽतिमुक्तकञ्चैव पुन्नागं नक्तमालिका।। ३०
योथकं क्षीरिकापुष्पं निर्गुण्डी लाङ्गिका जपा।
कर्णिकारं तथाऽशोकं शाल्मलीपुष्पमेव च।। ३१
क्रतुभं कोविदारञ्च तिलपुष्पं तथैव च।
अङ्कोलं गिरिपर्णञ्च नीलान्येव च सर्वशः।। ३२
अर्कपुष्पं तथाऽन्यानि अर्कपत्रस्थितानि च।
व्याघातपिचुमन्दानि सर्वाण्येतानि वर्जयेत्।। ३३
अन्यैरनुक्तैश्च शुक्लैः गन्धवद्भिर्मनोहरैः।
साद्यस्कैस्साश्रितैः पुष्पैः देवदेवं समर्चयेत्।। ३४

## पुष्पापचयप्रकारः

पादौ प्रक्षाल्य पाणी च आचम्य प्रयतो नरः।
कृताञ्जलिः पुष्पमेकं विचित्योद्दिश्य दैवतम्।
पुष्परक्षकमानम्य विसृजेत्पूर्वदिङ्मुखम्।। ३५
ततः पुष्पाणि चिनुयात् हस्तेनैव ततः परम्।
शुद्धे पात्रे निक्षिपेच्च एकैकन्तु पृथक् पृथक्।। ३६
शुद्धभूमौ तु पतितं क्षालनात् शुद्ध्यते सुमम्।
अस्थाने पतितं यत्तु क्षालनेन न शुद्ध्यति।। ३७
भ्रमराघ्रातपुष्पाणि ग्राह्याण्येव भवन्ति हि।
आह्निकं रात्रिकञ्चापि साद्यस्कं शोभनं मतम्।। ३८

ऐकाहिकं तथा पुष्पं द्वितीयेऽहनि च क्वचित्।
तत्परस्मिन्वोपयुंज्यादत ऊर्त्वं परित्यजेत्।। ३९
पञ्चवर्णं तथा पुष्पं चतुर्वर्णं तथापि च।
त्रिवर्णञ्चोत्तमं प्रोक्तं द्विवर्णं मध्यमं भवेत्।। ४०
अधमञ्चैकवर्णं स्यादिति पूर्वजशासनम्।

## पुष्पयागोत्सवक्रमः

तीर्थाहाच्छ्वः परश्वो वा पुष्पयागोत्सवं चरेत्।। ४१
उत्सवान्ते राजराष्ट्रग्रामक्षेमाभिवृद्धये।
तुलसीपद्मपूर्वाणि ग्राह्यपुष्पाणि चाहरेत्।। ४२
आस्थानमण्डपे देवमलङ्कृत्य यथाविधि।
सम्भारान् यागशालायां सम्भरेत्सकलान् गुरुः।। ४३
सभ्याग्निकुण्डे त्वाघारं कृत्वा कुम्भं निधाय च।
पुष्पेषु पुष्पाधिदेवमावाह्याभ्यर्चयेत्ततः।। ४४
पुष्पयागोक्तविधिना होमं कुर्याद्विचक्षणः।
हेमादिपात्रेष्वादाय पुष्पाणि विविधानि च।। ४५
नृत्तगीतमहावाद्यघण्टानादादिभिस्सह।
पादयोर्देवदेवस्य अर्पयेद्भक्तिसंयुतः।। ४६
चतुर्वेदादिमन्त्रांश्च चतुर्वेदांश्च श्रावयेत्।
पुष्पयागविधिः प्रोक्तः विस्तरेण मरीचिना।। ४७
अतउक्तोश्च मयाऽत्यन्तसङ्ग्रहः क्रमरक्षणे।
तत आराध्य देवेशमर्ध्याद्यैस्सर्वविग्रहैः।। ४८
महाहविः प्रभूतं वा देवेशाय निवेदयेत्।
अपराधक्षापणञ्च प्रार्थयेयुः पदार्थिनः।। ४९

एवं यः कारयेद्भक्त्या पुष्पयागोत्सवं हरेः।
सर्वान् कामानवाप्नोति प्रेत्य स्वर्गं समश्नुते।।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे तीर्थोत्सवपुष्पयागविधिर्नाम
त्रयस्त्रिंशोऽध्यायः।।

----------

अथ चतुस्त्रिंशोऽध्यायः

----------

## कर्षणादिप्रायश्चित्तम्

अतः परं प्रवक्ष्यामि कर्षणादिषु निष्कृतिम्।
भूपरिक्षायां कर्षणे च तथा बीजनिवापने।।
दोषे प्राप्ते यथाशक्ति गुरवे दक्षिणां ददेत्।
---------------------------------।।
श्यामसस्यानि च तथा पलालं वा प्रगृह्य च।
आस्तीर्योद्दिष्टभूम्यान्तु प्रायश्चित्तन्तु होमयेत्।।
सौम्यञ्च वैष्णवं हुत्वा गोभ्यः सस्यं निवेदयेत्।
धान्यदानञ्च विप्रेभ्यो यथाशक्ति तु दापयेत्।।
अलाभे तूक्तदारूणां वृक्षदेवं समर्च्य च।
सुवर्णेन हलादीनि कृत्वा संस्कारमाचरेत्।।
हीनाङ्गौ चेद्बलीवर्दौ अन्यलक्षणवर्जितौ।
रौद्रन्तुजुहुयाद्धीनप्रमाणेषु युगादिषु।।
बीजवापनतः पश्चात् दोषेषु जनितेषु च।
यजेद्वै भूमिदैवत्यं पुनः बीजानि वापयेत्।।

अन्यदेवार्थमुद्दिष्टस्थानं विष्णोर्यदीच्छति।
न गृह्णीयाच्च तत् तूष्णीं शान्तिं हुत्वा तदा ददेत्।। ८
दक्षिणाञ्च यथाशक्ति दत्वा दद्यान्न चान्यथा।
विष्वक्सेनविहीने तु सहस्रं तन्मनुं हुनेत्।। ९
तिलसर्षपमिश्रेण चरुणा होम इष्यते।
बालबेरविहीने तु लौकिकं बेरमाहरेत्।। १०
अलाभे लौकिकस्यापि दारुणा वापि कारयेत्।
प्रतिष्ठिते मूलबेरे बेरं लौकिकमत्र वै।। ११
प्रथमावरणे स्थाने कस्मिंश्चित् स्थाप्य चार्चयेत्।
हीनप्रमाणेऽपि बेरे पूजा फलति निश्चिता।। १२
भूमियज्ञविहीने तु जुहुयात्पाञ्चभौतिकम्।
सहस्राहुतिभिर्होमं प्रत्येकं सम्यगाचरेत्।। १३
पुण्याहहीने सर्वत्र ब्राह्मणान् पञ्च भोजयेत्।
कपालास्थिशिलादौ च ब्रह्मपद्मावटादिषु।। १४
दुष्टे तु वैष्णवं भूमिदैवत्यं ब्राह्ममेव च।
अष्टोत्तरशतं हुत्वा खात्वाऽन्यत्रावटं चरेत्।। १५
घटस्रावेऽथ भेदे वा प्रमादात्पतितेऽपि वा।
यज्ञोपस्करनाशे च जनानां भयसम्भवे।। १६
कलहे रुधिरस्रावे वैष्वक्सेनं यजेत्क्रमात्।
गारुडं वैष्णवञ्चैव जुहुयाद्विधिवद्बुधः।। १७

## ब्रह्मपद्मावटे

वामावर्ते जले दृष्टे ब्रह्मपद्मावटे यदि।
वारुणं तत्र जुहुयात् वायव्यं भूमिदैवतम्।। १८

सङ्कुलञ्चेत्तदा वारि ब्राह्मं सौम्यञ्च वारुणम्।
पद्मेऽधरोत्तरे जाते कुटिले भेदने तथा।। १९
ब्राह्मं तद्देवताहोमं वारुणं चार्षकं यजेत्।
विदिक्षु सङ्गते पद्मे ब्राह्ममार्षं तथा हुनेत्।। २०

## शङ्कुस्थापने

शङ्कुनिर्माणकाले तु द्विवारं ताडनं यदि।
पार्षदं सर्वदैवत्यं जुहुयाद्दोषशान्तये।। २१

## मूर्तिमन्त्राज्ञाने

मूर्तिमन्त्रविहीने तु नाममन्त्रेण कारयेत्।। २२

## इष्टकादिविपर्यासे

इष्टकाग्रविपर्यासे तथा दारुविपर्यये।
शिलामूलाग्रदोषे वा प्रस्तरे वापि सङ्कटे।। २३
हीनाङ्गे च विमाने तु प्रतिखण्डविपर्यये।
कवाटद्वारकुड्यादौ हीने चापि विपर्यये।। २४
न्यक्षादिदेवतामन्त्रैः जुहुयान्निष्कृतिर्भवेत्।
द्वादशाब्दोपरि तथा समाप्तिर्न भवेद्यदि।। २५
आरब्धस्य तु कार्यस्य येन केनापि हेतुना।
ग्रहयज्ञं विशेषेण कुर्याद्ब्राह्मणभोजनम्।। २६
कृत्वेमां निष्कृतिं पूर्वं कार्यारम्भं पुनश्चरेत्।
इष्टकासङ्करे मिश्रे वैष्णवं जुहुयात्क्रमात्।। २७
शास्त्रोक्तदक्षिणाहीने हुत्वाऽऽग्नेयञ्च वैष्णवम्।
शक्तितो दक्षिणां दद्यादाचार्यमनुमानयेत्।। २८

## शूलादिविपर्यासे

आलयानां विपर्यासे तथा शूलविपर्यये।
ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत्।। २९
बेराणाञ्च विपर्यासे तथा शूलविपर्यये।
ब्राह्मञ्च वैष्णवं हुत्वा यथार्हं परिकल्पयेत्।। ३०

## यजमानादिविपर्यासे

यजमानविपर्यासे रौद्रमैन्द्रं यजेद्बुधः।
आचार्यस्य विपर्यासे मुनिहोमं समाचरेत्।। ३१
आचार्यः कर्षणारम्भे यो वृताश्शास्त्रवर्त्मना।
तेन सर्वास्तु निर्वाह्याः प्रतिष्ठान्ताः क्रियास्सदा।। ३२
ततः परञ्च नित्यानि तथा नैमित्तिकानि च।
कर्माणि तेनैवान्यानि निर्वर्त्यानि विभूतये।। ३३
आचार्यं वरयेन्नान्यमुत्सवादिषु कर्मसु।
तदभावे तु तत्पुत्रं पौत्रं नप्तारमेव वा।। ३४
शिष्यं वाथ प्रशिष्यं वा तत्स्थाने वरयेद्गुरुम्।
आचार्यसङ्करे कर्तुः आलयस्य विशेषतः।। ३५
नश्यन्ति सम्पदः पूजा संवृत्ता निष्फला भवेत्।

## पदार्थिनां भर्त्सनादौ

आचार्यस्यार्त्विजाञ्चैव तथा वै कर्मकारिणाम्।। ३६
भर्त्सनादौ महान् दोषः प्रमादात्सम्भवे भवेत्।
जुहुयाद्वैष्णवं सौम्यं तान् कुर्याच्च समाहितान्।। ३७
कलहे यदि सञ्जाते आचार्ययजमानयोः।
वैष्णवञ्च तथा ब्राह्मं जुहुयात्पाञ्चभौतिकम्।। ३८

## उक्तद्रव्यविहीने

उक्तद्रव्यविहीने तु द्रव्यदैवत्यमेव च।
शैषिकञ्चैव हुत्वा तु द्रव्यप्रतिनिधिं हरेत्।। ३९
विहीने शयने चैव तद्दैवत्यं हुनेत् सकृत्।
शास्त्रोक्तेन विधानेन प्रोक्तं प्रतिनिधिं हरेत्।। ४०
शयनस्थमकाले तु बेरमुद्धृत्य चाक्रमात्।
देवदेव्योमूर्तिमन्त्रैः हुत्वा तत्रैव शाययेत्।। ४१
उक्तयागस्थानहीने स्थानानामपि सङ्करे।
जुहुयाद्भूमिदैवत्यं होमस्थानविपर्यये।। ४२
यज्ञोपस्करमन्त्राणां द्रव्याणाञ्च विपर्यये।
आग्नेयं जुहुयाद्ब्राह्मं दद्याद्विपुलदक्षिणाम्।। ४३
कुम्भे तु साधिते मित्रे प्रमादात्पतितेऽपि वा।
तद्दोषशमनार्थन्तु हुनेद्ब्राह्मञ्च वैष्णवम्।। ४४
किंङ्करादींश्च जुहुयात्पुनः संस्थापनं चरेत्।

## मथिताग्न्यलाभे

मथिताग्नावलाभे तु श्रोत्रियागारतो हरेत्।। ४५

## अग्निकुण्डादिषु प्रमाणहीने

प्रमाणहीनेऽग्निकुण्डे कृते दोषो भविष्यति।
प्रायश्चित्तं ब्राह्मसौम्याग्नेयादित्यानि हावयेत्।। ४६
तुषपाषाणलोष्टादिसंस्पृष्टे त्वग्निकुण्डके।
वैष्णवञ्चैव जुहुयात्पाञ्चभौतिकमेव च।। ४७
पुष्पाक्षतसमिद्दर्भसम्भारविधुरे तदा।
आग्नेयं तत्र जुहुयात्पञ्चकृत्वस्तु वैष्णवम्।। ४८

## दर्भादिदाहे

दर्भादिदाहे चाज्ञानात् प्रमादाद्वयाहृतीर्यजेत्।
ऊर्ध्ववर्षिष्ठसमिधौ यदि दग्धौ प्रमादतः।। ४९
महाव्याहृतिभिर्हुत्वा व्याहृतीभिश्च होमयेत्।

## अध्वर्युदोषे

अनुक्तमुख अध्वर्युर्यदि कार्याणि चाचरेत्।। ५०
जुहुयादार्षमन्त्रैस्तु सप्तव्याहृतिभिस्तथा।

## अग्निज्वलनविपर्यये

वामावर्ते ज्वलत्यग्नौ सौरमन्त्रैस्तु होमयेत्।। ५१
समित्प्रक्षेपणे जाते सङ्कुले चेत्प्रमादतः।
वायव्यं जुहुयात्तत्र वैष्णवेन समायुतम्।। ५२
इध्मप्रक्षेपणे काले प्रच्यावो यां दिशं प्रति।
यद्देवाद्यैस्तद्दिगीशमन्त्रैश्च जुहुयाद्बुधः।। ५३

## मन्त्रविपर्यासे

यं यं देवं समुद्दिश्य प्रयोगो यत्र वर्तते।
दोषे तद्दैवत्यमन्त्रैः प्रायश्चित्तं प्रकल्पयेत्।। ५४
व्याहृतीभिश्च जुहुयात् सर्वदोषेषु वैष्णवम्।
वैष्णवं सर्वदोषोपशमनं कर्मसिद्धिदम्।। ५५
आग्नेयं वैष्णवञ्चापि सव्याहृतिकमुत्तमम्।

## प्रयोगविपर्यासे

संस्काराणां विपर्यासे मन्त्राणामपि सङ्करे।। ५६

अग्निं प्रज्वाल्य प्रणमेदग्निसूक्तं समुच्चरेत्।
तेन पूर्णं भवेत्सर्वं यज्ञमूर्तिप्रसादतः।। ५७

## आहुतिविपर्यासे

आहुतीनां विपर्यासे प्रमदाद्यत्र कुत्र वा।
स्विष्टाकारं हुनेत्पश्चात् व्याहृतीनां चतुष्टयम्।। ५८
यत्र यत्र प्रमादः स्याज्जुहुयाद्व्याहृतीः सदा।

## व्याहृतिमहिमा

न व्याहृतिसमो मन्त्रः होम्यमाज्यसमञ्च न।। ४९
न गायत्र्या समं जप्यं न दैवं केशवात्परम्।
अन्तहोमे क्रियाहीने क्रियाद्रव्यादिसङ्कुले।। ६०
पूर्णाहुतिं हुनेद्भक्त्या सर्वशान्तिर्भविष्यति।
होमान्ते सर्वशान्त्यर्थं सूक्तं वैश्वानरं जपेत्।। ६१
ध्यायेत्कर्मसमृद्ध्यर्थं देवं वैश्वानरं प्रभुम्।
यज्ञेश्वरोऽन्तर्यामी हि भगवान् पुरुषोत्तमः।। ६२
प्रीतः कर्मफलं दद्यात् आराध्यस्सर्वकर्मभिः।

## प्रतिष्ठाविपर्यासे

प्रतिष्ठायां विपर्यासे सौरं होमं समाचरेत्।। ६३
यदि रात्रौ प्रतिष्ठा स्यात्सर्वभा सर्वदोषकृत्।
आग्नेयं जुहुयात्सौरं सहस्रञ्चाष्टसंयुतम्।। ६४
ब्राह्मणान् भोजयेच्चापि तावत्सङ्ख्यान् विशेषतः।

## चलिते बिम्बे

प्रतिष्ठितं क्वचिद्बेरं चलितञ्चेत्प्रमादतः।। ६५

तद्दैवत्यञ्च जुहुयात्प्रतिष्ठां पुनराचरेत्।
प्रतिष्ठितं शक्तियुतं बेरं न्याय्येन हेतुना।। ६६
अन्यदेशे प्रतिष्ठाय यद्यर्चयितुमिच्छति।
पूर्वोक्तेन विधानेन प्रतिष्ठाप्य समर्चयेत्।। ६७
नदीवेगादिना नष्टे ग्रामे वा देवमन्दिरे।
महामाक्षिकसम्बाधे विमाने यत्र कुत्र वा।। ६८
वल्मीकाद्युद्भवे तत्र भेदेऽशन्यादिपाततः।
जीर्णे कालोपघाते च दुष्टे वान्येन हेतुना।। ६९
विमाने ध्रुवबेरे वा चालितेऽनवधानतः।
भिन्ने च्छिन्नेऽवद्यहते यदीच्छेन्नेतुमन्ततः।। ७०
स्थानान्तरे प्रतिष्ठाप्य समाराधयितुं तथा।
तथा कुर्यात्प्रयत्नेन जीर्णोद्धारफलं लभेत्।। ७१

## उद्धारप्रकारभेदाः

रत्नगर्भयुतं पीठं सह देवेन चालयेत्।
ततो रत्नानि चादाय संरक्षेत्तानि यत्नतः।। ७२
अनवद्यन्तु चेद्बेरं तच्च रक्षेद्विधानतः।
जीर्णोद्धारविधानेन कार्यमेतत्समाचरेत्।। ७३
बालस्थाने प्रतिष्ठाप्य नवं निर्माय मन्दिरम्।
रत्नानि विधिवन्न्यस्य पुनः संस्थापनं चरेत्।। ७४
विनष्टे ध्रुवबिम्बे तु भेदच्छेदादिदूषणैः।
निर्माय च परं बिम्वं स्थानेऽन्यत्र तु स्थापयेत्।। ७५
सर्वत्र च महाशान्तिपूर्वं स्यात्प्रोक्षणं हितम्।
मृण्मयं जीर्णबेरोक्तविधिना सन्त्यजेद्बुधः।। ७६

## लोहबिम्बे पीठाद्वियोजिते

पीठं लोहजबिम्बस्य प्रमादाद्यदि भज्यते।
बालालयविधानेन कार्यं कृत्वा विचक्षणः।। ७७
पूर्वन्यस्तानि रत्नानि यत्नात् संरक्ष्य निक्षिपेत्।
सप्तभिः कलशैर्देवं स्नापयित्वा विधानतः।। ७८
लोकपालकमन्त्रैश्च महाशान्तिपुरस्सरम्।
पुनः प्रतिष्ठामार्गेण रत्नन्यासं विधाय च।। ७९
पीठं संयोज्य देवेशं प्रतिष्ठाप्य समर्चयेत्।
प्रभूतञ्च निवेद्यैव ब्राह्मणान् भोजयेत्क्रमात्।। ८०

## चोरापहारे

चोरैर्वा शत्रुभिर्वापि नष्टे भवति कौतुके।
तत्पीठे ब्रह्मणः स्थाने कूर्चं न्यस्य समर्चयेत्।। ८१
पूर्ववन्निष्कृतिं कृत्वा पुनः संस्थाप्य चार्चयेत्।

## तस्करादिप्रवेशे

ब्रह्महर्म्यालयस्यान्तः प्रविष्टे तस्करादिभिः।। ८२
देवं बालालये स्थाप्य बालालयविधानतः।
त्रिमासं वा द्विमासं वा स्थलशुद्धिं विधाय वै।। ८३
तत्काले पौण्डरीकाग्नौ शन्तिसम्पादनाय वै।
पुनः संस्थापनान्तन्तु महाशान्तिं हुनेत्ततः।। ८४
सम्प्रोक्षणविधानेन पुनस्संस्थापनं चरेत्।

## श्वकाकाद्यैः बिम्बे स्पृष्टे

बिम्बे स्पृष्टे श्वकाकाद्यैस्सूकरैरन्यजन्तुभिः।। ८५

पञ्चगव्यैस्सुसम्प्रोक्ष्य महाशान्तिं विधाय वै।
महासम्प्रोक्षणं कृत्वा कारयेद्विप्रभोजनम्।। ८६
अथ बिम्बे तु संस्पृष्टे उच्छिष्टादिभिरेव च।
पञ्चगव्यैस्तु सम्प्रोक्ष्य पुण्याहमपि वाचयेत्।। ८७

## हीनाङ्गे बेरे

उत्पाटितं शिलाबेरं हीनाङ्गं सम्भवेद्यदि।
गजैर्वृषैर्मनुष्यैर्वा पुनस्संस्कारकर्मणि।। ८८
भूमौ खनित्वा निक्षिप्य प्रच्छाद्य च मृदा ततः।
कुशकाशान् समास्तीर्य जलेनाप्लाव्य तां भुवम्।। ८९
सकाल उद्धृत्य शिलां शिलाग्रहणवर्त्मना।
कृत्वा चोचितसंस्कारान् स्थापयेद्विधिवद्बुधः।। ९०
बालस्थाने कृते चेत्तु नवकर्मसु सर्वथा।
सहस्राहुतिहोमञ्च सहस्रद्विजभोजनम्।। ९१
कृत्वैवोक्तविधानेन पुनः संस्थापनं चरेत्।

## विष्णुपूजाप्रशंसा

तपःशौचोपवासाश्च जपहोमव्रतानि च।। ९२
इज्याध्ययनदानानि चान्या वेदोदिताः क्रियाः।
साकल्यं न भजन्त्येव विष्णुपूजां विना क्वचित्।। ९३
तस्मात्सर्वप्रयत्नेन विष्णुं सौम्याध्वनाऽर्चयेत्।
यत्र सम्पूज्यते विष्णुः सप्तविंशतिविग्रहैः।। ९४
तद्ग्रामवासिनां न स्युराधिव्याध्याद्युपद्रवाः।
वेदवेदाङ्गतत्त्वज्ञाः ब्राह्मणास्स्युर्न संशयः।। ९५

सुरूपाश्च सुवेषाश्च धर्मकामार्थभागिनः।
क्षत्रिया रूपवन्तश्च क्षात्रधर्मसुनिष्ठिताः।। ९६
नृपा वीर्यादिसम्पन्ना नृपपुत्रास्तथार्थिनः।
वैश्या धनसमृद्धाश्च प्रभूतपशुसम्पदः।। ९७
शूद्रास्स्वकर्मसन्तुष्टाः भविष्यन्ति न संशयः।
विष्णुपूजाफलं येन जगदेतच्चराचरम्।। ९८
सुखेन युज्यते तेन विहितं विष्णुपूजनम्।
पूजाविधौ च्युतिर्यत्र मन्त्रतन्त्रक्रियादिषु।। ९९
तद्ग्रामराजराष्ट्राणां दुःखं बहुविधं भवेत्।
सस्यहीना च वसुधा तरवो ह्यफलास्तथा।। १००
अल्पक्षीराः पृषस्यन्त्यो गावश्च प्रभवन्त्युत।
अतिवृष्टिरनावृष्टिरन्ये स्युर्दुरुपद्रवाः।। १०१

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलधिकारे कर्षणादिप्रायश्चित्तविधिर्नाम
चतुस्त्रिंशोऽध्यायः।

----------

अथ पञ्चत्रिंशोऽध्यायः

----------

## नित्यार्चनदोषप्रायश्चित्तम्

अथातस्सम्प्रवक्ष्यामि पितामहसमीरितम्।
सम्भावितानां दोषाणां विष्णोर्नित्यार्चनाविधौ।। १
प्रातरर्कोदयात्पूर्वमकृते द्वारमोचने।
धात्रादीनां द्वारपानां मन्त्रैर्होमं समाचरेत्।। २

अजस्रदीपात्सर्वेषां दीपानां दीपनं भवेत्।
दीपनाशे तु जुहुयाद्वैष्णवं विष्णुसूक्तकम्।। ३
श्रीदैवत्यञ्च श्रीसूक्तं ततः स्नपनमाचरेत्।
नित्यस्नपनहीने तु स्नपनं द्विगुणं चरेत्।। ४
विहीने चैव पुण्याहे पञ्चगव्योक्षणे तथा।
दारुणं रुद्रदैवत्यं हुत्वा प्रोक्षणमाचरेत्।। ५
अर्चनाङ्गोपचारार्हद्रव्यालाभे तथैव च।
परिच्छदानामन्येषामभावे वाद्यहीनके।। ६
यद्द्रव्यं हीयते यो वा उपचारो विलुप्यते।
तद्द्रव्यदेवतामन्त्रं विष्णुसूक्तं सवैष्णवम्।। ७
नित्याग्नौ जुहुयात्पश्चात्पुण्याहमपि वाचयेत्।

## अर्चनायाम्

प्रातस्सन्ध्यार्चने हीने मध्याह्ने द्विगुणं चरेत्।। ८
प्रातर्मध्याह्नयोर्हीने सायन्तु त्रिगुणं चरेत्।
एकाहमर्चने हीने पूजकोऽनशनं चरेत्।। ९
उपावृत्तस्तु पापेभ्यः वसत्यान्मगुणैरिति।
उपवासस्त्वनशनं सर्वभोगविवर्जितम्।। १०
सप्तभिः कलशैः स्नाप्य हवींषि च निवेदयेत्।
एकाहस्येदमुदितं द्व्यहे च द्विगुणं चरेत्।। ११
स्नपनं शान्तिहोमञ्च कुर्यादब्जाग्निकुण्डके।
त्र्यहे च त्रिगुणं कुर्यादाचार्यस्सुसमाहितः।। १२
त्रिरात्रादधिके चैव दक्षिणाग्नौ विशेषतः।
आघारं विधिवत्कृत्वा वैष्णवं पाञ्चभौतिकम्।। १३

ईङ्कारादीन् विष्णुसूक्तं वैष्णवं जुहुयाद्बुधः।
कलशैस्स्नापयेद्देवं यथावित्तानुसारतः।। १४

पक्षहीने तु द्विगुणं प्रायश्चित्तं समाचरेत्।
मासेऽतीते तु पद्माग्नौ गायत्रीं वैष्णवीं हुनेत्।। १५

अष्टोत्तरशतञ्चाज्यसिक्तपद्मैर्हुनेत्ततः।
ईङ्काराद्यैः कापिलेन घृतेन जुहुयात्तथा।। १६

तिलतण्डुलमिश्रेण चरुणा जुहुयात्ततः।
अष्टाशीतिञ्च जुहुयाच्छेषं पूर्ववदाचरेत्।। १७

एतेनैव विधानेन यावत्संवत्सरावधि।
गुरुलाघवमालोच्य प्रायश्चित्तं समाचरेत्। १८

संवत्सरेऽप्यतीते तु पूजाहीने प्रमादतः।
महाशान्त्युक्तमार्गेण मासमेकं समाचरेत्।। १९

ब्राह्मणान् भोजयित्वा च पुनः स्थापनमाचरेत्।
आचार्यदक्षिणां दद्याद्यथोक्तं तं समर्चयेत्।। २०

## अशुचिस्पर्शादौ

अशुचिस्पर्शदुष्टैश्च द्रव्यैरर्चनसम्भवे।
जुहुयात्पौण्डरीकाग्नौ शतमष्टौ च वैष्णवम्।। २१

सप्तभिः कलशैः स्नाप्य प्रभूतञ्च निवेदयेत्।
हीने हविषि पक्वे तु आमं द्रव्यं निवेदयेत्।। २२

जुहुयाच्चरुणा चाग्नाविधिदेवमनुस्मरन्।

## अपर्याप्ते हविरादौ

हविषि व्यञ्जने हीने अपूपादिविवर्जिते।। २३

घृते विहीने पयसि दध्नि वा दोषसम्भवः।
तच्छान्त्यै वैष्णवं विष्णुसूक्तमग्नौ हुनेत्तथा।। २४
यथालाभं समाहृत्य देवाय विनिवेदयेत्।
सिद्धे हविष्येकपात्रे भागशो विनिवेदनम्।। २५
व्यवधानेन न भवेत्सर्वं स्याद्विनिवेदितम्।
(नालिकेरञ्च कूश्माण्डमेवमादिफलानि च।
व्यञ्चनानि च पक्वानि भागशो न निवेदयेत्।
निवेदितेऽप्यल्पभागे शिष्टमुच्छिष्टतामियात्।
प्रमादाद्यदि कुर्याच्चेच्छान्तिं कुर्याद्विधानतः)।
कलशैः स्नाप्य देवेशं शान्तिहोमं समाचरेत्।। २६
वैष्णवं श्रीमहीसूक्तं ब्राह्मं हुत्वा विशेषतः।
हविस्संसाध्य यत्नेन प्रभूतं विनिवेदयेत्।। २७

## उक्तद्रव्यालाभे

धूपदीपादिषु तथा अर्घ्यद्रव्यादिके तथा।
अलाभे संस्मरंस्तत्तद्द्रव्यं भक्तिसमन्वितः।। २८
कुसुमैर्वा तुलस्या वा मन्त्रेणोपचरेच्छनैः।
पुष्पालाभे जलेनैव मन्त्रपूर्वं समाचरेत्।। २९

## मन्त्राणां स्खलने

मन्त्राणां स्खलने मूर्तिमन्त्रेण प्रणवादिना।
नमोन्तेनोपचारैस्तु पूजां कुर्यात्र दोषकृत्।। ३०
अष्टाक्षरं महामन्त्रं जपेदष्टोत्तरं शतम्।

अपराधक्षापणञ्च प्रार्थयेद्भक्तिभावितः।। ३१

(अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्मृतः।

छन्दश्च देवी गायत्री परमात्मा च देवता )

## नित्यहोमे हीने

एककालं नित्यहोमे हीने द्विगुणमाचरेत्।। ३२

त्र्यहे हीने मथित्वाऽग्निं विष्णुसूक्तञ्च वैष्णवम्।

हुत्वा पुरुषसूक्तञ्च मूर्तिमन्त्रैर्हुनेच्चरुम्।। ३३

प्रायश्चित्तमिदं हुत्वा क्रमाद्धोमं समाचरेत्।

समिध्यरण्यां वाऽऽरोप्य जुहुयाद्वैष्णवं पुनः।। ३४

ध्रुवपादसमारोपमग्नेरिच्छन्ति केचन।

## बलौ हीने

प्रातस्सन्ध्याबलौ हीने सौरं सौम्यं हुनेत्ततः।। ३५

मध्याह्ने द्विगुणं दद्यात् बलिं श्रद्धासमन्वितः।

एककाले बलौ हीने पाश्चात्ये द्विगुणं चरेत्।। ३६

एकस्मिन् दिवसे हीने परेद्युः प्रातरेव हि।

कलशैः स्नाप्य देवेशं पूर्वोक्तं होममाचरेत्।। ३७

एवं षड्दिनपर्यन्तं प्रायश्चत्तं समाचरेत्।

सप्तरात्रं बलौ हीने जलसम्प्रोक्षणं चरेत्।। ३८

ब्राह्मणान् भोजियित्वा तु पुनर्बल्युत्सवं चरेत्।

पक्षहीने निष्कृतिन्तु कुर्यादङ्कुरपूर्वकम्।। ३९

स्नापयित्वा तु देवेशं कुम्भस्थापनपूर्वकम्।

वैष्णवं सर्वदैवत्यं हुत्वा सम्प्रोक्षणं चरेत्।। ४०

त्रिमासहीने तु बलावङ्कुरार्पणपूर्वकम्।

महाशान्तिं त्रिरात्रन्तु हुत्वा सम्प्रोक्षणं चरेत्।। ४२

प्रायश्चितञ्च हुत्वा तु हीनाहस्सु बलिर्भवेत्।
यावांस्तावन्तमादाय भूतपीठे विनिक्षिपेत्।। ४२
वर्षेऽतीते बलौ हीने पूर्वोक्तेनैव मार्गतः।
पञ्चाहं स्यान्महाशान्तिः शताष्टकलशैः प्लवः।। ४३
नष्टप्रमाणेनान्नेन प्रभूतं बलिमाहरेत्।
क्षमस्वे ति प्रणम्यैव देवेशं मनसा स्मरेत्।। ४४
आचार्यदक्षिणाञ्चैव दत्वा चोक्तां समापयेत्।
अस्पृश्यैः पतितैर्वापि बलौ स्पृष्टे च दूषितैः।। ४५
पूर्ववद्बलिमाहृत्य बलिमन्त्रसमन्वितम्।
वैष्णवञ्चैव जुहुयादिति पूर्वजशासनम्।। ४६
अर्चने क्रियमाणेऽपि श्रद्धाभक्तिपुरस्सरम्।
न्यूनातिरेकदोषाश्च ये भवेयुः प्रमादतः।। ४७
तेषान्तु विदितानां वै सम्प्रोक्ता निष्कृतिस्त्विह।
अज्ञातदेषशान्त्यर्थं प्रायश्चित्तमिहोच्यते।। ४८

----------

अयने चोत्तरे चैव शुक्लपक्षे विशेषतः।
विष्णुपञ्चदिने वापि परिगृह्य दिनं शुभम्।। ४९
तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।। ५०
पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके।
बद्ध्वा प्रतिसरं देवं शयने शाययेद्बुधः।। ५१
प्रभाते देवमुत्थाप्य भूषयित्वा यथोचितम्।
ग्रामं प्रदक्षिणं नीत्वा सर्वालङ्कारसंयुतम्।

श्वेतपद्मदलैर्वापि महाशान्तिं विधानवित्।
शताष्टकलशैर्देवं स्नापयेच्च ततः क्रमात्।। ५३
स्नापनान्ते समभ्यर्च्य नित्यपूजाक्रमेण वै।
आस्थाने स्थाप्य देवेशमलङ्कृत्य यथोचितम्।। ५४
समर्पयित्वा वस्त्राणि माल्यानि विविधानि च।
सौवर्णं यज्ञसूत्रञ्च भक्तियुक्तं समर्पयेत्। ५५
प्रार्थयेच्च ततो देवं मन्त्रमेतं समुच्चरन्।
अशक्यं विधिवत्कर्तुं ब्रह्माद्यैरपि पूजनम्।। ५६
न्यूनातिरेकव्याघातदोषहीनं जगत्पतेः।
किमल्पज्ञैरशक्तैश्च मादृग्भिरदृढात्मभिः।। ५७
तस्मान्नित्यार्चनायान्तु सञ्जातं यदशोभनम्।
कृतया पूजया शक्त्या सम्पूर्णं सर्वमस्तु नः।। ५८
इत्युक्त्वा तु नमस्कृत्य प्रभूतञ्च निवेदयेत्।
आचार्यं पूजयेद्भक्त्या वस्त्राभरणकुण्डलैः।। ५९
अन्नाद्यैस्तोषयेद्विप्रान् पूजयेद्वैष्णवांस्तथा।
अज्ञातदोषप्रायश्चित्तमिदं सर्वशान्तिदम्।। ६०
एवं यः कुरुते भक्त्या विष्णोरमिततेजसः।
संवत्सरार्चनफलं सर्वं स समवाप्नुयात्।। ६१
यत्रैषा क्रियते पूजा प्रतिसंवत्सरं हरेः।
न तत्रा देशे पीडा स्यादनावृष्ट्याद्युपद्रवैः।। ६२

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे नित्यार्चनदोषप्रायश्चित्तविधिर्नाम
पञ्चत्रिंशोऽध्यायः।

----------

# अथ षट्त्रिंशोऽध्यायः

----------

## स्नपनदोषप्रायश्चित्तम्

अथातस्सम्प्रवक्ष्यामि स्नपने दोषनिष्कृतिम्।
स्नपनारम्भकाले तु निमित्तानि तु लक्षयेत्।। १
आलयस्योत्तरे शान्तिः पुष्टिस्स्यात्प्रमुखे तथा।
अस्थाने स्नपने चेत्तु पुनस्स्नपनमाचरेत्।। २
शयनस्थो यदा देव उदेति दिवि भास्करः।
सौरं सौम्यञ्च जुहुयाद्वैष्णवं व्याहृतीस्तथा।। ३
बेरमुत्थाप्य विधिना पूजयेच्च यथोचितम्।
वेद्याः प्रमाणहानौ तु भूमिमर्घ्यान्तमर्चयेत्।। ४

----------

अग्निना चैव विप्लुष्टे वस्त्रादौ वा परिच्छदे।
प्रपादौ दर्भकूर्चादौ स्नपनार्थं प्रकल्पिते।। ५
आग्नेयं वारुणं सौम्यमैन्द्रमन्त्रं सवैष्णवम्।
हुत्वा तु-निष्कृतिं कर्म यथोक्तन्तु समाचरेत्। ६
कलशः साधितो भिन्नः प्रमादाद्येन केनचित्।
अन्यं कलशमादाय साधयेदभिमन्त्रयेत्।। ७
पूर्वोक्तेनैव मन्त्रेण शताष्टोच्चारितेन च।
महाशान्तिञ्च जुहुयात् दोषोपशमनाय वै।। ८
कलशानान्तु सर्वेषामयमेव विधिस्स्मृतः।
द्रव्याणां कलशानाञ्च यदि स्यात् स्थानसङ्करः।। ९

द्विगुणं देवमाराध्य यथास्थानं निवेशयेत्।
द्रव्यहीने तु तोयन्तु द्रव्यप्रतिनिधिं हरेत्।। १०
धान्यानामप्यलाभे तु यवं प्रतिनिधिं हरेत्।
ततो वारुणमन्त्रांस्तु वैष्णवं विष्णुसूक्तकम्।। ११
तद्द्रव्याधिपदेवत्यं जुहुयात्सा हि निष्कृतिः।
पुनर्यथोक्तद्रव्यैस्तु सम्भृतैः स्नपनं चरेत्।। १२
अङ्कुराणामलाभे तु पुष्पैः पद्मैस्तथेतरैः।
प्रपूर्य पालिकास्तानि कल्पयेदङ्कुराणि वै।। १३
कुशदूर्वाङ्कुरेर्वापि कुर्याच्चूतादिपल्लवैः।
ओषधीनामलाभे तु कुर्यान्मन्त्रजपं बहु।। १४
अस्पृश्यैर्मनुजैश्चाद्यैः स्पृष्टञ्चेद्वस्तु साधितम्।
तद्द्रव्यमपनीयान्यद्गृह्णीयान्मन्त्रतः शुचि।। १५
स्थानशुद्ध्यै प्रोक्षयेच्च पञ्चगव्यकुशोदकैः।
चलिते देवबिम्बे तु प्रमादात्पतितेऽपि वा।। १६
स्थापयित्वा पुनः श्वभ्रे 'प्रतद्विष्णु' रिति ब्रुवन्।
पञ्चगव्यैस्समभ्युक्ष्य मन्त्रैरब्लिङ्गकैः क्रमात्।। १७
'अणोरणीया' नित्युक्त्वा प्रोक्ष्य चाऽवाहनं चरेत्।
'सुवर्भुवः भूस्थ' 'इति ओं तत्स' दिति च स्पृशेत्।
पुनः कर्म समारभ्य स्नपनं पूर्ववच्चरेत्।। १८

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे स्नपनदोषप्रायश्चित्तविधिर्नाम
षट्त्रिंशोऽध्यायः।

----------

# अथ सप्तत्रिंशोऽध्यायः

-----------

## उत्सवदोषप्रायश्चित्तविधिः-उत्सवशब्दार्थः

अत ऊर्ध्वं प्रवक्ष्यामि प्रायश्चित्तमथोत्सवे।
भक्त्युत्सवप्रकरणानीति शब्दास्समार्थकाः।। १
भक्तिसञ्जननान्नृणां भक्त्यानुभवितुं जनैः।
यथाशक्ति कृतेनायमुत्सवो भक्तिरीर्यते।। २
सवो यज्ञस्समाख्यातः अमूर्ताराधनं हरेः।
समूर्ताराधनेऽयं स्यादुत्सवो बलवत्तरः।। ३
ददात्यभिमतं यस्मात्कर्तुरभ्यधिकं बहु।
तस्मात्प्रकरणं प्रोक्त उत्सवो मन्त्रवित्तमैः।। ४

## उत्सवशरीररूपणम्।

शरीरमङ्गप्रत्यङ्गमुत्सवस्य निरूप्यते।
दिनेषु देवालङ्कारे पृथक् तत्तितयं स्थितम्।। ५
उत्सवाहानि संहत्य औत्सवो देह उच्यते।
अङ्गन्तु दिनमेकैकं सन्ध्या प्रत्यङ्गमुच्यते।। ६
देवेदेवस्य बिम्बन्तु देहः पूर्ववदीर्यते।
सुदर्शनादयस्त्वङ्गं प्रत्यङ्गं बलिरुच्यते (?)।। ७
रथरङ्गध्वजच्छत्रचामरादिपरिच्छदम्।
भूषणानि विदुः प्राज्ञाश्शरीरं स्यादलङ्कृतेः।। ८
एकैकमङ्गं प्रत्यङ्गमेकदेशस्तु आङ्गिकः।
दोषयुक्ते शरीरे तु प्रायश्चित्तं विधीयते।। ९

जुहुयात्पौरुषं सूक्त 'मतो देवा' दि वैष्णवम्।
यद्देवादीं स्ततो हुत्वा ब्राह्ममैन्द्रञ्च वारुणम्।। १०
आलयस्थितदेवानां मूर्तिमन्त्रांश्च हावयेत्।
हुतेनैतेन विधिना दोषशान्तिर्भविष्यति।। ११
एवं हुत्वा तथा शान्तिं समस्तदुरितापहाम्।
स्नपनं देवदेवस्य कारयेदधमोत्तमम्।। १२
सहस्रभोजनं कृत्वा विप्रेभ्यो दक्षिणां ददेत्।
कारयेन्महतीं पूजां देवदेवस्य शार्ङ्गिणः।। १३
वाचयित्वा ततश्शान्तिं महद्भिस्तत्त्वदर्शिभिः।
पुनरुत्सवमारभ्य कारयेद्विधिना बुधः।। १४
दुष्टेऽङ्गे निष्कृतिः प्रोक्ता होमं पूर्ववदाचरेत्।
स्नपनञ्चाधमं कुर्याद्दद्यादन्नादि शक्तितः।। १५
विप्रेभ्यो दक्षिणां दद्यात् शान्तिसूक्तानि वाचयेत्।
उत्सवं विधिवत्कुर्याच्छिष्टाहस्सु क्रमेण वै।। १६
प्रत्यङ्गहीने जुहुयादष्टोत्तरशताहुतीः।
वैष्णवं मन्त्रमावर्त्य प्रायश्चित्तं भविष्यति।। १७
गौणेन विधिना स्नाप्य शान्तिमन्त्रांश्च वाचयेत्।
ततः शेषन्तु विधिना कारयेदुत्सवं बुधः।। १८
दिनाश्रितेषु न्यूने तु विधिरेष प्रकीर्तितः।
यथार्हं कारयेद्विद्वान् ज्ञात्वा तु गुरुलाघवम्।। १९
होमानुक्तांश्च जुहुयात्प्रायाश्चित्तविधौ बुधः।
दक्षिणा चापि दोषानुरूपा देया विचार्य वै।। २०
एषाऽङ्गोपाङ्गप्रत्यङ्गदोषनिष्कृतिरीरिता।
----------------------।।

## पतिते बिम्बे

प्रमादात्पतिते बिम्बे भूमौ संस्नाप्य वारिणा।। २१
स्नापयेत्कलशैर्द्वादशभिश्शान्तिं समाचरेत्।
आज्येन चरुणा चैव जुहुयाद्वैष्णवं ततः ।। २२
विष्णुसूक्तञ्च जुहुयादुत्सवं पुनराचरेत्।
पीठाद्वियोजिते बिम्बे योजयित्वा यथा पुरा।। २३
शान्तिहोमञ्च हुत्वा तु लघुसम्प्रोक्षणं चरेत्।
उपाङ्गसन्ध्यादिभेदे चरुणा वैष्णवं यजेत्।। २४
शान्तिञ्च पूर्ववत्कृत्वा पुनः संस्थापनं चरेत्।

## भेदादौ

भिन्ने तु यदि प्रत्यङ्गे प्रमादात्सद्य एव तु।। २५
सन्धाय तुल्यलोहेन स्थापनं पूर्ववच्चरेत्।
अङ्गभेदे तु सम्पन्ने प्रतिमां विधिना त्यजेत्।। २६

## अङ्गमहाङ्गादिलक्षणकथनम्

पादौ बाहू शिरो वक्ष उदरञ्चाङ्गसंज्ञकाः।
अङ्गं महाङ्गमित्याहुः केचित्तत्त्वार्थदर्शिनः।। २७
अङ्गुल्यो नासिका कर्णौ उपाङ्गानि भवन्ति हि।
प्रत्यङ्गानि प्रभापीठायुधाकल्पाम्बराणि वै।। २८

## बलौ पतिते

बलौ भूमौ निपतिते येन केनापि हेतुना।
हुनेच्छान्त्यै वैष्णवन्तु पुनस्संसाधयेद्बलिम्।। २९

## वाहनादौ पतिते

पतिते वाहनादौ तु पतने च पदार्थिनाम्।
दशकृत्वस्तु चरुणा वायव्यं वैष्णवं यजेत्।। ३०
ऋत्विजां पतने चैव मुनिमन्त्रैः हुनेत्तथा।
वैष्णवैन च हुत्वा तु शान्तिं सम्यक् समाचरेत्।। ३१

## अशपृश्यैः स्पृष्टे

बिम्बे त्वस्पृश्यसंस्पर्शे पूर्वाक्तां शान्तिमाचरेत्।
वर्षबिन्दुनिपाते च धूलिपाते च विग्रहे।। ३२
जुहुयाद्विष्णुसूक्तञ्च वैष्णवञ्च शताष्टकम्।
सन्धीशबलिहानौ तु तन्मन्त्रैश्शान्तिमाचरेत्।। ३३

## प्रायश्चित्तानुक्तौ

येषां प्रातिस्विकी नोक्ता दोषाणां निष्कृतिस्त्विह।
वैष्णवेन च होमेन शान्तिं सम्यक् समाचरेत्।। ३४

## होमद्रव्यहीने-आज्यप्रशंसा

आज्यहीने तु चरुणा होमकर्म समाचरेत्।
उक्तद्रव्यविहीने तु आज्येन जुहुयात्तथा।। ३५
आज्यमन्नस्वरूपं स्यात्सर्वमाज्ये प्रतिष्ठितम्।
सर्वेषामपि देवानामाज्यमेव प्रियं भवेत्।। ३६
आज्येन सिक्तं यत्सर्वं शुचि वैतत् भविष्यति।
कायशुद्धिर्मनश्शुद्धिर्द्रव्यशुद्धिस्तथैव च।। ३७
आज्यस्योक्ता गुणा ज्ञेयाः सर्वशास्त्रेषु निश्चिताः।
यजमानमथाचार्यः धर्मानितान् सुशिक्षयेत्।। ३८

यत्तु कायकृतं पापं द्रव्यदानेन शुद्ध्यति।
यच्च वै मानसं पापं प्राणायामेन शुद्ध्यति।। ३९
यच्च द्रव्यकृतं पापं सुहुतेन विशुद्ध्यति।
अन्नदानेन चोक्ताभिः दक्षिणाभिश्च पूजया।। ४०
ऋत्विग्भिस्तु कृतं पापं जपैर्ध्यानेन शुद्ध्यति।

## सामान्यप्रायश्चित्तानि

(मौनोपवासपूजासु प्रमादाद्दोषसम्भवे।। ४१
उपवासे भोजनं स्यान्मौने प्रणवजापनम्।
अर्चनायां यथाप्रोक्तपूजावृत्तिर्विधीयते ?)।। ४२
शान्तिवाचन उद्दिष्टे पुण्याहं तत्र वाचयेत्।
होमशान्तिप्रकरणे चरुणा वैष्णवं यजेत्।। ४३
शान्तिमर्चनकालोक्तामर्घ्यदानेन कारयेत्।
बलिशान्तिप्रकरणे दद्याद्भूतबलिं तथा।। ४४
शान्तिस्स्नपनकालोक्ता पञ्चगव्येन कल्प्यते।
क्रियया दोषशमनं यथा सा शान्तिरीरिता।। ४५
शान्तिहोमविधाने तु केवलं वैष्णवं यजेत्।

## महाशान्तिः

वैष्णवं पौरुषं सूक्तं ब्राह्ममैन्द्रञ्च वारुणम्।। ४६
'यद्देवाद्या' स्समाहृत्य महाशान्तिरुदीरिता।

## अनिर्दिष्टयोगविशेषे

होमद्रव्ये त्वनिर्दिष्टे गव्यं घृतमुपाहरेत्।। ४७
अग्निकुण्डे त्वनिर्दिष्टे कुर्यादौपासनानले।
मन्त्रेऽनुक्ते जपे होमे गायत्री वैष्णवी भवेत्।। ४८

अनुक्ते स्नानभेदे तु स्नपनं सप्तभिर्घटैः।
बलिप्रमाणानुक्तौ तु आढकं बलिमाहरेत्।। ४९
दानस्वरूपेऽनुक्ते तु हिरण्यं दक्षिणां ददेत्।
सुवर्णं दक्षिणेत्युक्तौ निष्काहीनन्तु दापयेत्।। ५०
माषद्वयाधिकं माने निष्काहीनं समीरितम्।
वस्त्रं द्वादशभिर्हस्तैरायतं परिचक्षते।। ५१
सप्तहस्तावराः शाट्यः पञ्चहस्तायताः पटाः।
दशहस्ताऽयताश्चान्ये अर्चने शुभदर्शनाः।। ५२
भोजनोक्तौ भोजयेत्तु विप्रान् पञ्चावरांस्तथा।
कृच्छ्रोक्तौ निष्कृतिं कुर्यात्प्राजापत्यं यथोदितम्।। ५३

## प्रायश्चित्तनिर्णये समाहितिः

एवमुक्तान्यनुक्तानि ऊहापोहविधानतः।
देशकालानुरूप्येण दोषाणां गुरुलाघवम्।। ५४
विचार्य सम्यगाचार्यः प्रायश्चित्तं विनिर्दिशेत्।

## दोषसम्भावना

प्रायश्चित्तसमुत्पत्तिं देवाः काङ्क्षन्ति सर्वदा।। ५५
यतन्ते विघ्नक्लृप्त्यै तु तस्माद्दोषसमुद्भवः।
तस्मात्सर्वाणि कर्माणि कार्याण्यवहितैर्नरैः।। ५६

## प्रायश्चित्तानाचरणे

यदि प्रमादादुत्पन्नदोषाणां लोभभीरुणा।
क्रियान्न निष्कृतिं मोहान्महान् दोषो भविष्यति।। ५७
न कर्मफलमाप्नोति प्रत्यवायश्च जायते।
आधयो व्याधयश्चान्ये अनर्थास्सम्भवन्ति च।। ५८

यजमानस्य ग्रामस्य जनानाञ्चोपकुर्वताम्।
तस्मात्सर्वप्रयत्नेन दोषे निष्कृतिमाचरेत्।। ५९

## प्रायश्चित्तशब्दनिरुक्तिः

प्रायो दोषसमुत्पत्तिश्चित्तं तस्या निरासनम्।
तस्मात् प्रायश्चित्तपदं दोषनाशार्थकं स्मृतम्।। ६०

इत्यार्षे श्रीवैखनसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे उत्सवदोषप्रायश्चित्तविधिर्नाम
सप्तत्रिंशोऽध्यायः।



## अथ अष्टत्रिंशोऽध्यायः

ऋषय ऊचुः-

ब्रह्मपुत्र मुनिश्रेष्ठ नमस्ते वदतां वर।
तरुणालयनिर्माणप्रकारं ब्रुहि नः प्रभो।। १

भृगुरुवाचः-

### द्वितीयतरुणालयः-निमित्तानि

अतः परं प्रवक्ष्यामि द्वितीयं तरुणालयम्।
अङ्गहीने तथा बिम्बे वर्णे च स्फुटिते तथा।। २
जीर्णे विमाने पतिते कवकादिसमुद्भवे।
यष्टिहीने सुधाहीने मन्दिरे जलसंस्रवे।। ३
अष्टबन्धविहीने तु कृमिकीटादिसम्भवे।
शिलेष्टकादौ जीर्णे च अभिषेकाम्बुसङ्कटे।। ४

नवीकुर्यात्प्रयत्नेन न चेद्दोषो भविष्यति।

## बालालये त्वरा

अचिरादेव सङ्कल्प्य नवीकरणमाचरेत्।। ५
अनवेक्ष्य शुभं कालं सद्यः कर्म समारभेत्।
बालस्थानं प्रकल्प्यैव नवीकरणमारभेत्।। ६

## स्थाननिर्णयः

बालस्थानप्रतिष्ठायां चरराशिः प्रशस्यते।
बालागारार्हदेशस्य लक्षणं सम्प्रवक्ष्यते।। ७
ऐन्द्रे महाभयं विद्यात् आग्नेय्यान्तु धनप्रदम्।
याम्ये समृद्धिदं विद्यान्नैर्ऋत्यां कर्मसिद्धिदम्।। ८
वारुण्यां वित्तदं विद्याद्वायव्ये कर्मनाशनम्।
यजमानस्य हानिस्स्यात्सौम्ये चेत्तरुणालयम्।। ९
ऐशान्यां दुःखदं विद्यादिक्षु चैवं फलं भवेत्।
शुभायां दिशि चोद्दिश्य बालागारं प्रकल्पयेत्।। १०

## माननिर्णयः

मण्डपं वा प्रपां वापि शालां वा कूटमेव वा।
त्रिभिर्वा पञ्चभिर्हस्तैस्सर्वालङ्कारसंयुतम्।। ११
कारयित्वाऽत्रापेक्षितानि पीठानि परिकल्पयेत्।
बालागारस्य मध्ये तु पीठं कुर्यात्त्रिवेदिकम्।। १२

## प्रयोगः

वास्तुशुद्धिञ्च कृत्वा तु स्थापनारम्भमाचरेत्।
पूर्वेद्युरेव शर्वर्यां भूमियज्ञं यजेत्क्रमात्।। १३

प्रमुखे दक्षिणे वापि यागशालां प्रकल्पयेत्।
पञ्चाग्नीनथवा चैकं कुण्डमौपासनन्तु वा।। १४
कल्पयित्वा साधयित्वा विधिनाऽग्नीन् हुनेत्क्रमात्।
बिल्वपत्रैरथाब्जैर्वा गोघृतेनोक्तसाधनैः।। १५
द्रव्यान्तरैश्च चरुणा आज्यमिश्रेण वै क्रमात्।
समिद्भिर्यज्ञवृक्षाणां जुहुयात्पारमात्मिकम्।। १६
'अतोदेवा' दि षण्मन्त्रान् विष्णुसूक्तमतः परम्।
शान्त्यर्थं जुहुयाच्चैव तथा मिन्दाहुती ततः।। १७
आलयान्तर्गतेभ्यश्च देवेभ्यो जुहुयात्क्रमात्।
पूर्वेद्युरेव सायाह्ने अनुज्ञाऽङ्कुरमाचरेत्।। १८
आचार्यं यजमानो वै वस्त्राभरणकुण्डलैः।
अलङ्कृत्य क्रियारम्भं प्रार्थयेद्विनयान्वितः।। १९
सुमुहुर्ते चार्चनान्ते अर्चामासाद्य चालये।
सर्ववाद्यैस्समायुक्तः कुम्भपूजां समाचरेत्।। २०
कुम्भं देवस्य पुरतः धान्यराशौ तु विन्यसेत्।
कुम्भपार्श्वे समासीनो देवदेवं प्रणम्य च।। २१
प्रार्थयेद्बहुधा देवं श्रद्धाभक्तिपुरस्सरम्।
बेरे तु संहृतिन्यासं कुम्भे सृष्टिं चरेद्गुरुः।। २२

## प्रार्थनाप्रकारः

अनर्हमेतत्तवद्देहं जीर्णं तूर्णं व्यपोह्य च।
किञ्चित्कालन्तु देवेश त्वयाऽत्र स्थीयतां प्रभो।। २३
यावद्दयं नवं कृत्वा प्रतिष्ठां कारयामहे।
प्रसादं कुरु देवेश वस चात्र प्रसीद नः।। २४

इत्युक्त्वा चैव देवेशमनुमान्य जगत्पतिम्।
दोषप्राप्तिनिमित्तानां ज्ञात्वा तु गुरुलाघवम्।। २५
मासमेकं द्वित्रिमासमथ षण्मासमेव वा।
संवत्सरं द्वौ त्रीन्वाऽथ यावन्तं कालमिच्छति।। २६
तावन्तमवधिं प्रार्थ्य देवेशाय निवेदयेत्।
आद्वादशाब्दावधिकः कालो बालालयोचितः।। २७

## शक्त्याकर्षणम्

आवाह्य देवशक्तिन्तु कुम्भे साधु यथाक्रमम्।
देव्यादीनां तथाऽन्यस्य परिवारगणस्य च।। २८
शक्तिमावाहयेच्चैव तं तं देवमनुस्मरन्।
आदाय कुम्भं बिम्बानि तस्माद्गर्भगृहाद्बहिः।। २९
छत्रैः पिञ्छैश्चामराद्यैस्सर्ववाद्यैश्च संवृतः।
कनिक्रदादिसूक्तानि जपन् कृत्वा प्रदक्षिणम्।। ३०
बालस्थानं सम्प्रविशेत्पैरुषं सूक्तमुच्चरन्।

## यागशाला

बालागारस्य पुरतो दक्षिणे वा मनोरमे।। ३१
यागशालां प्रकुर्वीत वेदीः कुण्डांश्च कल्पयेत्।

## होमप्रकारः

पुण्याहं वाच्य तत्काले भूमियज्ञञ्च कारयेत्।। ३२
पूर्वोक्तेन विधानेन तत्र कुम्भञ्च साधयेत्।
अग्नीन् संसाध्य होमांश्च प्रतिष्ठोक्तवदाचरेत्।। ३३

स्नापनञ्च प्रतिसरबन्धं शयनकल्पनम्।
हौत्रमावाहनं सर्वं प्रतिष्ठोक्तवदाचरेत्।। ३४
अन्तहोमञ्च सर्वेषु सभ्यमब्जं विना चरेत्।
वाद्यैः नृत्तैश्च गेयैश्च रात्रिशेषं नयेत्क्रमात्।। ३५
प्रभाते तत आचार्य ऋत्विग्भिस्सहितोऽत्वरः।
स्नात्वा नित्यानि कर्माणि कृत्वा देवमनुस्मरन्।। ३६
यागशालां सम्प्रविश्य पुण्याहं वाचयेत्क्रमात्।
आचार्यः प्रयतो देवं प्रणवेन प्रबोधयेत्।। ३७
ततः शयानं पश्चाच्च पीठे संवेशयेत्प्रभुम्।
यजमानस्तु तत्काले दद्यादाचार्यदक्षिणाम्।। ३८
अन्तहोमञ्च हुत्वा तु कुम्भेऽग्निञ्चाहरेद्गुरुः।

## स्थापनम्-प्रतिष्ठा

मुहूर्ते समनुप्राप्ते सर्ववाद्यैस्समन्वितम्।। ३९
कुम्भं बिम्बं सहाऽदाय सर्वालङ्कारसंयुतम्।
बालालयं सम्प्रविशेत् शाकुनं सूक्तमुच्चरन्।। ४०
कृत्वा यवनिकामन्तर्निदध्यात् कुम्भमालये।
रत्नन्यासं विना पीठे ब्रह्मस्थाने प्रकल्पिते।। ४१
संस्थाप्यावाहयेत्कुम्भात्पूर्वोक्तेनैव वर्त्मना।
कुम्भे स्यात्संहृतिन्यासः बिम्बे सृष्टिञ्च कारयेत्।। ४२
गर्भालयगतान् देवान् स्वस्थाने बालधामनि।
संस्थाप्य कारयेन्नित्यमर्चनं पूर्ववद्बुधः।। ४३
आवाहनविसर्गौ तु बालस्थाने न कारयेत्।
उत्सवस्नपनादींस्तु यथापूर्वं प्रकल्पयेत्।। ४४

महाहविर्निवेद्यैव ब्राह्मणान् भोजयेत्ततः।
आचार्यदक्षिणां दद्यादकुर्वञ्छक्तिवञ्चनाम्।। ४५

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे द्वितीयतरुणालयविधिर्नाम
अष्टत्रिंशोऽध्यायः।

----------

**अथ एकोनचत्वारिंशोऽध्यायः**

----------

## जीर्णबेरपरित्यागविधिः-प्रयोगः

अथ वक्ष्ये जीर्णबेरपरित्यागविधिं क्रमात्।
जीर्णबेरमनर्च्यं स्यात्तस्मात्तं परिवर्जयेत्।। १
जीर्णबेरार्चने दोषो राजराष्ट्रभयावहः।
तस्माद्यथोक्तविधिना शान्तिं कृत्वा परित्यजेत्।। २
शान्त्या शान्तो भवेद्दोषः व्याधयश्चौषधैर्यथा।
जीर्णं बेरन्तु स्वस्थानात्पीठाद्भक्त्या समुद्धरेत्।। ३
वृषभेण गवाऽश्वेन ब्राह्मणैर्वापि मन्त्रतः।
सूत्रेणाबद्ध्य बिम्बन्तु चालयेत्प्रथमं लघु।। ४
ततश्च साधनैस्तीक्ष्णैरुत्पाट्य बहिरानयेत्।
पूर्वोक्तविधिना कुर्याद्वैदिकीं प्रक्रियां क्रमात्।। ५
दर्भरज्जुभिरावद्ध्य वस्त्रैरावेष्ट्य सर्वतः।
वाहयित्वा ब्राह्मणैर्वा साधनैः शकटादिभिः।। ६
नदीं समुद्रगां वाऽन्यमशोष्यं वा जलाशयम्।
समुद्रं वा समानीय तीरे संस्थाप्य तत्र वै।। ७

साधयित्वौपासनाग्निं शान्तिहोमपुरस्सरम्।
अङ्गहोमं वैष्णवञ्च विष्णुसूक्तं हुनेत्तदा।। ८
बेरं सुरक्षितञ्चाप्सु निक्षिपेद्विसृजेत्क्रमात्।
पश्चादालयमाविश्य शान्तिहोमं समाचरेत्।। ९
आचार्यदक्षिणां दद्यात् ब्राह्मणानपि भोजयेत्।
एष वै विधिरुद्दिष्टो जीर्णबेरविसर्जने।। १०
पश्चाद्बेरन्तु निर्माय महासम्प्रोक्षणं चरेत्।

## लोहबिम्बसंस्कारविशेषः

अर्च्यमानं कौतुकादिबिम्बं केनापि हेतुना।। ११
यद्यङ्गोपाङ्गप्रत्यङ्गैर्विहीनं परिदृश्यते।
तं त्यजेत्सहसा बिम्बं न तत्पूजां समर्हति।। १२
प्रमादात्पूजिते चैवं प्रत्यवायः परो भवेत्।
प्रमादात्पतनादौ च विश्लेषे चक्रपीठयोः।। १३
रेखासुषिरनिष्पत्तौ पुनस्सन्धानमाचरेत्।
प्रत्यङ्गोपाङ्गविच्छेदे तथा सन्धापयेत्पुनः।। १४
विच्छिन्नेषु महाङ्गेषु सन्धानं नैव चेष्यते।
परित्यज्य विधानेन लोहवत्तद्विचिन्तयेत्।। १५
मधूच्छिष्टविधानेन तुल्यं बिम्बं प्रकल्प्य च।
लोहवद्द्रावयित्वा तु नूतनं बिम्बमाचरेत्।। १६
अक्ष्युन्मेषाधिवासादीन् कृत्वा शास्त्रोक्तवर्त्मना।
प्रतिष्ठां कारयेत्पश्चादर्चनं पूर्ववच्चरेत्।। १७
ध्रुवबेरपरित्यागविधिमाश्रित्य कारयेत्।
यद्द्रव्यं जीर्णबेरस्य तद्द्रव्येणैव नूतनम्।। १८

कारयेत्तत्प्रमाणञ्च सर्वथा नान्यथा चरेत्।
आढ्यस्तु यजमानश्चेच्छ्रेष्ठलोहेन चाचरेत्।। १९

कदापि हीनद्रव्येण जीर्णोद्धारे न कारयेत्।
सौवर्णं राजतं लोहबिम्बं जीर्णं त्यजेन्न हि।। २०

तदेव द्राव्य कुर्वीत मधूच्छिष्टविधानतः।
शिलादारुप्रतिकृतिं हीनाङ्गं दूषितं त्यजेत्।। २१

केचिदिच्छन्ति सन्धानं दक्षैश्शिल्पिभिरादरात्।
शिलाबेरस्य संस्कारे दारुजं नियमात्त्यजेत्।। २२

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे जीर्णबेरपरित्यागविधिर्नाम
एकोनचत्वारिंशोऽध्यायः।।

----------

अथ चत्वारिंशोऽध्यायः

----------

## दुर्निमित्तशान्तिः-दुर्निमित्तानि

अतः परं प्रवक्ष्यामि दुर्निमित्तप्रतिक्रियाम्।
देवागारेऽग्निना दग्धे मधुलिड्भिः पराहते।। १

रक्तस्त्रीदर्शने चैव कवकादिसमुद्भवे।
बिम्बादीनां रोदने च रक्तस्रावे च कम्पने।। २

हसने चाश्रुपतने रूपान्तरसमुद्भवे।
चैत्यवृक्षप्रपतने छेदे भेदे च शोषणे।। ३

भूमिकम्पे दिव्यकाले मेघनिर्घोषसम्भवे।
तडित्स्फूर्जितयोगे च दिग्दाहे पांसुवर्षणे।। ४

गन्धर्वनागरे दृष्टे दिवा नक्षत्रदर्शने।
अपर्वणि ग्रस्तयोस्तु गगने चन्द्रसूर्ययोः।। ५
अकाले शक्रधनुषि श्वजम्बुकविरोदने।
दुर्भिक्षे सागरक्षोभे वियोनिप्रसवे भये।। ६
राष्ट्रक्षोभे शत्रुभये महाव्याधिभये तथा।
चन्द्रादित्यप्रतिच्छायाप्रातिकूल्यसमुद्भवे।। ७

## आलयेषु शान्तिकर्तव्यता

ग्रहयुद्धेऽरिष्टराशौ ग्रहकूटसमागमे।
सहोत्पातेषु शास्त्रोक्तेष्वन्येषु विविधेषु च।। ८
ऐवमादिषु शास्त्रोक्तदुर्निमित्तेषु यत्नतः।
शान्तिं कुर्वीत विधिवदालये दोषशान्तये।। ९

## साधारणी शान्तिः

पौण्डरीकाग्निमाधाय वायव्यं वैष्णवं तथा।
रौद्रं ब्राह्मं महाशान्तिहोमञ्च जुहुयाद्गुरुः।। १०
आलयस्थितदेवानां महास्नापनमाचरेत्।

## निमित्तभेदेन शान्तिभेदः

अग्निदाहे तु वायव्यमाग्नेयं वारुणं तथा।। ११
ऐन्द्रं ब्राह्मं वैष्णवञ्च महाशान्तिं हुनेत्ततः।
विशेषस्नपनं कृत्वा प्रभूतञ्च निवेदयेत्।। १२
दद्याद्भूतबलिञ्चैव ग्रामे सर्वत्र शान्तये।
मक्षिकैर्मधुनि क्षिप्ते घूकगृध्राद्यधिष्ठिते।। १३
रक्तस्त्रीदर्शने चैव कवकाद्युद्भवे तथा।
भूमियज्ञेन संशोध्य स्थानं दोषविदूषितम्।। १४

दिग्देवत्यं वैष्णवञ्च रौद्रं सौम्यञ्च वारुणम्।
कौबेरं ब्राह्ममाग्नेयं हुत्वा गव्यैश्च प्रोक्षयेत्।। १५
कलशैस्स्नापयेत्कुर्याद्विप्रभोजनमादरात्।
पायसं विनिवेद्यैव सर्वतो निर्वपेद्बलिम्।। १६
स्थावरभ्रमणे चैव प्रतिमारोदनादिषु।
भूमियज्ञं च कृत्वा तु महाशान्तिं हुनेत्ततः।। १७
जुहुयात्सर्वदेवत्यं सहस्राहुतिपूर्वकम्।
वैष्णवं जुहुयाद्ब्राह्मं रौद्रं सौरञ्च सौम्यकम्।। १८
पुण्याहं वाच्य गोदानसूक्तं वैष्णवमेव च।
पौरुषं द्वादशान्यानि जपेत्सूक्तानि संयतः।। १९
वेदानध्यापयेच्चापि महास्नपनमाचरेत्।
प्रभूतञ्च निवेद्यैव कुर्याद्ब्राह्मणभोजनम्।। २०
भूतचैत्यबलिं दद्याद्ग्रामे सर्वत्र सन्धिषु।
लाजापूपहरिद्रान्नैरर्धरात्रौ बलिस्स्मृतः।। २१
चैत्यवृक्षादिपाते चाकालशोषादिदर्शने।
आग्नेयं वारुणं सौम्यं महाशान्तिं तथा हुनेत्।। २२
वनाधिदेवपूजाञ्च कुर्यात्स्नपनमाचरेत्।
सहस्रकलशैस्स्नानं देवदेवस्य चेष्यते।। २३
महाहविः प्रभूतञ्च स्नापनान्ते निवेदयेत्।
ग्रामे सर्वत्रार्धरात्रौ महाभूतबलिं क्षिपेत्।। २४
दानानि दद्याद्विप्रेभ्यो भोजयेच्च विशेषतः।
छायाप्रतिवशे काले? महाशान्तिं हुनेत्क्रमात्।। २५
ब्राह्मञ्च वैष्णवं रौद्रमाग्नेयं वारुणं तथा।
सौरं सौम्यञ्च वायव्यं हुत्वा संस्नापयेद्विभुम्।। २६

अन्येषु च निमित्तेषु दृष्टेष्वेवं समाचरेत्।

## ग्राममध्ये शान्तिप्रकारः

राज्ञां जन्मदिनेष्वेषु दृष्टेषु तु विशेषतः।। २७
यजमानस्य ग्रामस्य तथा रष्ट्रस्य जन्मभे।
ग्राममध्ये तु शान्त्यर्थं कुर्याच्छान्तिं विधानतः।। २८
न कुर्याच्चेदनर्थस्स्यादवश्यं शान्तिमाचरेत्।

## शान्त्या आवश्यकता

उत्पातेषु तु दृष्टेषु तत्क्षणे शान्तिमारभेत्।। २९
कालक्षेपो न कर्तव्यः उत्पाता घोरभीतिदाः।

## संहितान्तरविस्तरः

मरीचिना विशेषेण प्रोक्त उत्पातविस्तरः।। ३०
विशेषस्तत्र द्रष्टव्यो मया सङ्ग्रह ईरितः।
सर्वोत्पातेषु जातेषु यत्र कुत्रापि वस्तुनि।। ३१
तद्ग्रामे संहितग्रामे देवागारे विशेषतः।
सर्व देवात्मभूतस्य विष्णोः शान्तिविधायिनः।
शान्तिहोमादिकं सर्वमुक्तं विधिवदाचरेत्।। ३२

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे जीर्णबेरपरित्यागविधिर्नाम
चत्वारिंशोऽध्यायः।



# अथ एकचत्वारिंशोऽध्यायः

-----------

## तन्त्रसङ्करप्रायश्चित्तम्-द्विविधं वैष्णवशास्त्रम्

अतः परं प्रवक्ष्यामि तन्त्रसङ्करनिष्कृतिम्।
विष्णोस्तन्त्रं द्विधा प्रोक्तं सौम्यमाग्नेयमित्यपि।। १
सौम्यं वैखानसं प्रोक्तमाग्नेयं पाञ्चरात्रकम्।
सौम्याग्नेये तथा प्रोक्ते शास्त्रे वैदिकतान्त्रिके।। २

## तल्लक्षणम्

भुक्तिमुक्तिप्रदं सौम्यं तान्त्रिकं मुक्तिमात्रदम्।
(वैलक्षण्यं बिम्बक्लृप्तौ मुख्यमित्थं प्रदृश्यते।
शङ्खचक्रकरावूर्ध्वावधस्ताद्दक्षिणं करम्।
साभयं वरदं वापि वामं कट्यवलम्बितम्।
एवं चतुर्भुजं सौम्ये देवदेवस्य दृश्यते।
पूर्वोक्तलक्षणैर्युक्तमधो वामकरं यदि।
गदायुक्तं तदाग्नेयं तान्त्रिके ब्रुवते बुधाः)।
सौम्यं सर्वत्र सम्पूज्यं ग्रामादिषु च सर्वशः।। ३
सौधेषु च तथा राज्ञां गृहेषु गृहमेधिनाम्।
आग्नेयन्तु ग्रामबाह्ये नदीतीरेऽथ पर्वते।। ४
नगे समुद्रतीरेषु नदीसागरसङ्गमे।
आश्रमेषु यतीनाञ्च विविक्तेषु स्थलेषु च।। ५
अनुष्ठेयं विशेषेण मुक्तिमात्रफलार्थिभिः।

## अधिकारिणः

वैखानसेन सूत्रेण निषेकाद्यैस्सुसंस्कृतैः।। ६

ब्राह्मणैरेव कर्तव्यं वैदिकाराधनं सदा।
चतुर्वर्गफलं सौम्यपूजनात्फलति ध्रुवम्।। ७
वैदिकाराधनं नान्यसूत्रसंस्कारसंस्कृताः।
अर्हन्ति कर्तुमर्हन्ति विखनस्सूत्रसंस्कृताः।। ८
तान्त्रिकीं कुर्वते दीक्षां प्राप्य सर्वे द्विजातयः।
न तत्र शाखासूत्रादिनियमः परिकल्पितः।। ९
सर्वसाधारणं शास्त्रं केवलं तान्त्रिकं स्मृतम्।

## तन्त्रसाङ्कर्यस्वरूपम्

कर्षणादिप्रतिष्ठान्तकर्माणि सकलानि च।। १०
आदौ यच्छास्त्रमाश्रित्य निर्वृत्तानि ततः परम्।
तेनैव शास्त्रेण सदा निर्वर्त्यानि प्रयत्नतः।। ११
नान्यत्तन्त्रन्तु गृह्णीयात्प्रमादेनापि तत्र तु।
तन्त्रसङ्करदोषोऽयं सर्वतन्त्रेषु दूषितः।। १२

## दोषस्वरूपम्

तन्त्रसङ्करदोषेण राजा राष्ट्रञ्च नश्यति।
आग्नेये त्वर्चनाहीने मासमेकं प्रमादतः।। १३
यदीच्छेत्सौम्यपूजां वै कर्तुं सौम्येन वर्त्मना।
संस्थाप्य देवं सौम्योक्तविधिना पूजनं चरेत्।। १४
न तत्र दोषो यत्सौम्य आग्नेयादुत्तमः स्मृतः।
तुल्यन्यायात् न सौम्यन्तु संस्कुर्यादितरेण तु।। १५
सौम्येन स्थापितं बिम्बं सर्वं सौम्येन चाचरेत्।
महत्यापदि च प्राप्ते कुर्यान्नान्येन सङ्करम्।। १६

सौम्येन स्थापिते स्थाने सौम्येनैव सदा चरेत्।
सौम्यं सर्वत्र सम्पूज्यं वैदिकत्वाद्विशेषतः।। १७
तस्मात्तान्त्रिकपूजायां चलितायामथान्यथा।
नष्टायां वा सौम्यमार्गप्रवेशो नैव दुष्यति।। १८
तन्त्रसङ्करदोषे तु सद्यश्शान्तिं समाचरेत्।
अङ्कुरञ्चाधिवासादीन् प्रतिष्ठोक्तक्रमेण वै।। १९
कृत्वा शान्तिं यथोक्तान्तु कारयेत्वरया बुधः।
पश्चाद्यथाधिकारञ्च पूजां सम्यक् प्रवर्तयेत्।। २०

## प्रायाश्चित्तप्रयोगः

वैष्णवेतरतन्त्रैस्तु साङ्कर्ये दोषगौरवात्।
कल्पयित्वा यागशालां कुम्भस्थापनपूर्वकम्।। २१
जुहुयात्पौण्डरीकाग्नौ विष्णुसूक्तं शताष्टकम्।
सप्तभिः कलशैर्देवं स्नापयित्वा विशेषतः।। २२
भृगूक्तविधिना कुर्याल्लघुसम्प्रोक्षणं बुधः।
पूजयेच्च यथापूर्वं नान्यथा पूजनं चरेत्।। २३
सङ्करः सम्भवेद्बुद्ध्वा ऋत्विजामन्यसूत्रिणः।
प्रतिष्ठादिषु कार्येषु पूर्वोक्तां निष्कृतिं चरेत्।
दोषापनोदनञ्चैव सम्पाद्यान्यत्समाचरेत्।। २४

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे तन्त्रसङ्करप्रायश्चित्तविधिर्नाम
एकचत्वारिंशोऽध्यायः।



## अथ द्विचत्वारिंशोऽध्यायः

----------

### श्रीकल्पः

अतः परं प्रवक्ष्यामि श्रीदेव्याः स्थापनक्रमम्।
सर्वैर्देवगणैरीशः पूज्योऽमरवरो हरिः।
पुरुषप्रवरो देवः पुरुषैः पूज्य इष्यते।। १
पुंसां यथोत्तमो विष्णुः स्त्रीणां श्रीरुत्तमा तथा।
स्त्रीभिः पूज्या ततः श्रीर्हि काङ्क्षन्तिभिस्सुखं परम्।। २
साधारणौ दम्पती तौ सदा स्त्रीपुंसयोर्द्वयोः।
तस्माच्छ्रियं विष्णुपत्नीं भूतिकामः समर्चयेत्।। ३

### आलयनिर्माणम्

देव्यै श्रियै ततः कुर्यादालयं पृथगिच्छता।
अर्चयेदिष्टमाप्नोति इह लोके परत्र च।। ४
पुत्रार्थी लभते पुत्रं जयार्थी लभते जयम्।
अर्थार्थी लभते चार्थं श्रीप्रसादात्सुदुर्लभम्।
हरेरुक्तविधानेन कर्षणादीन् समाचरेत्।। ५
सह वै हरिणा स्थाप्या देवी केवलमेव वा।
सह चेद् ब्रह्मभागे तु स्थाप्या देवी विशेषतः।। ६

### परिवारः

जयाञ्च विजयाञ्चेति व्याजनी द्वे समाचरेत्।
परितः परिवाराश्च यथायोगं प्रकल्पयेत्।। ७
दुर्गां सरस्वतीं ज्येष्ठामुमाञ्च क्रमशस्ततः।
नन्दां कुर्यात्तथा देव्या नाम्ना निर्माल्यहारिणीम्।। ८

द्विभुजां पद्महस्ताञ्च सुखासीनां शशिप्रभाम्।
मकुटालङ्कृताञ्चैव जपासुमनिभाम्बराम्।। ९
सर्वभद्रां प्रकुर्वीत देवीं देव्यास्तु वाहनम्।
गन्धर्वमुख्या सा देवी गरुडेन सहोषिता।। १०
विरूपाक्षश्च भूतेशः श्रियो द्वावनपायिनौ।
एतेषामर्चनं कुर्यात्तत्तत्स्थाने विधानवित्। ११

## श्रीपञ्चकदिनानि

पर्वद्वयञ्च पञ्चम्यौ फलुनी चोत्तरा तथा।
श्रीपञ्चकदिनं प्रोक्तं तेषु पूजा विशिष्यते।। १२
विमानं स्वस्तिकं वापि श्रीप्रतिष्ठितकं चरेत्।
पुराकल्पोक्तमार्गेण बेरं कुर्याद्यथेप्सितम्।। २३

## प्रतिष्ठाप्रकारः

प्रतिष्ठोक्तदिनात्पूर्वरात्रावङ्कुरमाचरेत्।
भूमियज्ञञ्च कृत्वा तु दिशाहोमञ्च कारयेत्।। २४
कुम्भं संसाध्य विधिना देव्या आवाहनं चरेत्।
देवीं पश्चादलङ्कृत्य कलशैस्सप्तभिः क्रमात्।। १५
स्नापयित्वा ततः पश्चात्कुर्याद् ग्रामप्रदक्षिणम्।
आलयाद्दक्षिणे पार्श्वे अग्न्यगारे च दक्षिणे।। १६
वासोभिरहतैश्शुद्धैः प्रागग्रैः स्तरणं चरेत्।
शयनं तत्र सङ्कल्प्य कौतुकं बन्धयेत्क्रमात्।। १७
शाययेच्च ततो देवीं हौत्रशंसनमाचरेत्।
जुहुयाद्विधिना पश्चात्पद्माग्नौ तु समाहितः।। १८

सुवर्णेन स्रुवं कुर्यादाज्यस्थालीञ्च शक्तितः।
स्रुवेण तेन जुहुयात्सहस्राहुतिमत्वरः।। १९
देवीमन्त्रैस्तु पूर्वोक्तैः पश्चाद्धोमं समाचरेत्।
विष्णोस्सहस्रं जुहुयादष्टाशीतिञ्च हावयेत्।। २०
श्रीशताष्टकमन्त्रैश्च दशवारं हुतैर्भवेत्।
श्रियः सहस्रं तद्धुत्वा पृषदाज्यसमन्वितम्।। २१
मधुना घृतमिश्रेण पयसा मिश्रितेन वा।
पुष्कलामाहुतिञ्चाज्यमधुमिश्राञ्च हावयेत्।। २२
होमान्ते स्थापयेद्देवीं सुमुहूर्ते सुलक्षणे।
बृहस्पत्युदये चापि स्थिरराशौ बुधोदये।। २३
ककुदा काव्ययुक्तश्चे? दुत्तराफल्गुनीयुते।
स्थापयेच्छ्रियमुक्तेन रत्नन्यासक्रमेण वै।। २४
राजराष्ट्राभिवृद्ध्यर्थं ग्रामवृद्ध्यर्थमेव च।
जयार्थं यजमानस्य कुलवृद्ध्यर्थमेव च।। २५
स्थापयेत्फलमाज्ञाय भक्तियुक्तो यथाविधि।
पञ्चगव्यैस्समभ्युक्षेत् गायत्र्या प्रणवाद्यया।। २
'तमेकनेमिं' जप्त्वा तु रत्नादीनभिमन्त्रयेत्।
'भूरसी' त्यादि चोक्त्वा तु प्रत्येकं स्थापनं चरेत्।। १
ब्रह्मस्थाने न्यसेच्छ्वभ्रे मध्ये ब्रह्ममणिं बुधः।
अलब्धे तु मणौ तत्र पद्मरागं विनिक्षिपेत्।। १
वज्रं श्रीहरितं नाम ऐशान्यां निक्षिपेत्ततः।
आग्नेय्यामेव वैदूर्यं याम्ये वै शुक्तिजं क्षिपेत्।। २
नैरृत्यां शङ्खजं दद्यात्पुष्यरागेण संयुतम्।
वारुण्यां स्फटिकं दद्याद्वायव्यां पुष्यकं तथा। ३

चन्द्रकान्तं ततस्सौम्ये चैशान्यां नीलमुत्तमम्।
रत्नान्येवन्तु निक्षिप्य ततो धातून्विनिक्षिपेत्।। ३१
श्रीवत्सं पूर्णकुम्भञ्च भेर्यादर्शौ जलेचरौ।
अङ्कुशं शङ्खमावर्तं न्यसेच्चैवाष्टमङ्गलान्।। ३२
सौवर्णं कूर्मरूपञ्च सन्न्यस्योपरि मन्त्रवित्।
तस्योपरिष्टाच्छीरूपं न्यसेद्धेममयं बुधः।। ३३
ततः श्वभ्रं समाच्छाद्य गोपयेत्क्षौमवाससा।
फेलामिव समास्तीर्य सुधया परिलेपयेत्।। ३४
शुभे मुहूर्ते श्रीदेवीं ध्यायन्नादाय स्थापकैः।
'शं सा नियच्छति च श्रिये जात इतीरयन्।। ३५
स्थापयेत्परिवारांश्च तांस्तान्मन्त्रांत्समुच्चरन्।
जपेच्छकुनसूक्तञ्च विष्णुसूक्तञ्च वैष्णवम्।। ३६
जपेत्पुरुषसूक्तञ्च त 'थाऽऽत्वा हार्ष इत्यपि।
कुम्भस्थां शक्तिमादाय कूर्चयुक्तेन वारिणा।। ३७
पूर्वोक्तेनैव मन्त्रेणाऽवाहयेद्बिम्बमूर्धनि।
पूर्वोक्तेनैव विधिना अक्षराणि च सन्न्यसेत्।। ३८
पुण्याहं कारयित्वा च परिवारांत्समाह्वयेत्।
आज्येनोद्वर्तयेद्देवीं घृतमिश्रेण सर्वतः।। ३९
चित्रञ्चेद्ध्रुवबेरन्तु चरेत्स्नानादि कौतुके।
वामतो भृगुपत्नीञ्च जयादीन् दिक्षु पूजयेत्।। ४०
बल्यन्तमर्चनं कुर्यादर्चनोक्तेन वर्त्मना।
दक्षिणाञ्च यथाशक्ति ऋत्विग्भ्यो दापयेत्ततः।। ४१
हिरण्यपशुभूम्यादीन् वासांसि विविधानि च।

## अर्चनक्रमः

अतः परं प्रवक्ष्यामिश्रीदेव्या अर्चनक्रमम्।। ४२
अर्चको नित्यकर्माणि कृत्वा सूत्रोक्तवर्त्मना।
श्रीमन्त्रांश्च जपन्नेव विष्णुसूक्तञ्च वैष्णवम्।। ४३
'श्रिये जा' तेति चोच्चार्य आलयं प्रविशेद्बुधः।
त्रिस्सम्प्रहार्य पाणिभ्यां शाम्यन्त्विति समुच्चरन्।। ४४
'शं सा नियच्छ' त्विति च प्रणम्यैवानुमान्य च।
'या गा वरिष्ठा' इति च सम्भारान् साम्भ्रियेत च।। ४५
'नमो ग्रहा' ये त्युच्चार्य सर्वगन्धान् समाहरेत्।
सावित्रीमन्त्रमुच्चार्य अर्घ्यद्रव्याणि चाहरेत्।। ४६
निर्माल्यं शोधयेत्पश्चात् 'यो धूर्धुर' मुदीरयन्।
श्रीगायत्रीं समुच्चार्य पादपुष्पं न्यसेत्ततः।। ४७
'परिलिखित' मिति च आम्लेन परिशोधयेत्।
'भूरानिलय' मन्त्रेण स्नपनं सम्यगाचरेत्।। ४८
अभिषिक्तन्तु तत्तोयं तीर्थेभ्योऽप्यधिकं भवेत्।
'श्रियं धृतिं पवित्रीञ्च प्रमोदाधायिनीमिति।। ४६
पद्मासनाञ्च लक्ष्मीञ्च अतिकान्तां हरिप्रियाम्'।
एतास्समर्चयेद्दिक्षु पुष्पासनविधौ क्रमात्।। ५०
पुनर्वेद्या अधस्तात्तु जयादीरपि चार्चयेत्।
आत्मसूक्तं ततो जप्त्वा पश्चादर्चनमारभेत्।। ५१

## आवाहनादि

'आ यातु भगवती' त्युक्त्वा देवीमावाहयेत्ततः।
पुष्पासनं ततो दद्या 'दस्त्वासन' मिति ब्रुवन्।। ५२

'स्वाङ्कृतोऽसी' ति मन्त्रेण स्वागत सम्यगीरयेत्।
'अनुमन्यस्व पुण्ये' चेत्यनुज्ञाञ्चैव याचयेत्।। ५३
पादप्रक्षालनार्थन्तु शुद्धं तोयं प्रकल्पयेत्।
दद्यादाचमनीयन्तु 'योगे योग' इतीरयन्।। ५४
'इमास्सुनस' इति पुष्पं दद्यात्ततः परम्।
'इमे गन्धा' इति गन्धं धूपं दीपञ्च दापयेत्।। ५५
'सोमं राजान' मित्युक्वा दद्यादर्घ्यं श्रियै ततः ।
'रविपा' मिति चोच्चार्य धृत्याः अर्घ्यं निवेदयेत्।। ५६
'देवीष्षड्डुर्वी' रित्युक्त्वा पवित्र्या अर्घ्यमर्पयेत्।
'सो नो भूत्या' इति प्रमोदायिन्यै अर्घ्यमर्पयेत्।। ५७
ततस्त्वाचमनं दद्यात्पूर्वोक्तमनुना तथा।
स्नापयेच्छुद्धतोयेन 'ऋतं सत्यं' समुच्चरन्।। ५८
'मित्रस्ये' ति वदन् देवीं प्लोतेन विमृजेत्तथा।
'तेजो वत्स्याव' इति च क्षौमं वस्त्रं दिशेद्बुधः।। ५९
'हिरण्यरूप' इत्युक्त्वा भूषणैरपि भूषयेत्।
दीपान्तमर्चयित्वा तु हविर्भिस्सन्निवेदयेत्।। ६०
फलान्नं वा गुडान्नं वा पायसं मौद्गिकं तथा।
शुद्धान्नं वाथ दध्यन्नमुपदंशादिसंयुतम्।। ६१
'भूरपा' मित्यादिमन्त्रैः हविर्दानं विधीयते।
'धारा' स्विति च मन्त्रेण दद्यात्पानीयमुत्तमम्।। ६२
'शन्नो देवी' रिति वदन् दद्यादाचमनोदकम्।
'घृतात्परी' ति मन्त्रेण मुखवासं निवेदयेत्।। ६३
देव्या मूर्तिभिरायोज्य मन्त्रान् सर्वत्र चोच्चरेत्।
अनुक्तं पूर्वविधिना सर्वमन्यत्समाचरेत्।। ६४

## स्नपनक्रमः

अतः परं प्रवक्ष्यामि श्रीदेव्यास्स्नपनक्रमम्।
पूर्वोक्तेन विधानेन अङ्कुरार्पणमाचरेत्।। ६५

पुण्यर्क्षेषु च सर्वेषु यजमानस्य जन्मभे।
सर्वकार्यार्थसिद्ध्यर्थं श्रीदेव्यास्स्नपनं चरेत्।। ६६

तण्डुलैर्व्रीहिभिर्वापि दण्डवत्पङ्क्तिमाचरेत्।
सोपस्नानांश्च कलशान् प्रधानान् नव चाहरेत्।। ६७

अपामुत्पवनं कुर्यात्पूरयेत्कलशांस्ततः।
उत्तरादि न्यसेत्तांस्तु वेद्यां द्रव्यप्रपूरितान्।। ६८

घृतं दधि पयश्चैव अक्षतोदं कुशोदकम्।
रत्नोदकं सर्वौषधिजलं हारिद्रचूर्णकम्।। ६९

सर्वगन्धोदकञ्चेति नवद्रव्याणि चक्षते।
सकूर्चान् कलशान् कृत्वा सापिधानान्त्स्वलङ्कृतान्।। ७०

वस्त्रैरावेष्ट्य यत्नेन उत्तराग्रैर्विशेषतः।
श्वभ्रोपरि यथापूर्वं जयादीः परिपूजयेत्।। ७१

पश्चाद्देवीमनुज्ञाप्य 'परं रंह' इतीरयन्।
देवीमादाय शुद्धात्मा स्वस्तिसूक्तं समुच्चरन्।। ७२

श्वभ्रमध्ये बैल्वपीठे देवीं संस्थापयेच्छ्रियम्।
'अग्न आयाहि' मन्त्रेण घृतेन स्नापयेच्छ्रियम्।। ७३

'इषे' त्वेति विधानज्ञः दध्ना संस्नापयेत्ततः।
'शन्नो देवी' रिति वदन् क्षीरेणैवाभिषेचयेत्।। ७४

अक्षतोदकमादाय 'इमा ओषधयो' ब्रुवन्।

'दाक्षायण्या' इति निशाचूर्णेनसेचनम्।
'पुण्याञ्च पुण्य' इत्युक्त्वा सर्वगन्धाभिषेचनम्।। ७६
प्रतिद्रव्यं विशेषेण घण्टानादञ्च कारयेत्।
श्वेतपुष्पैरर्चयेच्च पूजयेदष्टविग्रहैः।। ७७
यथा शुद्ध्यति वै बिम्बं शुद्धतोयेन शोधयेत्।
प्लोतेन विमृजेच्छुद्धैः वस्त्रैराभरणैस्तथा।। ७८
गन्धमाल्यादिभिरलङ्कुर्याच्च सुमनोहरम्।
जीवस्थाने स्थापयेच्च स्वस्तिसूक्तं समुच्चरन्।
यथाकालार्चनादीनि यथोक्तानि समारभेत्।। ७९

## श्रीप्रसादक्रतुः

अतः परं प्रवक्ष्यामि श्रीप्रसादकरं क्रतुम्।
श्रियं समर्चयेद्देवीं श्वेतपद्मैर्विशेषतः।। ८०
अब्जाग्निं साधयित्वा तु आघारं जुहुयाद्बुधः।
प्रज्वाल्याग्निं परिस्तीर्य देवीञ्चापि चिकीर्षितम्।। ७१
ध्यायन् क्षीरौदनेनाथ कापिलेन घृतेन वा।
श्वेतपद्मैर्विशेषेण बिल्वपत्रैरथापि वा।। ७२
बिल्वाश्वत्थपलाशानां समिद्भिर्वा हुनेत्क्रमात्।
घृताप्लुतैरेव सदा द्रव्यैर्होमं समाचरेत्।
श्रीशताष्टकमन्त्रैस्स्यादत्र होमविधिस्स्मृतः।। ७३

## श्रीशताष्टकम्

(पद्मिन्यै चैव पद्मायै मन्त्रास्स्युश्श्रीशताष्टकम्।
'शं सा नियच्छतु' तथा 'भूयाम' इति वै यजेत्।

देवी पवित्री चेत्युक्त्वा जुष्टं कामवहेति च।
सुप्रीता च वराङ्गी च पद्मिनी चेति हूयताम्।
सन्धारणा वरिष्ठेति पुण्यानीत्येव च क्रमात्।
पुण्याङ्गी पुण्यरूपा समुद्वहन्ती शुभाङ्गना।
आप्यायस्व शुभा चेति अस्मानध्यापयेति च।
इन्दुजुष्टेति देवीति मन्त्रैरेतैश्च हूयताम्।
एवं हुत्वा त्रिधा वापि दशधा वा यथाक्रमम्।
असङ्कुलैस्तु तैर्मन्त्रैः शुद्धैस्सञ्जुहुयादिति।
एवं यः कुरुते भक्त्या सोऽक्षयां श्रियमाप्नुयात्।
अनश्नन् दशसाहस्रं जुहुयाद्यदि कामतः।
सर्वान् कामानवाप्नोति शान्तिञ्चैव तु विन्दति।
स्वप्ने च दर्शयत्येषा विश्वरूपधारा रमा।
कोटिहोमेन वै देवी सर्वदा वशगा भवेत्।
'किं करोमी' ति श्रीर्देवी सान्निध्यं सम्प्रयच्छती।
वरानिष्टांश्च सकलान् प्रददाति न संशयः।
साधकस्य कुले चैव पाश्चात्याः पुरुषा दश।
दरिद्रा नैव जायन्ते भवेयुश्चैव श्रीयुताः।
यजमानः किं पुनस्स लोकेऽस्मिंश्च परत्र च।

----------

सुवर्णपशुभूम्यादीन् दासदासीपरिच्छदान्।
आचार्याय ददेद्भक्त्या कर्मसाफल्यहेतवे)

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे श्रीकल्पो नाम
द्विचत्वारिंशोऽध्यायः

## अथ त्रिचत्वारिंशोऽध्यायः

-----------

### सूर्यकल्पः

सूर्यस्य स्थापनं वक्ष्ये इहामुत्र फलप्रदम्।
पूर्वोक्तेन विधानेन कर्षणादीन् समाचरेत्।। १
विज्ञाय वास्तुशास्त्रोक्तं सूर्यसंस्थापनोचितम्।
विमानं विधिर्वत्कुर्याद्यथावित्तानुसारतः।। २
प्राङ्मुखं स्थापयेन्मुख्यमथवा दक्षिणामुखम्।
न कदापि रविं कुर्याद्दक्षिणोत्तरदिङ्मुखम्।। ३

### सूर्यबिम्बलक्षणम्

नवार्धतालमानेन कारयेत्प्रतिमां रवेः।
देवीभ्याञ्च समायुक्तं द्विपादं द्विभुजं विभुम्। ४
हस्तौ पद्मधरौ कुर्यात्स्थितं पद्मासने तथा।
कारयेन्मण्डलं मूर्ध्नि प्रवालसदृशप्रभम्।। ५

### सूर्यपरिवारः

पूजकौ च ऋषी चोभौ शैषिकं वाह्नं तथा।
भूतस्थाने च भूतेशं कृत्वा स्थापनमाचरेत्।। ६
ग्रामस्य यजमानस्य चानुकूले दिने शुभे।

### प्रतिष्ठाप्रयोगः

अङ्कुरानर्पयित्वा तु पूर्वोक्तविधिना ततः।। ७
प्रतिष्ठोक्तदिनात्पूर्वं सप्तमेऽह्न्यक्षिमोचनम्।
अङ्गहोमञ्च कृत्वा तु 'उदुत्यं चित्र' मित्यपि।। ८

द्वाभ्यां तदुक्तमन्त्राभ्यां कारयेदक्षिमोचनम्।
अधिवासादिकं सर्वं विष्णोरिव समाचरेत्।। ९

आग्नेय्यां प्रमुखे वाथ यज्ञशालां प्रकल्पयेत्।
तत्र चाहवनीयादींश्चतुरोऽग्नीन् प्रकल्पयेत्।। १०

चतुर्ष्वपि च कोणेषु कुर्यादौपासनानलान्।
मध्ये शयनवेदिञ्च यथाविधि प्रकल्पयेत्।। ११

पूर्वेद्युरेव सायाह्ने भूमियज्ञं यजेत्क्रमात्।
कुम्भमादाय विधिवत् कुम्भपूजनमाचरेत्।। १२

निक्षिपेद्वर्णचिह्नानि तथाऽष्टौ मङ्गलानि च।
निक्षिपेन्नव रत्नानि कूर्चान् कुम्भजले ततः।। १३

वेष्टयेद्वस्त्रयुग्मेन पल्लवैरपि भूषयेत्।
आचार्यः सुप्रसन्नात्मा त्रयीमयमनामयम्।। १४

विश्वबोधात्मकं ध्यात्वा भानुमावाहयेज्जले।
अधिवासैस्सुसंस्कृत्य बेरं तद्भास्करस्य वै।। १५

संस्नाप्य सप्तकलशैः वासोभिः परिधाय च।
रक्तवर्णैः शालिधान्यास्तृते शयनमण्डपे।। १६

क्षिप्त्वा तु निम्बफलकां अण्डजादीनि पञ्च वै।
शयनानि समास्तीर्य संस्थाप्य शयने रविम्।। १७

बध्नीयात्कौतुकं पश्चाच्छाययेद्विधिना प्रभुम्।
रक्तवस्त्रेण चाच्छाद्य पश्चात् कर्म समाचरेत्।। १८

आचम्य होता शुद्धात्मा कूर्चहस्तस्समाहितः।
अन्वाहार्यस्य पुरतः स्थित्वा हौत्रं समुच्चरेत्।। १९

अध्वर्युरावाह्य देवं परिवारैस्सहैव तु।
जुष्टाकारेण निर्वाप्य जुहुयादाहुतीः क्रमात्।। २०

जुहुयध्व्याहृतीः पश्चात् गायत्र्या भास्करस्य च।

## सहस्राहुतिः

'भास्करायाथ सूर्याय मार्ताण्डाय विवस्वते।। २१
त्रिलोकमण्डनायाथ तमोघ्नाय विवस्वते।
सर्वात्मने भगवते त्रिधाम्ने चण्डरोचिषे।। २२
त्रिगुणेशाय रुचये ज्योतिष्मत' इतीरयन्।
एतैस्सहस्रशो हुत्वा परिस्तीर्य च वै पुनः। २३

## होममन्त्राः

'मित्रस्य चर्षणी' ति त्रीन् त्रीन् मन्त्रा 'नुद्वयादि' कान्।
'यच्चिद्धी' ति च मनून् पञ्च जुहुयात्क्रमविद्गुरुः।। २४
हुत्वा चैवं प्रधानाग्नौ सर्वेष्वग्निषु वै पृथक्।
'मित्रस्य चर्षणी' त्यादीन् षण्मन्त्रान् जुहुयात्तथा।। २५
अर्कापामार्गपालाशसमिद्भिश्च ततः परम्।
जुहुयात्पौरुषं सूक्तं सर्वेष्वग्निषु वैष्णवम्।। २६
जुहुयाल्लोकपालानां मन्त्रैस्सर्वेषु चाग्निषु।
मिन्दाहुती तथा हुत्वोपरिष्टात्तन्त्रमाचरेत्।। २७

## सर्वदेवार्चनम्

आवाहयेत्तत्र देवान् सर्वदेवार्चनाविधौ।
भास्करं मध्यमेऽभ्यर्च्य दक्षिणे च सुवर्चलाम्।। २८
वामे वै रेणुकां देवीं पार्श्वयोस्तु समर्चयेत्।
स्थूलदण्डं शङ्खपालं पूजकौ दक्षवामयोः।। २९
द्वारदेवांश्च पूर्वोक्तान् सन्ध्ये द्वे द्वारपालिके।
गायत्रीञ्चैव सावित्रीं द्वितीये द्वारि चार्चयेत्।। ३०

अरुणञ्चानुजस्थाने (?) तपनं शैषिकालये।
न्यक्षादीन् लोकपालांश्च हरेरिव समर्चयेत्।। ३१
तृतीयेऽभ्यन्तरद्वारे वसूनष्टौ समर्चयेत्।
शक्राग्न्योर्मध्यमे स्थाने आदित्यान् पचने तथा। ३२
एकादश तथा रुद्रान् यमाग्न्योर्मध्यमेऽर्चयेत्।
यमनैऋतयोर्मध्ये ग्रहान् नव समर्चयेत्।। ३३
नीलवारुणयोर्मध्ये पर्जन्यं श्याममर्चयेत्।
वरुणानिलयोर्मध्ये नलिनीं सम्यगर्चयेत्।। ३४
कुबेरानिलयोर्मध्ये ध्रुवं सप्त ऋषींस्तथा।
सोमशैषिकयोर्मध्ये अश्विनौ सम्प्रपूजयेत्।। ३५
तथेन्द्रेशानयोर्मध्ये पञ्च भूतानि चार्चयेत्।
पृष्ठतश्चारुणस्यापि स्यन्दनाश्वान् समर्चयेत्।। ३६
भूतस्थाने तु भूतेशमेवं देवांत्समर्चयेत्।
वेदाध्ययनगानाद्यैः रात्रिशेषं नयेत्क्रमात्।। ३७

## प्रतिष्ठा

प्रभाते तु विशुद्धात्मा यजमानयुतो गुरुः।
स्नात्वा स्नानविधानेन रत्नन्यासं समाचरेत्।। ३८
श्वभ्रे तत्रोत्तरे रौक्मप्रतिमां स्थापयेद्रवेः।
मुहूर्ते समनुप्राप्ते स्थापकैस्सहितो गुरुः।। ३९
कुम्भं बिम्बं समादाय स्वस्तिसूक्तसमन्वितम्।
देवागारं परित्यैव प्राणस्थानं प्रविश्य च।। ४०
स्थापकैस्सहितो देवं देवीभ्यां स्थापयेत्प्रभुम्।
कुम्भस्थां शक्तिमादाय बिम्बे चावाहयेद्गुरुः।। ४१

अनुक्तमत्र यत्सर्वं हरेरिव समाचरेत्।
देवीभ्यां रहितं देवं केचिदिच्छन्ति स्थापितुम्।।

## नित्यार्चनाविधिः

अतः परं प्रवक्ष्यामि नित्यपूजाविधिं रवेः।
स्नात्वा सम्यग्विशुद्धात्मा आदित्यं सम्प्रणम्य च।।
'उदुत्यं जातवेदे' ति कुर्यात्स्थानप्रदक्षिणम्।
द्वारपालान् नमस्कृत्य कवाटोद्घाटनं चरेत्।।
ततोऽभ्यन्तरमाविश्य प्रणमेज्ज्योतिषां पतिम्।
शुद्धमाधावमादाय समुत्पूय विनिक्षिपेत्।।
सम्मार्ज्याभ्युक्ष्य तोयेन निर्माल्यं संव्यपोह्य च।
'तपनं सूर्यदासञ्च तथा लोकप्रवर्तकम्।।
विघ्नहन्तार' मित्युक्त्वा शैषिकन्तु प्रपूजयेत्।
भास्करं सूर्यगायत्र्या स्नापयेद्गन्धवारिणा।।
'आया ' त्विति समुच्चार्य पश्चादावाहनं चरेत्।
'एकाक्षरादि' ना चैव दद्यात्पुष्पैरथाऽऽसनम्।।
'वितत्य बाण' मित्युक्ता त्वमग्ने रुद्रं इत्यपि।
स्वागतञ्चानुमानञ्च उपचारौ समर्पयेत्।।
'उद्वयं तमस' इत्युक्ता पाद्यं दद्यात्ततः परम्।
हस्ते दद्यादाचमनं 'हिरण्यवर्णा' समुच्चरन्।।
'पवित्रन्त' इति मन्त्रेण मूर्ध्नि पुष्पाणि निक्षिपेत्।
'अप्सरस्सु - इमे धूपा' इति गन्धञ्च धूपकम्।।
'प्रवश्शुक्रा' येति दीपमर्घ्यमाचमनं ततः।
सर्वान् शेषोपचारांश्च विष्णोरिव समाचरेत्।।

## चतुर्मूर्तिप्रकारः

'आदित्यं भास्करं सूर्यं मार्ताण्डञ्चेत्यतः परम्।
विवस्वन्त' मिति प्रोक्ताः मूर्तयः पञ्च वै रवेः।। ५३
'सुवर्चलामुषाञ्चेति श्यामलां सुप्रभा' मिति।
अर्चयेद्दक्षिणे देवीं सूर्यार्धाङ्गीं सुवर्चलाम्।। ५४
'रेणुकां रक्तवर्णाञ्च तथा चैव रविप्रियाम्।
श्वेतवस्त्रा' मिति वदन् रेणुकां वामतोऽर्चयेत्।। ५५
'स्थूलदण्डं - महानादं - प्रवालाभं शुचिं' तथा ।
'शङ्खपालं - शङ्खनिभं - कूर्चहस्तं - जटाधरम्'।। ५६
स्थूलदण्डं - शङ्खपालं - दणिणोत्तरपार्श्वयोः।
पूजकौ द्वौ समभ्यर्च्य द्वारे द्वारे हरेरिव।। ५७
धात्रादीन् षड् द्वारदेवान्
यथापूर्वं समर्चयेत्।
'प्राचीं - सन्ध्यां तथा रक्तां -
विश्वबोधां' इतीरयन्।। ५८
प्राक्सन्ध्यां दक्षिणे चैव
तथा वामे 'जगद्धिताम्।
जगत्पूज्यां - धूम्रवर्णां -
तथा चैव 'निशामुखीम्' ।। ५९
इत्युक्ता पूजयेद्वामे देवीं सन्ध्यान्तु पश्चिमाम्।
'गायत्रीं पावनीं जप्यां वेदगर्भा' मुदीरयन्।। ६०
'गायत्रीं दक्षिणद्वारे 'सावित्रीं वेदमातरम्।
ब्रह्मपत्नीं जगत्प्रिया' मिति द्वारे च वामके।। ६१

गायत्रीञ्चैव सावित्रीमर्चयेत्पालिके उभे।
वामपार्श्वे मुनिं विद्वान् द्वितीयद्वारि चार्चयेत्।। ६२

सोपानमध्ये 'सप्ताश्वान् - शुक्लवर्णान् - महाजवान्।
तथा रत्नखुरां' श्चेति सप्ताश्वान् सम्यगर्चयेत्।। ६३

'अरुणं रश्मिहस्तञ्च काश्यपं सूर्यसारथिम्'।
अनुजस्थान आसीनं विश्रान्तं सम्यगर्चयेत्।। ६४

तपनं शैषिकस्थाने उक्तैर्मन्त्रैस्समर्चयेत्।
न्यक्षादीन् लोकपालांश्च हरेरिव समर्चयेत्।। ६५

तृतीये द्वारि पालांस्तु वसूनष्टौ समर्चयेत्।
'धरो ध्रुवश्च सोमश्च आपश्चेति तु दक्षिणे।। ६६

अनिलश्चानलश्चैव प्रत्युषश्च प्रभासकः'।
वामे चाभ्यर्चयेत्पश्चात् 'भूतनाथं बहिर्मुखम्।। ६७

महोदरं महाभूत' मिति भूताधिपार्चनम्।
रक्तपुष्पाणि पुण्यानि सङ्गृह्य रविमर्चयेत्।। ६८

जपापुष्पञ्च कनकं पुष्पं श्वेतं विवर्जयेत्।
वर्जयेत्कृष्णपुष्पाणि गृह्णीयान्नीलमुत्पलम्।। ६९

गन्धद्रव्येषु सर्वेषु श्रेष्ठं स्याद्रक्तचन्दनम्।
रवेः प्रियं ताम्रपात्रं तथा मृण्मयभाजनम्।। ७०

यदपेक्ष्यमनुक्तञ्च हरेरिव समाचरेत्।
जपेच्च सूर्यगायत्रीमर्चनान्ते समाहितः।। ७१

## स्नपनविधिः

अतः परं प्रवक्ष्यामि स्नपनं भास्करस्य वै।
कुर्याद्द्वादशभिर्द्रव्यैरुपस्नानसमन्वितैः।। ७२

स्नपनं हरिदश्वस्य बिष्णोरिव समीरितम्।
श्वभ्रमध्ये प्रतिष्ठाप्य शालायां स्नपनालये।। ७३
तण्डुलैर्व्रीहिभिर्वापि
पङ्क्तिं कुर्याद्यथोचिताम्।
पूर्वेक्तेन विधानेन
पङ्क्तेः कुर्यादलङ्क्रियाम्।। ७४
पञ्चगव्यादिकलशान् संसाध्याभ्यर्चयेत्क्रमात्।
तपनं पूर्वमभ्यर्च्य पङ्क्तीशञ्च समर्चयेत्।। ७५
सर्वेषां कलशानाञ्च सावित्र्याऽऽहरणं चरेत्।
हरेरुक्तैरेव मन्त्रैस्स्नापयेद्भास्करं बुधः।। ७६
निवेदयेद्यथालभं शुद्धान्नानि हवींषि च।
पानीयादींस्ततो दद्याद्दक्षिणाञ्च समन्त्रकम्।। ७७
निवेदितं यदन्नादि तोयं तत्पूजकैर्जनैः।
सूर्योपासनसिद्धैश्च भोज्यं पूज्यं विशेषतः।। ७८
बल्युत्सवादिकं सर्वं विष्णोरिव समाचरेत्।
यत्र सम्पूज्यते सूर्यस्सप्तविंशतिविग्रहैः।। ७९
देवालये तु तद्वास्तुवासिनां भगवान् रविः।
आयुरारोग्यमैश्वरं सकलं सम्प्रयच्छति।। ८०
(गायत्री भास्करस्यैवमुद्धृता परमर्षिभिः।
आदित्याय समुच्चार्य ततो विद्मह इत्यपि।
मार्ताण्डायेति चोक्ता तु धीमहीति ततः परम्।
सूर्यः प्रचोदयादित्थं जपहोमादिषु स्मृता।
सूर्यबीजमिदं प्रोक्तं पूजकानां हिताय वै।
यान्तारूढन्तु जीवान्तं षष्ठस्वरविभूषितम्।

चतुर्दशेन सम्भिन्नं बिन्दुमस्तकशोभितम्।
सूर्यबीजमिति प्रोक्तं सर्वतन्त्रविशारदैः।)

(गद्यम्।।) यान्तो हकारः तेनारूढः हकारेणारूढ इत्यर्थः। जीवान्तः जीवः प्राणः इह शास्त्रे सकार इत्यर्थः। षष्ठस्वरसमन्वितः षष्ठेन स्वरेण संयुतः चतुर्दशेन सम्भिन्नः बिन्दुना शिरसि भूषितः एवं भूतं सूर्यबीजमिति विजानीयात्।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे सूर्यकल्पो नाम
त्रिचत्वारिंशोऽध्यायः। ✡



✡ उत्सवविधिर्न दृश्यते

# अनुबन्धः

-----------

## वाग्देवीकल्पः-वाग्देवीप्रशंसा

अथातस्सम्प्रवक्ष्यामि वाग्देव्याः स्थापनक्रमम्।
यां देवतां विना देवयक्षगन्धर्वराक्षसाः।। १
असुराः किन्नरा नागा मनुष्याश्चान्यजन्तवः।
सर्वे मूकीभवन्त्यत्था यान्ति कष्टतमां दशाम्।। २
यस्याः प्रसादात्सर्वे ते लभन्ते कृतकृत्यताम्।
तां देवीं वाचमखिलपुरुषर्थार्थिनो नराः।। ३
उपासीरन् भक्तियुक्ता हृदये देवतागृहे।

## स्थानम्

स्थापयेदर्चनार्थन्तु वाग्देवीं दिव्यरूपिणीम्।। ४
दिव्याम्बरपरीताङ्गीं दिव्याभरणभूषिताम्।
दिव्यमाल्याकल्पधरां जगद्व्यापारकारिणीम्।। ५
ग्राममध्ये पूर्वपश्चिमयोस्संस्थाप्य चार्चयेत्।
दक्षिणे मध्यमं तद्वदुत्तरेऽधममुच्यते।। ६
विदिशासु शुभं विद्यादारामे पर्वते वने।
नदीतटाकाब्धिसरस्तीरेषु स्थापनं स्मृतम्।। ७
कुम्भाकारं त्रिकूटं वा हस्तिपृष्ठमथापि वा।
नन्द्यावर्तं वा विमानं पीठगोपुरसंयुतम्।। ८
प्राकारादिसमायुक्तं वाग्देव्याः कारयेद्बुधः।
अथवा भगवद्गेहे मण्डपे कूट एव वा।। ९

---

क्वचिदयमनुबन्धभागो लभ्यते

कृत्वाऽऽश्रयं शुभं स्थानं
तत्र संस्थाप्य चार्चयेत्।
कर्षणादीनि कर्माणि
हरेरिव समाचरेत्।। १०

## बिम्बलक्षणम्

पूर्वोक्तविधिना कुर्याद्वाग्देवीं शुभलक्षणाम्।
शिल्पशास्त्रोक्तमार्गेण शिलया चोत्तमा भवेत्।। ११
ध्रुवानुरूपां वै कुर्यात् कौतुकप्रतिमामपि।
नवतालक्रमेणैव चित्रं चित्रार्धमेव वा।। १२
जटामण्डलसंयुक्तां स्वर्णवर्णां चतुर्भुजाम्।
ऊर्ध्वदक्षिणहस्तन्तु अक्षमालाधरं तथा।। १३
मुद्राधरमधोहस्तं वरदं वापि कारयेत्।
ज्ञानमुद्रा मुनिहिता वरदा भोगदा स्मृता।। १४
ज्ञानमुद्रा च मुद्रासु सदंशं (?) हृदयोन्मुखम्।
सैव मुद्रा पराग्भूता ज्ञेया व्याख्यानमुद्रिका।। १५
कमण्डलुधरञ्चोर्ध्ववामहस्तं तथाऽधरम्।
हस्तञ्च पुस्तकधरं कारयेत्तु विचक्षणः।। १६
पद्मपीठोपरि पुनः कल्पयेद्ब्राह्ममासनम्।
कुर्यात्प्रसारितं पादं दक्षिणं कुञ्चितं परम्।। १७
सर्वाभरणसंयुक्तां श्वेतवस्त्रविभूषिताम्।
कक्ष्याबद्धस्तनयुगां छन्नवीरोपशोभिताम्।। १८
कुर्यात्सकलसौन्दर्यसंस्कृतां बुद्धिदेवताम्।
शुक्लवस्त्रधरां शुक्लां शुक्लमाल्यानुलेपनाम्।। १९

शुक्लपद्मासनां देवीं केचिदाहुर्मनीषिणः।

## परिवारः- लक्षणम्

दक्षिणे सुन्दरीं कुर्याद्धस्ते व्यजनधारिणीम्।। २०
रक्तवर्णां सुरूपाञ्च सर्वाभरणभूषिताम्।
वामे च विजयां कुर्याद्व्याजिनीं श्यामलां शुभाम्।। २१
दक्षिणोत्तरयोः ब्रह्मस्थानकुड्यद्वयान्तरे।
शुक्रञ्च शौनकञ्चैव पूजकौ तु समाचरेत्।। २२
शुक्रं कुर्याद्रक्तवर्णं शौनकं श्वेतमेव च।
सौम्यभावसमायुक्तौ जटामकुटधारिणौ।। २३
अशक्तौ परिवारांस्तु चित्रवर्णैस्समालिखेत्।
पृष्ठे श्रियमुमाञ्चैवारुन्धतीञ्च कुमुद्वतीम्।। २४
एवं कर्तुमशक्तश्चेद्ब्रह्मभागे यथाविधि।
एकबेरविधानेन प्रतिष्ठां कारयेद्बुधः।। २५
दक्षिणे प्रथमे द्वारे विशोकां श्यामरूपिणीम्।
वामे चोत्पलकां कुर्यात्तप्तहाटकसन्निभाम्।। २६
जयां कुर्याद्रक्तवर्णां द्वितीयद्वारदक्षिणे।
वामे च विजयां कुर्याच्छ्यामलाङ्गी सुरूपिणीम्।। २७
सोपानमध्ये हंसञ्च कारयेच्छिलयाऽथ वा।
तस्योत्तरे समासीनां रक्तवर्णां सुरोत्तमाम्।। २८
कुर्यादाभरणैर्युक्तां सुरूपांशुकधारिणीम्।
प्रथमावरणे त्वेवं द्वितीयावरणे तथा।। २९
मण्डपानि च शक्तश्चेद्गोपुरादींश्च कारयत्।
बहिर्द्वितीयावरणाद्भूतपीठञ्च कारयेत्।। ३०

## स्थापनप्रकारः

एवं कृत्वा यथाशक्ति पश्चात् स्थापनमाचरेत्।
स्थापनादिवसात्पूर्वं नवमे वाथ सप्तमे।। ३१
पञ्चमेऽहनि वा कुर्यात्पूर्ववच्चाङ्कुरार्पणम्।
उद्दिष्टवर्त्मना कुर्याद्यागशालां विशेषतः।। ३२
तोरणैर्दर्भमालाद्यैरलङ्कुर्यात्समन्ततः।
तन्मध्ये शयनस्थानं चतुर्हस्तं चतुर्दिशम्।। ३३
ततश्चोत्तरतः पार्श्वे पौण्डरीकं समाचरेत्।
प्रच्यां श्रामणकं कुर्याद्दक्षिणाग्निञ्च दक्षिणे।। ३४
प्रतीच्यां गार्हपत्यञ्च कुण्डानेवं प्रकल्पयेत्।
कुर्यादग्निषु चाघारं कुम्भपूजनमारभेत्।। ३५
पञ्च रत्नानि चिह्नानि वर्णानां मङ्गलानि च।
सौवर्णानि क्षिपेत्कुम्भे सावित्रीं हृदि चिन्तयन्।। ३६
ब्रह्मस्वरूपिणीं देवीं सकलीकृत्य योगतः।
कुम्भे शक्तिं समावाह्य तत्सूक्तेनाभिमन्त्रयेत्।। ३७
नवबिम्बप्रतिष्ठा चेदधिवासादिकं चरेत्।
श्वभ्रं कुर्यात्तथैशान्यां प्रपायां विधिनोक्तवत्।। ३८
श्वभ्रमध्ये न्यसेद्बिम्बं कुम्भं दक्षिणतो न्यसेत्।
सप्तभिः कलशैर्देवीं स्नापयेत्पूर्ववत्क्रमात्।। ३९
प्लोतादीन् पूर्ववत्कृत्वा अण्डजादीनि चास्तरेत्।
तत्र देवीं समारोप्य न्यसेत्कुम्भञ्च पूर्ववत्।। ४०
पुण्याहं वाचयित्वा तु बद्धा प्रतिसरं ततः।
तत्सूक्तेनैव तच्चितः शाययीत विचक्षणः।। ४१

.... .... ...... .... ।

'सुवर्भुवर्भूरि' ति न्यसेत्सह बीजाक्षरेण वै।। ४२
ध्रुवसूक्तञ्चैव वसोः 'पवित्र' मिति चोच्चरन्।
'यकारं' पादयोर्मध्ये हृदि बीजाक्षरं न्यसेत्।। ४३
वेष्टयेत्प्रणवेनैव ततो बीजाक्षरं न्यसेत्।
'सुवर्भुवर्भूरि' ति न्यसेन्मूर्ध्नि नाभौ च पादयोः।। ४४
कुम्भस्थां शक्तिमादाय कूर्चयुक्तेन वारिणा।
'आयात्वि' ति समुच्चार्य पश्चादावाहनं चरेत्।। ४५
देवानन्यान् पारिषद्यान् क्रमादावाहयेत्ततः।
पुण्याहं वाचयित्वा तु स्तुत्वा स्तुतिभिरात्मवान्।। ४६
अर्चयित्वा यथामार्गं हविर्भिस्सन्निवेदयेत्।
ऋत्विग्भ्यो दक्षिणां दद्याद्यजमानो मुदान्वितः।। ४७
दद्यादन्नं ब्राह्मणेभ्यो वैष्णवाश्च सुपूजयेत्।

## नित्यार्चनम्

अथ नित्यार्चनं देव्याः श्रृणुध्वमृषिसत्तमाः।। ४८
स्नात्वा स्नानविधानेन अर्चकः प्रयतश्शुचिः।
कृत्वा नित्यानि कर्माणि गच्छेद्देव्यालयं प्रति।। ४९
'पावका न' इति ध्यायन् कृत्वा सद्मप्रदक्षिणम्।
'निरस्तं रक्ष' मन्त्रेण समादाय तु यन्त्रिकाम्।। ५०
'दिवं विवृणो' त्वित्युद्धाट्याभ्यन्तरं प्रविशेत्ततः।
त्रिस्सम्प्रहार्य पाणिभ्यां 'सरस्व' तीति समुच्चरन्।। ५१
घण्टानादं पुरस्कृत्य पुष्पन्यासान्तमेव च।
पूर्वोक्तैरेव मन्त्रैस्तु हरेरिव समाचरेत्।। ५२

सूक्तं सारस्वतं प्रोच्य पादे पुष्पाणि सन्न्यसेत्।
निर्माल्यहारिणीं देवीं निर्माल्येन समर्चयेत्।। ५३
'भूः प्रपद्ये' इति वदन् देवीमानम्य चादरात्।
'ऋतं सत्यं' ब्रुवन्मन्त्रं पीठादादाय मन्त्रवित्।। ५४
'सरस्वती' ति मन्त्रेण स्नानपीठे सुसन्न्यसेत्।
ततः सम्बन्धकूर्चन्तु पूर्वमन्त्रेण विन्यसेत्।। ५५

## चतुर्मूर्तयः

'सिद्धिं विश्वां तथा चैव ब्रह्मपत्नीं सरस्वतीम्' ।
इति मूर्तीः समायोज्य नमोऽन्तेन चतुर्दिशम्।। ५६

## पुष्पन्यासः

'सुभगां सुन्दरीञ्चैव सुमुखीञ्च सुरप्रियाम्' ।
आग्नेयादिषु कोणेषु पुष्पन्यासं ध्रुवे चरेत्।। ५७
जयाञ्च विजयां विन्दां पुष्टिकां नन्दकां तथा।
कुमुद्वतीमुत्पलकां विशोकाञ्चाष्ट देवताः।। ५८
आवाहयेद्दिक्ष्वष्टासु द्वितीयावरणे तथा।
कर्मार्चायां शिवं विश्वं मित्रमत्रिमिति क्रमात्।। ५९
पश्चिमादि तथाऽभ्यर्च्य पीठान्ते च बहिर्मुखान्।
सनत्कुमारं सनकं सनातनसनन्दनौ।। ६०
वायव्यादिषु कोणेषु यथाविधि समर्चयेत्।

## पूजका

दक्षिणोत्तरयोरर्च्यौ पूजकौ पार्श्वयोर्द्वयोः।। ६१

## धात्राद्यर्चनम

धात्रादि भूतपर्यन्तं परिवारांत्समर्चयेत्।
सर्वेषां पूजनं प्रोक्तं विग्रहैर्दशभिस्त्रिभिः।। ६२
सम्भृत्य सर्वान् सम्भारान् अर्चनार्थांस्तु पूजकः।
दक्षिणे वामभागे वा स्थित आसीन एव वा।। ६३
देवीं ध्यायेदर्चनादौ योगमार्गेण चिन्तयन्।

## देवीध्यानम

श्वेतपद्मासनासीनां देवीं श्वेताम्बरावृताम्।
सर्वाभरणसंयुक्तां स्वर्णवर्णां चतुर्भुजाम्।। ६४
सुलोचनसमायुक्तां जटामकुटशोभिताम्।
अक्षमालाधरकरां कमण्डलुकरां तथा।। ६५
आलोचितकरां दीप्तां सुभगामभयप्रदाम्।
एवं ध्यायेद्विधानेन सर्वमावाहनं चरेत्।। ६६

## निवेदनम

मुद्गान्नं वाथ शुद्धान्नं प्रभूतं वा निवेदयेत्।
बलिं दद्याद्यथान्यायं दक्षिणाञ्च ददेत्ततः।। ६७
विद्याकामो विशेषेण देवीं वाचं समर्चयेत्।
सर्वान् कामानवाप्नोति इह चैव परत्र च।। ६८

## स्नपनम्

अत ऊर्ध्वं प्रवक्ष्यामि वाग्देव्यास्स्नपनक्रमम्।
उत्तमन्त्वत्र सम्प्रोक्तं कलशानां शताष्टभिः।। ६९

तथाऽष्टचत्वारिंशद्भिः मध्यमं स्नपनं स्मृतम्।
अधमं स्याद्द्वादशभिः कलशैः स्नपनं तथा।। ७०
पूर्वस्मिन् दिवसे रात्रौ कुर्याच्चैवाङ्कुरार्पणम्।
प्रमुखे दक्षिणे चैव प्रपां पूर्ववदाचरेत्।। ७१
दर्भमालासमायुक्तां ध्वजादिभिरलङ्कृताम्।
तन्मध्ये पूर्ववत्कुर्याच्छ्वभ्रञ्चापि विचक्षणः।। ७२
संस्थापयेत्तत्र देवीं श्वभ्रे पीठे समुन्नते।
नीलवारुणयोर्मध्ये पङ्क्तीशञ्च समर्चयेत्।। ७३
इन्द्रादीनर्चयेदष्टौ दिगीशांश्च यथादिशम्।।
ईशानसोमयोर्मध्ये चार्चयेत्तु सुरोत्तमाम्।। ७४
सम्पूज्य च पुनः श्वभ्रे कृत्वाऽगारप्रदक्षिणम्।
श्वभ्रमध्ये पुनः स्थाप्य पाद्याद्यैरभिपूज्य च।। ७५
सम्पूर्य कलशांत्सर्वान् 'पावका न' इति न्यसेत्।
वस्त्रादिभिरलङ्कृत्य अधिदेवांत्समर्चयेत्।। ७६
अधमे स्नपने नास्ति प्राक्पश्चात्करणक्रिया।
स्नपनेषु तु सर्वत्र हारिद्रं चूर्णमिष्यते।। ७७
ततो देवीं समभ्यर्च्य पाद्याद्यर्घ्यान्तमेव च।
स्नपनोक्तेन विधिना स्नापयेत्तामनुस्मरन्।। ७८
ततो 'महो अर्ण' इति उपस्नानैश्च स्नापयेत्।
प्लोतादिभिः परिमृजेत्पूर्वोक्तविधिना ततः।। ७९
वस्त्राद्यैस्समलङ्कृत्य दीपान्तञ्च समर्चयेत्।
वाद्यघोषयुतं नीत्वा कृत्वाऽगारप्रदक्षिणम्।। ८०
यथास्थानं प्रतिष्ठाप्य नित्यपूजां समाचरेत्।
पायसादीन् निवेद्यैव दद्यात् शक्त्या च दक्षिणाम्।। ८१

अपेक्षितमनुक्तं यत्तत्र देव्याश्च स्थापने।
अर्चने चोत्सवे चैव स्नपने सर्वमाचरेत्।। ८२
विष्णोरुक्तविधानेन कारयेन्नात्र संशयः।
त्रयोदश्यां प्रदोषे च देवीपूजा विशिष्यते।। ८३
विघ्नेशपूजां सह वै कुर्याद्देव्येति केचन।

## स्नपनफलश्रुतिः

एवं यः कुरुते भक्त्या वाग्देव्याः स्थापनादिकम्।। ८४
इह देवीप्रसादेन सर्वान् कामानवाप्नुयात्।
अर्चनेन च होमेन ध्यानेन च जपेन च।। ८५
सकृत्कृतेन भक्त्या वै सर्वान् कामान् लभेन्नरः।
किं पुनर्नित्यपूजायाः करणेन फलार्थिनाम्।। ८६
ज्ञानार्थी लभते ज्ञानं धनार्थी धनमाप्नुयात्।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी मोक्षमाप्नुयात्।। ८७
किमत्र बहुनोक्तेन यदिच्छेत्तल्लभेत्फलम्।
तस्माद्वाग्देवता नित्यं ध्येया पूज्या च वै भवेत्।। ८८

## उत्सवः

अतः परं प्रवक्ष्यामि वाग्देव्या उत्सवं परम्।
सप्ताहमुत्तमं प्रोक्तं मध्यमञ्च त्र्यहं भवेत्।। ८९
एकाहमधमञ्चेति देव्यास्त्रिविध उत्सवः।
अयने चोत्तरे कर्तुरिष्टमासे विशेषतः।। ९०
यजमानर्क्षपर्यन्तमथवा कारयेद्बुधः।
हंसचिह्नं पटं कुर्यात्पूजयेच्च विधानतः।। ९१

वाचांदेवीमलङ्कृत्य शिबिकामधिरोह्य च।
ध्वजं पुरस्कृत्य देवीं वाद्यघोषसमन्विताम्।। ९२
छत्रपिञ्छादिसंयुक्तां बलिमादाय चादरात्।
ऐशानीं दिशमभ्येत्य शुद्धदेशे विशेषतः।। ९३
मृत्सङ्ग्रहोक्तविधिना मृदं तत्र समाहरेत्।
ग्रामप्रदक्षिणवशादारभ्यैन्द्रीं दिशं क्रमात्।। ९४
दिगीशांश्च समभ्यर्च्य बलिं दत्वोत्सवं वदेत्।
(सर्गस्थितिविनाशानां कारणं जगदात्मकम्।। ९५
ब्रह्मस्वरूपं निर्द्वन्द्वं सर्वदेवात्मकं परम्।
अर्चयित्वा देवदेवं वाग्देव्या उत्सवं चरेत् )।। ९६

## उत्सवफलश्रुतिः

ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य चैव हि।
आधिव्याधिविनाशाय सर्वसम्पत्समृद्धये।। ९७
आद्यं तेजो विश्वसृजः प्रवेश्य ग्रामवीथिकाः।
नेतव्यं ग्रामरक्षार्थं प्रदक्षिणमतः परम्।। ९८
अलङ्कुर्याद्ग्रामवीथीस्सर्वमङ्गलशोभिताः।
कदलीक्रमुकस्तम्भैः गृहद्वाराणि शोभयेत्।। ९९
दीपाङ्कुरैः पूर्णकुम्भैः तथा सर्वत्र शोभयेत्।
'आयान्तु देवतास्सर्वास्साश्रितास्सपरिच्छदाः।। १००
ऋषिसङ्घास्तथाऽन्ये च बालवृद्धातुरैस्सह।
प्रीतास्सन्तु सदाऽस्माभिरुत्सवे. पूजितास्सुखम्।। १०१
प्रीयतां धिषणा देवी प्रसीदतु जगद्धिता'।
इत्युच्चैर्घोषयेद्भक्त्या सन्धौ सन्धौ क्रमेण वै।। १०२

पश्चाद्देवालयं गत्वा ध्वजमारोपयेत्क्रमात्।
मृदा गृहीतया पूर्वं अङ्कुरारोपणं चरेत्।। १०३
सन्धौ सन्धौ च तद्रात्रौ प्रभूतं दापयेद्बलिम्।
शिबिकायां समारोप्य देवीं वाचमलङ्कृताम्।। १०४
वाद्यघोषसमायुक्तं दीपिकाबलिसंयुतम्।
उत्सवोचितसर्वाङ्गैः शोभनैस्समुपाहृतैः।। १०५
ग्रामं प्रदक्षिणं नीत्वा प्रविशेदालयं शनैः।
तथा तीर्थदिनान्तञ्च सायं प्रातर्दिने दिने।। १०६
द्विकालमुत्सवञ्चैव बलिञ्चैवं समाचरेत्।
सम्प्राप्ते तीर्थदिवसे नेयात्तीर्थं सरस्वतीम्।। १०७
सप्तभिः कलशैर्देवीमुक्तमन्त्रैश्च स्नापयेत्।
तीर्थेऽवगाहयेच्चक्रं कुर्युस्स्नानं समागताः।। १०८
तीर्थोत्सवं समाप्यैवं यथास्थानं समानयेत्।
ततो देवीं शुद्धतोयैस्समन्त्रमभिषेचयेत्।। १०९
उत्सवे त्र्यहक्लृप्ते तु न ध्वजारोहणं चरेत्।
विनाऽङ्कुरं ध्वजारोहमेकाहोत्सवमाचरेत्।। ११०
श्रद्धाभक्तिसमायुक्तस्त्वेवं कुर्वन् हि मानवः।
सर्वविद्याकलापांश्च सम्प्राप्य दिवि मोदते।। १११

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे वाग्देवीकल्पः

----------

## ज्येष्ठाकल्पः-ज्येष्ठास्वरूपम्

अतः परं प्रवक्ष्यामि ज्येष्ठाकल्पं यथाक्रमम्।
प्रकृतिः पुरुषश्चेति द्वावनादी स्मृतौ पुरा।। १
पुरुषः पञ्चधा भिन्नः प्रजाहेतुरतन्द्रितः।
( रूपान्तरेषु प्राप्तेषु पुरुषः पञ्चधा भवेत् )।। २
मूलं नारायणो देवः परमः पुरुषस्स्मृतः।
स वै विष्णुरभूद्विष्णोरजायत चतुर्मुखः।। ३
ब्रह्मणश्च शिवोजातस्तस्मादिन्द्रोऽप्यजायत।
तस्मात् स्कन्दो महान् जातः पुरुषः पञ्चधा ह्यभूत्।। ४
एवं हि पञ्चधा भिन्नो विष्णुः नारायणः पुरा।
प्रकृतिः पञ्चधा भिन्ना ज्येष्ठा मूलं प्रकीर्तिता।। ५
तस्या जाता च भूर्देवी सावित्री च ततः परम्।
उमा ततस्समाख्याता इन्द्राणी च ततः परम्।। ६
इन्द्राण्याः सुरभिश्चैव
प्रकृतिः पञ्चधाह्यभूत्।
पूर्वा ज्येष्ठेति विख्याता
ज्येष्ठाया वच्मि सम्भवम्।। ७

## ज्येष्ठोत्पतिः-लक्षणञ्च

भूर्ज्येष्ठा च भुवर्ज्येष्ठा सुवर्ज्येष्ठेति कीर्त्यते।
सा देवी त्रिस्वरूपेति ब्रह्मणा परमेष्ठिना।। ८
भूलोके ज्येष्ठजन्मत्वात् भूर्ज्येष्ठेति तु विश्रुता।
भुवर्लोके वरिष्ठत्वाद् भुवर्ज्येष्ठेति कथ्यते।। ९

सुवर्लोकि वरिष्ठत्वात्सुवर्ज्येष्ठेत्युदाहृता।
तां देवीमब्धिजातान्तु घोररूपां खगध्वजाम्।। १०
उग्रां खररथाञ्चैव रक्तकौशेयवासिनीम्।
वीक्ष्य सर्वे भयभ्रान्ताः दुद्रुवुः परितस्सुराः।। ११
ततस्सा वीक्ष्य भीतांस्तु रूपमन्यत्समाददे।
तदा तां सौम्यरूपाञ्च सस्यवर्णां सुमध्यमाम्।। १२
पार्श्वावनतसंयुक्तमकुटेन विराजिताम्।
सुरक्तनयनाञ्चापि कृष्णकुञ्चितमूर्धजाम्।। १३
भूषितां भूषणैः दिव्यैर्द्युतिमद्भिर्महागुणैः।
नवबन्धसमायुक्तश्रोणीभासिसुमेखलाम्।। १४
संपश्यमाना देवास्तु पुनराजग्मुरादरात्।
असुराश्चाब्धिमथने क्रोशन्तश्च पलायिताः।। १५
तत्काले मन्दरधरं विना विष्णुं जगत्पतिम्।
सर्वेऽन्ये तेजसा हीनास्तस्थुश्चित्रार्पिता इव।। १६
तदा सा सहसा देवी दिव्यतेजोमयं प्रभुम्।
सर्वदेवोत्तमं विष्णुं वीक्ष्य तत्पार्श्वमभ्यगात्।। १७

## ज्येष्ठाविष्णुसंवादः

समीक्षमाणा देवेशं पद्मनाभमुवाच सा।
'त्वमादिदेवो देवेश ! ब्रह्मणस्त्वं पिता ह्यसि।। १८
मम त्वं देही पृच्छन्त्या वरं वरद वास्तवम् ।

## विष्णोर्वरप्रकारपृच्छा

इत्युक्तो भगवान् विष्णुर्वरदानरतोऽच्युतः।। १९

तां स्मन्निव पप्रच्छ 'कं ते दद्यामहं वरम्' ।

## ज्येष्ठादत्तोत्तरम्

वरदेनैवमुक्ता सा प्रत्यभाषत वै प्रभुम्।। २०
उत्पत्योत्पत्य सा ज्येष्ठा सर्वदैवतमध्यगा।
नमस्कृत्य ततो प्रणयावनता तदा।। २१

## वरप्रार्थना

'नमस्करोमि देवेश भूयः कृत्वा प्रदक्षिणम्।
अनुगृह्णीष्व मां देव वरं देहि ममानघ !।। २२
सत्यमूर्तिः स्वयं त्वं वै सर्वादिस्सर्वतोमुखः।
सहस्रशीर्षा देवेशः सहस्राक्ष इति श्रुतिः।। २३
सर्वेषाञ्च वरिष्ठस्त्वं सर्वदा सर्वथाऽच्युत।
त्वं देहि मे वरं दिव्यं भूयश्चैव वरो भव'।। २४

## वरदानम्

इत्युक्तो भगवान् प्रीतः परमानन्दमास्थितः।
वरिष्ठामाह 'देवानां ज्योतींषि म्लापयन्त्यसि।। २५
यदि नेच्छसि लोकेऽस्मिन् देवानप्यसुरानपि।
सुखं वस त्वं लोकेऽत्र नित्यसौख्यवरप्रदा।। २६
मनुजान् राक्षसानन्यान् दनुजान् भूतचारणान्।
नाशयिष्यसि चैवेष्टान् सुखं संवासयिष्यसि।। २७
एवं दत्तो वरो मुख्यस्ते मया चारुलोचने' ।
एवमुक्ता भगवता ज्येष्ठा पुनरचोदयत्।। २८

## वरनिर्वाहप्रकारप्रार्थना

'भर्तारं कमहं देव वृणुयां ब्रूहि ते मतम्' ।
इत्युक्तो भगवान् देवः कलिमाहूय चात्वरः।। २९
'एनं वृणीष्व भद्रं ते सुखयिष्यति त्वामसौ'।
इति श्रुत्वा तदा देवी तथा चेदद्यदीयताम्।। ३०
तवाधिकारं राज्येऽस्मिन् देहि भर्तुश्च मे मम।
'ततः प्राह पुनर्देवः सम्भाव्यात्मानमात्मना।। ३१
'तथाऽस्त्वि' ति वरं दत्वा कले राज्यमदाद्धरिः।
अभिषिच्य कलिं यौवराज्ये प्रोवाच वै हरिः।। ३२
सर्वान् देवान् समाहूय सान्त्वयन् श्लक्ष्णया गिरा।
'यूयमद्यारभ्य देवास्स्याला भवत वै कलेः'।। ३३
इति सम्भाविता देवा ज्येष्ठादेव्यनुजाः कृताः।
वरुणालयमेवास्याः पितरं पर्यकल्पयत्।। ३४
तदा प्रभृति सा ज्येष्ठा सर्वलोकेषु पूज्यते।
पूजानीयाऽभवत्पूज्यैस्सर्वै रेव सुखार्थिभिः।। ३५
दारिद्यभीरुभिश्चैव पूजनीया शुचिव्रतैः।
अर्हणीया वरारोहा शुभदा सर्वकामदा।। ३६

## लक्ष्मीप्रादुर्भावः

ज्येष्ठावतरणे जाते अब्धावप्सरसां गणैः।
सहिता चानुजाता सा देवी कमललोचना।। ३७
इन्दिरा श्रीवत्सरूपा सुप्रमोदेति कीर्तिता।
सुरा तामनुजाता च तां देवी जगृहुस्तदा।। ३८

आहूय वरुणो देवं कौस्तुभेन सहैव ताम्।
देवीं प्रादाद्विष्णवे तु ब्रह्मेशानपुरस्कृतः।। ३९
देवतास्सङ्गतास्तत्र मेनिरे परमं हरिम्।
सर्वलोकहितार्थं ते प्रार्थयामासुरीश्वरम्।। ४०
'एषा न प्रम्लायमाना त्रीन् लोकान् स्वश्रिया सह।
लोकक्षेमंकरी भूत्वा चिरं कालं समेधताम्।। ४१
तथैनां शाधि देवे' ति विरेमुस्ते मुदऽन्विताः।

## ज्येष्ठां प्रति विष्णुवचनम्।

एवं सम्प्रार्थितो विष्णुः ज्येष्ठामाहूय चावदत्।। ४२
'अनवद्याय लोकानां देवि त्वमनघा वस' ।

## ज्येष्ठादत्तमुत्तरम्

इत्युक्तवति देवेशे ज्येष्ठा विष्णुमुवाच ह।। ४३
ममानुजायाश्च नराः येऽपकुर्वन्ति दारुणम्।
नाशयिष्यामि तानेव ममैषा स्याद्वशे स्थिता।। ४४
यस्य कृप्याम्यहं देव न कदाऽप्यत्र सा वसेत्।
यस्य तुष्याम्यहं सैषा तत्र तिष्टेत्प्रतिष्ठिता' ।। ४५
इत्युक्ता तु वरारोहा लक्ष्मीं सन्दीप्ततेजसम्।
अङ्कमारोप्य चालिङ्ग्य ददौ तां विष्णवे मुदा।। ४६

## ज्येष्ठानामनिर्वचनम्

तदा प्रभृति सा देवी देवज्येष्ठेति कीर्तिता।
भूर्ज्येष्ठेत्युदिता ह्यादौ भुवर्ज्येष्ठेति वै ततः। ४७

सुवर्ज्येष्ठेति स्वर्लोकान्नित्यं सम्पूज्यते ततः।
कलेः राज्ञो प्रदानाच्च कलिराज्ञीति संस्मृता।। ४८
कलेः पत्नी तथा भूता कलिपत्नीति च स्मृता।

## ज्येष्ठायास्सन्ततिः-वृषभाङ्कसुकन्ये

सुमेध्यं यज्ञमकरोत्कलिरेष तु दीक्षितः।। ४९
तस्मिन् यज्ञवरे जातः पुत्रमुख्यो महाबलः।
वृषभाङ्क इति ख्यातो बलवान् वृषभाननः।। ५०
तस्यानुजा च सञ्जाता सुकन्येति च नामतः।
जगतामतिपुण्या च सर्वशोभनतां गता।। ५१
आभ्यां सुताभ्यां द्वाभ्यां वै देवीं ज्येष्ठां सदा शुभाम्।
मन्त्रैर्यथोक्तैस्संस्थाप्य यथोक्तविधिनाऽर्चयेत्।। ५२

## आलयनिर्माणम्

'उद्यानवनमध्ये वा तटाकतट एव वा।
कुल्यातीरे तदीतीरे केदारान्तर एव वा।। ५३
ग्रामस्य नैऋते भागे यत्र चापि मनोहरे।
स्थाने तत्राऽलयं कुर्यात् वास्तुशास्त्रोक्तमार्गतः।। ५४
भूमिं परीक्ष्य विधिना भूशुद्धिं प्रथमं चरेत्।
कपित्थं वा मधूकं वा लाङ्गलार्थं तरुं हरेत्।। ५५
वायुरेणुसवर्णौ (?) तु गृह्णीयाद्वृषभौ तथा।
एकवर्णौ तथा सौम्यौ अनस्यूतावनिन्दितौ।। ५६
पूर्वोक्तेन विधानेन ताभ्यां वै कर्षणं चरेत्।
तत्र चोप्य यवादीनि बीजान्युक्तानि पूर्ववत्।। ५७

प्रवृद्धेषु च सस्येषु अर्धपक्वेषु तानि तु।
गोगणेभ्यो निवेद्यैव ततो भूम्यै निवेदयेत्।। ५८
वास्तुदेवानर्चयेच्च यथा पूर्वं समीरितम्।
तत्र कुम्भं प्रतिष्ठाप्य भूमियज्ञं यजेत्क्रमात्।। ५९
ततः पूर्वोक्तमार्गेण ज्येष्ठामूर्तिं प्रकल्पयेत्।
तथैव धृष्णुकायास्तु निवासं परिकल्प्य च।। ६०
ब्रह्मपद्मविधानेन खनित्वा कार्यमारभेत्।

## ब्रह्मपद्मादि

आदित्योदयकाले तु ब्रह्मपद्मं चरेत्तथा।। ६१
पद्माभावे तथा ग्राह्यं कुमुदं नीलमुत्पलम्।
सुस्पष्टं फुल्लमाहृत्य प्रक्षिपेत्प्राङ्मुखः क्रमात्।। ६२
सिद्ध्यसिद्ध्यौ समीक्षेत शुभञ्चाशुभमेव च।
परीक्ष्य सिद्धौ कुर्वीत नारभेतान्यथा क्रियाम्।। ६३
काले पुनरतीतेऽब्दत्रये सिद्धौ यतेत च।
दुर्निमित्तेषु तत्रापि कार्यारम्भं न कारयेत्।। ६४
कुम्भाकारे त्रिकूटे वा स्वस्तिके हस्तिपृष्ठके।
विमाने स्थापयेद्देवीं ज्येष्ठां तत्र च पूजयेत्।। ६५
बालागारे प्रतिष्ठाप्य पूर्वं शक्तस्समर्चयेत्।
समृद्धिकायास्स्थानन्तु देव्यग्रे परिकल्पयेत्।। ६६
समृद्धिका तु सा देवी देवमानुषपालिनी।
पालयन्ती तु सा ज्येष्ठां समर्था प्रभविष्यति।। ६७
सुदृढं कारयित्वा तु मूलस्थानं प्रमीय च।
द्वितलं वैकभूमिं वा सर्वालङ्कारसंयुतम्।। ६८

निर्मितं बिम्बमादाय शिलया माषवर्णया।

## ज्येष्ठाबिम्बलक्षणम

आकाशसस्यवर्णाञ्च रक्तवर्णाम्बरां तथा।। ६९
उरस्स्थललसद्धारां ग्रैवैयादिविभूषिताम्।
शिरोवर्तनसंयुक्तां शिरोमाल्यैरलङ्कृताम्।। ७०
ईषत्कृष्णान्तनयनां शुद्धकृष्णान्ततारकाम्।
निधियुक्तं वाऽभयदं दक्षिणं हस्तमाचरेत्।। ७१
वाममुत्पलसंयुक्तं द्विभुजामेवमाचरेत्।
दैविके मानुषे वाथ स्थाने स्थापनमाचरेत्।। ७२

## प्रतिष्ठाप्रयोगः

प्रतिष्ठोक्तविधानेन भूमियज्ञादि कारयेत्।
धातून् रत्नानि बीजादीन् कूर्मं श्रीवत्समेव च।। ७३
स्वस्तिकं वर्णचिह्नानि निक्षिपेच्च यथाविधि।
सहस्राहुतिपूर्वन्तु हुत्वा होमांश्च पूर्ववत्।। ७४
मुहुर्ते समनुप्राप्ते स्थापयेद्विष्णुभामिनीम् (?) ।
गन्धोदकैस्तथा शुद्धैः पद्मकिञ्जल्कवासितैः।। ७५
उशीरागरुसंयुक्तैः गव्यैश्चैवोष्णवारिभिः।
पञ्चभिः कलशैश्चापि स्नापयित्वा समर्चयेत्।। ७६

## ज्येष्ठाया अर्चनम्

अत उर्ध्वं प्रवक्ष्यामि ज्येष्ठाया अर्चनक्रमम्।
यथोक्तविधिना स्नात्वा सावित्रीं समनुस्मरन्।। ७७

आलयं सम्प्रविश्याथ कवाटोद्घाटनं चरेत्।
'यैषाऽमराणां' गुरबे 'याम्या' नीति समीरयन्।। ७८
उपचारानथान्यांश्च यथाशक्ति ददेत्ततः।
नमस्कृत्य ततो देवीं पूजाद्रव्याणि सम्भरेत्।। ७९
पुनः पुनश्च तावेव मन्त्रावावर्त्य कारयेत्।
पञ्चभिर्मूर्तिमन्त्रैश्चर्योजितैरर्चनं चरेत्।। ८०

## हविर्विशेषदानम्

लाजैस्सतिलचूर्णैश्च युक्तं पुष्कलमोदनम्।
आम्लपुष्पफलैर्युक्तं शाकमूलफलैर्युतम्।। ८१
निष्पावयवसम्पृक्तं तिलसक्तुसमन्वितम्।
आज्यसम्प्लावितान्नं वा शुद्धं वाऽन्नं निवेदयेत्।। ८२
शुद्धान्नं पुष्कलान्नञ्च आम्लमन्नञ्च शस्यते।
मधुरान्नप्रिया देवी नित्यमाम्लरसप्रिया।। ८३
दीपप्रिया सदाऽऽमोदा नित्यं धूपप्रिया तथा।
कृष्णपुष्पप्रिया कृष्णविकासिकुमुदप्रिया।। ८४
सुपवित्रप्रिया देवी यतस्सा भोगवर्जिता।

## आश्रितदेवाः

मदो मोह इति द्वौ तु देवीं तामभिसंश्रितौ।। ८५
प्रकृतेः पररूपत्वात्सर्वज्येष्ठा हि सा स्मृता।
कलिं भजति सा देवी शापाज्जन्मनि जन्मनि।। ८६
मुख्या चापि वरारोहा पूजार्हा सर्वशोभना।
लोकेषु विचरन्ती सा इष्टरूपा भविष्यति।। ८७

पूजकानाञ्च सर्वेषां सर्वमिष्टं प्रयच्छति।
सर्वत्रैव च क्रीडन्तीं पुण्यां देवीं समर्चयेत्।। ८८

## परिवारचतुर्नामानि

'ऋषभाङ्क कुमारञ्च सर्वविघ्नापहं तथा।
विघ्ननाश' मिति प्रोच्य पुत्रं मूर्तिभिरर्चयेत्।। ८९
'सुकन्यां मेदिनीञ्चेति सदानन्दां जगद्धिताम्'।
इत्येवं मूर्तिमन्त्रैस्तु सुकन्याञ्च समर्चयेत्।। ९०

## परिवारान्तराणि

खलतिञ्चैवामृतजां द्वारे द्वारे समर्चयेत्।
द्राविलामर्चयेच्चैव देव्या निर्माल्यहारिणीम्।। ९१
अर्चयेत्सप्त च खरान् वाहनस्थानमास्थितान्।
खनञ्च निगलञ्चैव व्यावृत्तं प्रहृतं तथा।। ९२
समावृत्तञ्च कुण्डौघं निकारञ्चार्चयेत्खरान्।
'काकुकाके' ति काकञ्च ध्वजस्थाने समर्चयेत्।। ९३
सम्मार्जनरताञ्चैव भूतपीठे समर्चयेत्।
प्राच्यामिन्द्रस्य देवीञ्च स्वधामाग्नेयकोणके।। ९४
याम्यां समर्चयेच्चैव सुवर्णां यमभामिनीम्।
नैर्ऋत्यामर्चयेच्चैव कालरात्रीं निशीथगाम्।। ९५
वारुण्यां रजनीमर्च्य तमिस्रां वायुसंश्रिताम्।
यक्षिणीप्रवरां यक्षीं कौबेर्यामर्चयेद्दिशि।। ९६
मन्त्रदेवीञ्च वाग्देवीमैशान्यां पूजयेत्क्रमात्।
एता अष्टौ समाख्याता ज्येष्ठायाः परिचारिकाः।। ९७

सर्वत्राग्रे समभ्यर्च्य सावित्रीं सर्वशान्तिदाम्।
एतास्समर्चयेद्भक्तया सुशान्तिं समनुस्मरन्।। ९८
यत्रेच्छेत् क्षिप्रशान्तिं वै सर्वलोकसमृद्धिदाम्।
तत्राभ्यर्चेच्छुभां देवीं सावित्रीं वेदमातरम्।। ९९
शान्तिं पुष्टिं काङ्क्षमाणः सावित्रीं वै जपेन्मनुम्।
ज्येष्ठां वाऽप्यर्चयेद्देवीं सकलेष्टवरप्रदाम्।। १००
येषामिच्छति सा देवी प्रसादं कर्तुमक्षयम्।
ददाति तेषां प्रसन्ना श्रियमत्यन्तदुर्लभाम्।। १०१
विविधानि च दुःखानि नाशयत्याशु नास्ति भीः।
एतादृशी वरिष्ठायाः ज्येष्ठायाः शक्तिरीतिता।। १०२
इष्टान् कामानवाप्यैव लोकेऽस्मिन्नुत्तरे जनौ।
देवीप्रसादाद्धर्मात्मा राजराजो भविष्यति।। १०३
इति सङ्क्षेपतः प्रोक्तं ज्येष्ठाया अर्चनक्रमम्।

## ज्येष्ठायाः स्नपनम्

अत उर्ध्वं प्रवक्ष्यामि ज्येष्ठायाः स्नपने विधिम्।। १०४
पञ्चगव्यं घृतञ्चैव क्षीरं पुष्पोदकं तथा।
सर्वौषध्युदकञ्चैव कपित्थफलवारि च।। १०५
सर्वगन्धोदकञ्चैव सोपस्नानानि वै पृथक्।
आहृत्य कलशेष्वेतान् स्नपनोक्तवदास्तरेत्।। १०६
'यैषाऽमराणा' मित्युक्त्वा पञ्चगव्येन सेचयेत्।
'गौर्धेनुभ' व्येत्याज्येन स्नापयेत्तदनन्तरम्।। १०७
'शन्नो देवी' रिति वदन् क्षीरेण स्नापयेत्ततः।
'इमास्सुमनस' इत्युक्त्वा पुष्पोदेन च स्नापयेत्।। १०७

'इमा ओषधय' इति सर्वौषध्युदकेन वै।
स्नापयेत्तत 'आप्याय' स्वेति सिञ्चेत् फलोदकैः।।१०९
'अप्सरस्वि' ति मन्त्रेण गन्धोदैरभिषेचयेत्।
स्नापयेदुष्णतोयेन ततः शुद्धोदकेन च।। ११०
विमृज्य प्लोतवस्त्रेण वासोभिः परिधाय च।
भूषणैस्समलङ्कुर्या 'दुच्चैर्वादि' समुच्चरन्।। १११
अर्घ्यान्तमर्चयित्वा तु हविर्भिः सन्निवेदयेत्।
हविः प्रक्षिप्य पात्रेषु गायत्रीमन्त्रमुच्चरन्।। ११२
देव्यै निवेदयेन्मन्त्रं 'सुभूस्स्वय' मिति ब्रुवन्।
एलालवङ्गादियुतं मुखवासं निवेदयेत्।। ११३
एतत्तु स्नपनं देव्याः सर्वशान्तिकरं भवेत्।
पूर्वोक्तेनैव विधिना बलिञ्चैव समाचरेत्।। ११४

## ज्येष्ठायाः उत्सवः

अथोत्सवक्रमं वक्ष्ये ज्येष्ठायाश्शान्तिकारणम्।
यदा हि सम्भवेद्दोषो हेतुना येन केन वा।। ११५
दुष्टैर्ग्रहैः तथाऽन्यैर्वा विविधैः पापयोनिभिः।
तद्दोषशमनाकाङ्क्षी ज्येष्ठाया उत्सवं चरेत्।। ११६
कृष्णपक्षे चतुर्दश्यां तीर्थकालं प्रकल्पयेत्।
निष्पावराजमाषादिधान्यसक्तु समाहरेत्।। ११७
पचेत्तेन पुलाकान्नं बहुलं तदुपाहरेत्।
तदन्नं विविधैर्धूपैः धूपयित्वा विशेषतः।। ११८
रथ्यासु राजमार्गेषु तथा सन्धिषु सन्धिषु।
खरेभ्यः कुक्कुटेभ्यश्च समुत्कीर्य बलिं क्षिपेत्।। ११९

पिण्डीकृत्य ददेद्वाऽपि तत्र तत्र बहूदकम्।
क्षिपेत्पानाय पात्रेषु तथा पानीयदायिभिः।। १२०
वीथीषु स्त्रावयेयुश्च भूततृप्त्यै समाहिताः।
दध्योदनञ्चापि दद्यात् एवं देवालये तथा।। १२१
आलयं परितश्चान्नमङ्कणे च विशेषतः।
ततः प्रभाते धर्मात्मा शोधयेन्मन्दिरं शनैः।। १२२
द्वारतोरणसंयुक्तं पूर्णकुम्भसमन्वितम्।
ध्वजमेकं समुद्धृत्य उच्छ्रिते च वनस्पतौ।। १२३
तोरणध्वजसंयुक्तमालयं ध्वजसंयुतम्।
अलङ्कुर्याद्यथाशक्ति सर्वालङ्कारशोभितम्।। १२४
पूर्वोक्तेन प्रकारेण सायमुत्सवमाचरेत्।
तथा कुर्याच्च तीर्थान्तं प्रतिवासरमुत्सवम्।। १२५
औत्सवान्तन्तु सर्वेषामन्नदानञ्च कारयेत्।
शक्त एवान्नदाने तु ज्येष्ठादेव्युत्सवं चरेत्।। १२६
न दरिद्रो न वा लोभी नावदान्यो महोत्सवम्।
ज्येष्ठादेव्याः प्रकुर्वीत कुर्याच्चेत्स विनश्यति।। १२७
अशक्तः कर्तुकामश्चेदेकाहोत्सव इष्यते।
सर्वं पूर्वोक्तवत्कुर्याद्दद्यादन्नञ्च शक्तितः।। १२८
उत्सवान्ते अलङ्कृत्य पुष्पमालाभिरेव तु।
अलङ्कुर्यात् गन्धधूपदीपांश्च परिदर्शयेत्।। १२९
शय्यागारमलङ्कृत्य शाययेच्छयने शुभे।
वीणावेणुमृदङ्गाद्यैर्वाद्यैर्नानाविधैस्तथा।। १३०
नयेद्रात्रिं नृत्तगीतैस्स्तोत्रैश्च सुखसङ्गताम्।
ततो गतायां रात्र्यान्तु शनैः देवीं प्रबोधयेत्।। २३१

प्रभातबोधनैर्वाद्यैरुपचारैस्तथोचितैः।
देवीं निवेश्याऽन्दोलिकायां नीत्वा ग्रामप्रदक्षिणम्।।१३२
चूर्णोत्सवविधानेन कृत्वा चूर्णोत्सवं ततः।
तीर्थस्थानं ततो गत्वा शान्तिसूक्तानि वै पठन्।। १३३
तीर्थे निमज्जयेद्देवीं यथास्थानं प्रवेशयेत्।
सप्तभिः कलशैर्देवीं पूर्ववत्स्नापयेत्ततः।। १३४
महाहविः प्रभूतं वा निवेद्य च समापयेत्।
दुर्भिक्षे सङ्कटे चैव शान्तिपुष्ट्यादिसिद्धये।। १३५
एवं सङ्क्षेपतः प्रोक्तो ज्येष्ठादेव्या महोत्सवः।

## ज्येष्ठाव्रतम्

अथ वक्ष्ये विशेषेण ज्येष्ठाव्रतमनुत्तमम्।। १३६
न्यूनातिरेकशान्त्यर्थं सर्वकर्मसु कारयेत्।
ज्येष्ठमासं समारभ्य कुर्यादेतद्व्रतं बुधः।। १३७
ज्येष्ठमासे यदा ज्येष्ठानक्षत्रं याति चन्द्रमाः।
तस्मिन्नह्नि वै कार्यं व्रतमेतत्सुखार्थिभिः।। १३८
पूर्वेद्युरेव पूर्वाह्णे शुक्लदन्तश्शुचिर्नरः।
शुक्लवस्त्रपरीधानः शुक्लमाल्यानुलेपनः।। १३६
बद्धा तु माल्लकां (?) कक्षे घृतं प्राश्य तथा शुचि।
ज्येष्ठां देवीञ्च सम्प्रार्थ्य ब्रह्मचारी व्रती भवेत्।। १४०
परेद्युरुषसि स्नात्वा देवीं ज्येष्ठां प्रणम्य च।
सम्पूज्य विधिना देवीं यथाविभवविस्तरम्।। १४१
ऋत्विजो वरयित्वा च यथार्हं तान् प्रपूजयेत्।
स्वयञ्चैव निराहार उपवासव्रतं चरेत्। १४२

उपोषितोऽर्चयेद्देवीं मूर्तिमन्त्रैश्च सादरम्।
निष्पावपुलकान्नादीन् मुद्गान्नं पुष्कलन्तु वा।। १४३
निवेद्य दद्यात्ताम्बूलं पुण्याहमपि वाचयेत्।
ऋत्विजो ब्राह्मणानन्यान् स्त्रियश्चापि सुमङ्गलीः।। १४४
सम्पूजयेद्यथाशक्ति मिष्टमन्नञ्च दापयेत्।
तिलपूर्णे लोहपात्रे सौवर्णीः प्रतिमा न्यसेत्।। १४५
तासु देवीञ्च पुत्रौ च रुक्मिणीमाह्वयेत्स्मरन्।
पूजयित्वा यथाशास्त्रं श्रद्धया परया व्रती।। १४६
पूजान्ते प्रतिमां दद्यात् सुवासिन्यै यतेन्द्रियः।
ततोऽनुमान्य तां देवीं विधिना पारणं चरेत्।। १४७
कृत्वैवं प्रतिमासन्तु वैशाखे पारयेद्व्रतम्।
देवीं पूर्ववदभ्यर्च्य ज्येष्ठायामह्नि चात्वरः।। १४८
प्रभूतञ्च निवेद्यैव फलापूपसमन्वितम्।
ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत्।।१४९
अनाथान् कृपणानन्यान् व्रतिनस्स्त्रिय एव च।
अन्नाद्यैस्तर्पयेत्सर्वान् उत्सवार्थं समागतान्।। १५०
सौवर्णे राजते पात्रे तथा कांस्यमयेऽपि वा।
शालितण्डलसम्पूर्णे तिलानुपरि निक्षिपेत्।। १५१
तत्र देवीं समभ्यर्च्य सर्वालङ्कारसंयुताम्।
द्वादशाहीनसङ्ख्याभिः स्त्रीभिश्च पुरुषैरपि।। १५२
परीतां वाद्यघोषैश्च परिवारैस्समावृताम्।
धृत्वा वै शिरसा देवीं नीत्वा ग्रामं प्रदक्षिणम्।। १५३
नदीं गत्वा निमज्यात्र प्राणस्थानं प्रवेश्य च।
पुनस्संस्नाप्य विधिना रात्रिपूजां समाचरेत्।। १५४

स्तोत्रैः पुण्यैश्च गाथाभिः नृत्तगीतादिभिस्तथा।
नेयाद्रात्रिं प्रभाते वै यथापूर्वं समर्चयेत्।। १५५
व्रतमुद्दिश्य यद्द्रव्यं मासि मासि निधीयते।
तत्सर्वमन्ते चाहत्य पूजकेभ्यः प्रदापयेत्।। १५६
सहिरण्यार्चनापात्रं वस्त्रयुग्मञ्च सादरम्।
सुमङ्गल्यै स्त्रियै दद्याच्छ्रद्धाभक्तिसमन्वितः।। १५७
यद्यद्ददाति यो भक्त्या धनं धान्यं तथेतरत्।
नरः पारणकाले तु तत्तच्चामितमाप्स्यति।। १५८
पुत्रार्थी लभते पुत्रान् धनार्थी धनमाप्नुयात्।
जयार्थी जयमाप्नोति ज्ञानार्थी ज्ञानवान् भवेत्।। १५९

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे ज्येष्ठाकल्पः

-------------

## दुर्गाकल्पः-दुर्गामहिमा

अतः परं प्रवक्ष्यामि दुर्गाकल्पं यथाक्रमम्।
साक्षाद्या वैष्णवी माया योगनिद्रेति कीर्तिता।। १
सूक्ष्मा शक्तिः प्रकृतिस्सा परमा समुदाहृता।
जगतो रक्षणायैषा पृथक् क्लृप्ता त्रयीमयी।। २
सैव दुर्गा समाख्याता ब्रह्माद्यैर्दुर्गमा च सा।
यथा नारायणस्सर्वान् सदेवासुरमानवान्।। ३
लोकान्नित्यं पालयति भगवान् निर्वहन् स्थितिम्।
तथा तच्छक्तिरीशाना तदिच्छाक्लृप्तविग्रहा।। ४
एषा दुर्गाऽप्यात्मशक्त्या कल्पे कल्पेऽवतीर्य वै।
महिषासुरसंहारं काङ्क्षमाणै स्तथाऽकरोत्।। ५

जगन्त्यवति ब्रह्माद्यैरर्चिता कृपया पुरा।

## पूजामहिमा

ऐहिकामुष्मिकं सर्वमिच्छन् देवीं प्रपूजयेत्।
ब्रह्मवृद्धिमभीत्सुभिः ब्राह्मणैः क्षत्रियैस्तथा।। ६
काङ्क्षमाणैः शत्रुजयमर्चनीया नृपाङ्गणे।
यतः सा वैष्णवी शक्तिः तामुद्दिश्य कृतार्चनम्।। ७
भवेत्सिद्धिदमित्यत्र नैव कार्या विचारणा।
ग्रामे वा नगरे वापि पत्तने कुटिकेऽपि वा।। ८
पर्वताग्रे नदीतीरे कान्तारे वा सरित्तटे।
कारयेदालयं तत्र कर्षणादीनि चादरात्।। ९
हरेरुक्तविधानेन कारयेद्भक्तिमान्नरः
राज्ञां गृहार्चनाय स्याद्वेश्माभिमुखमालयः।। १०
धनाधिपदिशः पूर्वे तथा द्वारस्य दक्षिणे।

## आचार्यवरणम्

निर्मित्सुरालयं देव्या यजमानो मुदाऽन्वितः।। ११
आचार्यं वरयेत्पूर्वं मन्त्रकल्पविचक्षणम्।
श्रीवैखानससूत्रेण निषेकादिक्रियाऽन्वितम्।। १२
सकलात्मगुणोपेतं शान्तं दान्तं जितेन्द्रियम्।
तदाज्ञामनुसृत्यैव सर्वकार्याणि चाचरेत्।। १३

## बालागारादि

आलयं कर्तुकामस्तु बालागारं प्रकल्पयेत्।
भूमियज्ञञ्च कृत्वा तु दुर्गासुक्तेन होमयेत्।। १४

शताधिकं समावर्त्य पञ्चाग्नौ दोषशान्तये।
शुभे मुहूर्ते दुर्गां तां तथा निर्माल्यहारिणीम्।। १५
बालागारप्रतिष्ठोक्तविधिना स्थापयेद्गुरुः।

## बिम्बमानम्

नवार्धतालमानेन देवीं कुर्याच्चतुर्भुजाम्।। १६
दधतीमूर्ध्वहस्ताभ्यां शङ्खचक्रे समुज्ज्वले।
अन्याभ्यां दधतीं देवीमञ्जलिं हृदये पुनः।। १७
केयुरहारमकुटदिव्याभरणभूषिताम्।
पीताम्बरधरां देवीं कक्ष्याबद्धपयोधराम्।। १८
ताम्रेण दारुणा वाथ देवीं रम्यां प्रकल्पयेत्।

## परिवारः

नवतालेन च जयां शैषिकीं परिकल्पयेत्।। १९
कुर्याच्चतुर्भुजां देवीं विजयार्थी विशेषतः।
कुर्याद्दौवारिकं भूतं मृगेन्द्रञ्चैव वाहनम्।। २०
द्वारं पालयतो देव्यौ गङ्गा च यमुना तथा।
एभिः परिवृतां देवीं बालागारे समर्चयेत्।। २१
एवं विधाय विधिना विमानं कारयेद्बुधः।
विमानं कारयित्वा तु शूलस्थापनमाचरेत्।। २२

## बिम्बलक्षणम्

चतुर्भुजां तडिद्वर्णां मकुटेन स्वलङ्कृताम्।
शङ्खचक्रधरां देवीं बद्धाञ्जलिपुटां तथा।। २३
सस्यश्यामनिभां कुर्यात्कक्ष्याबद्धपयोधराम्।
सौम्यरूपमिदं प्रोक्तं सर्वसम्पत्समृद्धिदम्।। २४

अथवाऽष्टभुजां कुर्यादिच्छन् शत्रुविनाशनम्।
शक्तिशार्ङ्गासिचक्राणि शरलाङ्गलमुद्गराः।। २५
खेटकञ्चायुधानि स्युः रूपं घोरतमं भवेत्।
महिषासुरमूर्धस्थसव्यापादाम्बुजां तथा।। २६
तथा कुञ्चितवामाङ्घ्रिं वीर्यार्थी कारयेत्सदा।
देव्या बेरं ध्रुवाख्यं स्यादेवं लक्षणसंयुतम्।। २७
अथ वा सुखमासीनां कुर्यात्सिंहासने शुभे।
सौम्यरूपां क्रियाद्देवीं सस्यश्यामां चतुर्भुजाम्।। २८
सर्वप्राणिहिता ह्येषा प्रतिमा पुष्टिदायिनी।

## स्थापनदेशः

दुर्गायाः स्थापनं ग्रामे नगरे च विशेषतः।। २९
सर्वकामसमृद्धिञ्च सर्वशान्तिञ्च यच्छति।
स्थापयेद्ब्रह्मणः स्थाने पृथक् देवीं चतुर्भुजाम्।। ३०
केवलं शिलया कुर्यान्मोक्षार्थी प्रतिमां तथा।
उक्तेष्वेकेन मार्गेण देवीं पारिषदैर्युताम्।। ३१
शिल्पशास्त्रोक्तविधिना कारयेच्छिल्पिना बुधः।

## परिवारकल्पनम्

कुर्याच्चारमरधारिण्यौ पार्श्वयोरुभयोरपि।। ३२
भित्तेरूर्ध्वमुभे कुर्याद्विन्दां पुष्टिं क्रमेण वै।
यक्षा विद्याधरा देव्यै दद्युस्ते परिचारिके।। ३३
दक्षिणे भित्तिपार्श्वे तु पद्मां पद्मकरां तथा।
उमां तथा वामकरे पुष्पमालाधरां चरेत्।। ३४

ऋषिराङ्गिरसश्चैव मृकण्डुश्च तथाऽपरः।
पूजकौ पुष्पहस्तौ तौ मुनिमुख्यौ प्रकीर्तितौ।। ३५
अन्तर्द्वारे तथा कुर्याद्वामदक्षिणपार्श्वयोः।
नन्दगोपं यशोदाञ्च प्रसन्ननयनावुभौ।। ३६
चित्राभासौ च कर्तव्यावष्टतालेन तावुभौ।
एकस्मिन् जन्मनि च तौ देव्यास्तु पितरौ स्मृतौ।। ३७
गङ्गा च यमुना चैव प्रथमद्वारपालिके।
अदितिञ्चदितिञ्चैव द्वितीयद्वारि कारयेत्।। ३८
मृगेन्द्रं वाहनस्थाने कल्पयेच्च विचक्षणः।
न्यक्षादीन् लोकपालांश्च स्वे स्वे स्थाने प्रकल्पयेत्।। ३९
शैषिकीञ्च जगत्सेनां स्वस्थाने परिकल्पयेत्।
उक्तांस्तु परिवारांस्तान् युक्तवर्णायुधादिभिः।। ४०
क्रमेण कारयेच्चैव विधिना विधिकोविदः।
शिलया ध्रुवबेरञ्चेत्कल्पितं शिलयैव हि।। ४१
परिवारांश्च कृत्वा तु चित्रकर्म समाप्य च।
सङ्कल्प्य स्थापनञ्चैव सर्वकर्माणि चाचरेत्। ४२
कर्ता कल्पज्ञमासाद्य तमाचार्यं प्रकल्पयेत्।

## प्रतिष्ठाक्रमः

प्रतिष्ठादिवसात्पूर्वं नवमे वाथ सप्तमे।। ४३
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।
सम्भ्रियेत च द्रव्याणि यथोक्तगुणवन्ति वै।। ४४
स्थापकान् ऋत्विजोऽन्यांश्च वरयेद्विधिपूर्वकम्।
कौतुकं कारयेद्बेरं ध्रुवबेरानुरूपतः।। ४५

कृत्वा तु पीठसङ्घातमक्षिमोचनमाचरेत्।
अङ्गहोमादिकं कृत्वा दुर्गासूक्तं शताधिकम्।। ४६
पाञ्चभौतिकमन्त्रांश्च जुहुयाद्वैष्णवं तथा।
हुनेद्विमानाङ्गहोमं हरेरुक्तविधानतः।। ४७
अन्यांस्तानधिवासांश्च पूर्ववत्कारयेद्बुधः।
पूर्वेद्युः कारयेद्विद्वान् ध्रुवबेराक्षिमोचनम्।। ४८
'जातवेदस' इत्युक्त्वा लोचने विनिमीलयेत्।
अमन्त्रकं शिल्पिकृतमाचार्यो मन्त्रवच्चरेत्।। ४९
अधिवासान्त्समाप्यैवं श्वभ्रे बिंबानि विन्यसेत्।
सूत्रोक्तेन विधानेन वास्तुहोमं समाचरेत्।। ५०
पुण्याहं वाचयित्वाऽग्रे देवागारस्य मध्यतः।
उक्तलक्षणसम्पन्नं पवित्राधावपूरितम्।। ५१
कुम्भमादाय वेद्यान्तु संस्थाप्यार्चनमारभेत्।
अष्टमङ्गलजातञ्च वर्णचिह्नानि चायुधान्।। ५२
देव्या विशिष्टान् सौवर्णान् दुर्गासुक्तं जपन् क्षिपेत्।
नवरत्नानि चान्यानि क्षिपेत्पूर्वोक्तवत् क्रमात्।। ५३
पूर्वोक्तेन क्रमेणैव आसने सम्यगास्थितः।
ध्यायन् देवीं ततो दुर्गां गुरुरावाहनं चरेत्।। ५४
'आयात्वि' ति मनुं बुद्ध्या ऊहित्वा समुदीरयेत्।
कुम्भं श्वभ्रे बिम्बपार्श्वे न्यसेत्पल्लवभूषितम्।। ५५
कलशैरष्टभिर्देवीं स्नापयेत्तदनन्तरम्।
कुशोदैस्स्नापयेत्पूर्वं पश्चाद्गन्धोदकेन च।। ५६
सिद्धार्थोदैः ततः पश्चात्ततश्च फलवारिभिः।
सर्वौषध्युदकेनाथ पुण्यपुष्पोदकेन च।। ५७

ततो गङ्गाम्भसा चापि तथा जप्योदकेन च।
प्रतिद्रव्यमुपस्नानेनाचरेत्स्नापनं क्रमात्।। ५८
एकाक्षरादिमन्त्रैर्वा दुर्गासुक्तेन वा पुनः।
परिधायाहतैर्वस्त्रैरलङ्कुर्याच्च भूषणैः।। ५९
आलयाभिमुखे कुर्याद्यज्ञालयमलङ्कृतम्।
अग्निकुण्डांश्च परितः शय्यावेदिञ्च मध्यमे।। ६०
कल्पयित्वा विधानेन वेद्यां शय्यां प्रकल्पयेत्।
व्रीहिभिस्तण्डुलैर्वापि वेदिमास्तीर्य चोपरि।। ६१
पञ्चभिश्शयनैरुक्तैर्वस्त्रैः पञ्चभिरेव वा।
उपधानद्वयं मूर्धपादयोरनुयोजयेत्।। ३२
आरोपयेत्तत्र देवीं कक्ष्याक्षुरिकया युताम्।
कुम्भं ततस्समादाय बिम्बपार्श्वे च विन्यसेत्।। ३३
पुण्याहं वाच्य बध्नीयात् कौतुकं शाययेत्ततः।
चक्रञ्च शाययेद्विद्वान् मन्त्रं सौदर्शनं जपन्।। ३४
चक्रमन्त्रेण चान्यानि शाययेदायुधानि च।
देवीमष्टभुजाञ्चापि शाययेदेवमेव वै।। ३५
उत्तराच्छादनं कृत्वा परितो मङ्गलान् न्यसेत्।
व्यजनैर्वीजयन्तीश्च कामिनीः परिकल्पयेत्।। ३६

## प्रधानहोमः

मुहूर्ते परितश्चाग्नीन् अग्निकुण्डेषु साधयेत्।
प्राच्यामाहवनीयञ्च अन्वाहार्यञ्च दक्षिणे।। ३७
गार्हपत्यं प्रतीच्यान्तु आवसत्थ्यं तथोत्तरे।
तस्यैव दक्षिणे पार्श्वे सभ्यकुण्डञ्च कारयेत्।। ३८

आघारञ्च ततः कुत्वा होतारमभिपूज्य च।
होत्रं क्रमेण चाश्राव्य मूर्त्यावाहनमाचरेत्।। ६९
आवाहयेत्पारिषद्यान् निर्वापं होममाचरेत्।
दुर्गासुक्तन्तु जुहुयादावर्त्याष्टशतं ततः। ७०
(वैष्णवं विष्णुसूक्तञ्च ब्राह्मं रौद्रं तथैव च।
जुहुयाद्भौतिकञ्चैव पञ्चवारुणमेव च।। ७१
मूलहोमञ्च कूश्माण्डमन्त्रान् धातादिकान् यजेत्।
सहस्रहोमं सावित्र्या सहस्राहुतिमेव च।। ७२
हुत्वैवन्तु प्रधानाग्नौ यजेत्सर्वत्र वैष्णवम्।
अष्टकृत्वस्तु चरुणा पयसा च तथा यजेत्।। ७३
विष्णुसूक्तेन पालाशसमिद्भिस्सर्ववह्निषु।
हुत्वा स्विष्टकृतं पश्चात्सर्वत्र जुहुयाद्बुधः।। ७४
अन्तहोमं ततः कृत्वा सर्वानग्नीन् विसर्जयेत्।
सभ्यमेकन्तु संरक्षेन्नित्यहोमाय शाश्वतम्।। ७५
सर्वदेवार्चनं कृत्वा रात्रिशेषं ततो नयेत्।

## रत्नन्यासः

पुनः प्रभाते त्वाचार्यः स्थापकाद्यैस्समन्वितः।। ७६
स्नात्वा स्नानविधानेन नित्यकर्माणि चाचरेत्।
रत्नन्यासक्रमेणैव श्वभ्रे रत्नानि निक्षिपेत्।। ७७
क्षत्रियो यजमानश्चेत् नामगोत्रादिविस्तरम्।
सुवर्णरूप्यताम्रादिपट्टेष्वालिख्य तत्र च।। ७८
श्वभ्रे संस्थापयेत्पश्चात् परितः पञ्च चायुधान्।
क्षिपेत्प्रयुञ्जीत गुरुः मङ्गल्यानि बहूनि च।। ७९

राजा स्याद्विजयी तस्य जयस्स्यात् सततं तथा।
आचन्द्रतारार्कमस्य वंशस्तिष्ठति वृद्धिमान्।। ८०
ततः श्रीप्रतिमां तत्र पद्ममध्ये तु स्थापयेत्।
सुवर्णेनैव कृत्वा तु गर्तप्रच्छादनं चरेत्।। ८१
पद्मपत्रैरथाच्छाद्य सुधया परिपूरयेत्।
गर्भन्यासोक्तमार्गेण फेलाश्चात्र प्रकल्पयेत्।। ८२

## स्थापनम

सर्वानेतान् विनिक्षिप्य पीठमध्ये विनिक्षिपेत्।
अनेनैव विधानेन ध्रुवार्चामपि कल्पयेत्।। ८३
यागशालां प्रविश्यातः सुप्तां देवीं प्रणम्य च।
'जातवेदस' इत्युक्ता चोत्थाप्य शयनात्ततः।। ८४
वस्त्रैराभरणैर्माल्यैरलङ्कुर्यान्मनोरमम्।
प्राप्ते मुहूर्ते सभ्याग्नौ पद्मैरष्टशतैर्यजेत्।। ८५
वैष्णवं मन्त्रमावर्त्य होमद्रव्यैर्घृतादिभिः।
कृत्वाऽन्तहोमं सर्वत्र सर्वानग्नीन् विसर्जयेत्।। ८६
यजमानश्च धर्मात्मा आचार्यं पूजयेत्तदा।
वस्त्रोत्तरीयाभरणैः गन्धमाल्यादिभिः क्रमात्।। ८७
गोभूपशुहिरण्याद्यैर्यथोक्तां दक्षिणां ददेत्।
ऋत्विग्भ्यः स्थापकेभ्यश्च दद्यादुक्ताञ्च दक्षिणाम्।। ८८
निष्काधिकं सुवर्णं हि ऋत्विजां दक्षिणा भवेत्।
स्थापनावसरे काले कुम्भमादाय चात्वरः।। ८९
आचार्यश्चाग्रतो गच्छेत् स्थापकास्तदनन्तरम्।
जपन्तश्शाकुनं सूक्तं विम्बमादाय संयताः।। ९०

सर्ववाद्यसमायुक्ता नीत्वा गेहं प्रदक्षिणम्।
गर्भागारं प्रविश्यैव गुरुः कुम्भं विनिक्षिपेत्।। ९१

गुप्ते देशे स्थापकास्तु देवीमादाय चादरात्।
दुर्गासूक्तं जपन्तश्च ध्रुवसूक्तेन सङ्गतम्।। ९२

स्थाने प्रतिष्ठापयेयुः देवीध्यानपरायणाः।
सावित्रादीनि सूक्तानि जपेयुस्तदनन्तरम्।। ९३

आचार्यः पुरतः कुम्भं संस्थाप्याऽऽवाहनं चरेत्।
ध्रुवे पूर्वं समावाह्य कौतुके तत आवहेत्।। ९४

दुर्गाबीजं हृदि न्यस्य न्यसेदन्यानि च क्रमात्।
तथा पारिषदान् स्थाप्य क्रमेणाभ्यर्चयेद्बुधः।। ९५

हवींषि पायसापूपपूर्वाण्यपि निवेदयेत्।
अपेक्षितमनुक्तञ्च विष्णोरुक्तवदाचरेत्।। ९६

कल्पस्साधारणो ज्ञेयः स्थापने चार्चने तथा।
उत्सवे चाङ्गदेवानां सर्वेषां परिकीर्तितः।। ९७

व्यक्तिभेदे देवतानां मूर्तिमन्त्रो विभिद्यते।
विशेषेण तु दुर्गायाः कल्पोऽत्र समुदीरितः।। ९८

यतस्सा देवदेवस्य विष्णोश्शक्तिः श्रुता बुधैः।
यागस्य दक्षिणा जीवो दातव्या दक्षिणा ततः।। ९९

हिरण्यं नववस्त्राणि धनं धान्यमनेकशः।
यथाशक्ति च दातव्या शक्तिं तत्र न गूहयेत्।। १००

यागोपयुक्तद्रव्याणि आचार्याय प्रदापयेत्।
एवं यः कुरुते भक्त्या कामानाप्नोति वाञ्छितान्।। १०१

इति सङ्क्षेपतः प्रोक्तो दुर्गायाः स्थापनक्रमः।

--- --- , --- --- --- ।।

## नित्यार्चनम्

अथ नित्यार्चनं वक्ष्ये दुर्गा देव्या यथाक्रमम्।। १०२
अर्चनार्थांश्च सम्भारन् यथाशक्ति समाहरेत्।
स्नात्वा स्नानविधानेन नित्यकर्माणि चाचरेत्।। १०३
प्रविश्य देवताऽगारं 'जातवेदस' ईरयन्।
गेहं प्रदक्षिणं गत्वा प्रणम्य द्वारपालिके।। १०४
उद्घाट्य च कवाटौ तु प्रणमेच्चैव देवताम्।
घण्टां सन्ताड्य निर्माल्यं शोधयेन्मन्त्रपूर्वकम्।। १०५
निर्माल्यैश्शोधितैरर्चेत्ततो निर्माल्यधारिणीम्।
वदन् 'जयाञ्च सुखदामानन्दां भोगदायिनीम्'।। १०६
'धारास्वि' त्यादिना तोयमप्पवित्रेण शोधयेत्।
सुगन्धैर्द्रव्यनिचयैर्भावयेत्तीर्थमुत्तमम्।। १०७
'इदमाप' स्समुच्चार्य तीर्थं तदभिमन्त्रयेत्।
'भूरानिलय' मन्त्रेण देवीं संस्नापयेत्ततः।। १०८
'भूरसि भू' रिति वदन् जीवस्थाने च स्थापयेत्।
धात्रादीन् पूर्वमभ्यर्च्य पश्चाद्देवीं समर्चयेत्।। १०९
पञ्चशुद्धिञ्च कार्त्स्न्येन हेरेरिव समाचरेत्।
यद्रूपा वर्तते देवी तद्रूपां मनसा स्मरेत्।। ११०
आत्मानं तां स्पृशन् ध्यायेद्दक्षिणं पार्श्वमाश्रितः।
'भूः प्रपद्य' इति ध्यायन् देवीं तां सम्प्रणम्य च।। १११
'आयातु भगवती' देवी 'ध्वजिनी हंसवाहिनी।
सेनावरूधिनी दुर्गे' त्यावाहनमथाचरेत्। ११२
ततः पुष्पासनं 'दद्यादस्त्वासन' मिति ब्रुवन्।
'सुस्वागतं' समुच्चार्य स्वागतं समुपाचरेत्।। ११३

सर्ववाद्यसमायुक्ता नीत्वा गेहं प्रदक्षिणम्।
गर्भागारं प्रविश्यैव गुरुः कुम्भं विनिक्षिपेत्।। ९१
गुप्ते देशे स्थापकास्तु देवीमादाय चादरात्।
दुर्गासूक्तं जपन्तश्च ध्रुवसूक्तेन सङ्गतम्।। ९२
स्थाने प्रतिष्ठापयेयुः देवीध्यानपरायणाः।
सावित्रादीनि सूक्तानि जपेयुस्तदनन्तरम्।। ९३
आचार्यः पुरतः कुम्भं संस्थाप्याऽऽवाहनं चरेत्।
ध्रुवे पूर्वं समावाह्य कौतुके तत आवहेत्।। ९४
दुर्गाबीजं हृदि न्यस्य न्यसेदन्यानि च क्रमात्।
तथा पारिषदान् स्थाप्य क्रमेणाभ्यर्चयेद्बुधः।। ९५
हवींषि पायसापूपपूर्वाण्यपि निवेदयेत्।
अपेक्षितमनुक्तञ्च विष्णोरुक्तवदाचरेत्।। ९६
कल्पस्साधारणो ज्ञेयः स्थापने चार्चने तथा।
उत्सवे चाङ्गदेवानां सर्वेषां परिकीर्तितः।। ९७
व्यक्तिभेदे देवतानां मूर्तिमन्त्रो विभिद्यते।
विशेषेण तु दुर्गायाः कल्पोऽत्र समुदीरितः।। ९८
यतस्सा देवदेवस्य विष्णोश्शक्तिः श्रुता बुधैः।
यागस्य दक्षिणा जीवो दातव्या दक्षिणा ततः।। ९९
हिरण्यं नववस्त्राणि धनं धान्यमनेकशः।
यथाशक्ति च दातव्या शक्तिं तत्र न गूहयेत्।। १००
यागोपयुक्तद्रव्याणि आचार्याय प्रदापयेत्।
एवं यः कुरुते भक्त्या कामानाप्नोति वाञ्छितान्।। १०१
इति सङ्क्षेपतः प्रोक्तो दुर्गायाः स्थापनक्रमः।

--- --- --- --- --- ।।

## नित्यार्चनम्

अथ नित्यार्चनं वक्ष्ये दुर्गादेव्या यथाक्रमम्।। १०२
अर्चनार्थांश्च सम्भारन् यथाशक्ति समाहरेत्।
स्नात्वा स्नानविधानेन नित्यकर्माणि चाचरेत्।। १०३
प्रविश्य देवताऽगारं 'जातवेदस' ईरयन्।
गेहं प्रदक्षिणं गत्वा प्रणम्य द्वारपालिके।। १०४
उद्घाट्य च कवाटौ तु प्रणमेच्चैव देवताम्।
घण्टां सन्ताड्य निर्माल्यं शोधयेन्मन्त्रपूर्वकम्।। १०५
निर्माल्यैश्शोधितैरर्चेत्ततो निर्माल्यधारिणीम्।
वदन् 'जयाञ्च सुखदामानन्दां भोगदायिनीम्'।। १०६
'धारास्वि' त्यादिना तोयमप्पवित्रेण शोधयेत्।
सुगन्धैर्द्रव्यनिचयैर्भावयेत्तीर्थमुत्तमम्।। १०७
'इदमाप' स्समुच्चार्य तीर्थं तदभिमन्त्रयेत्।
'भूरानिलय' मन्त्रेण देवीं संस्नापयेत्ततः।। १०८
'भूरसि भू' रिति वदन् जीवस्थाने च स्थापयेत्।
धात्रादीन् पूर्वमभ्यर्च्य पश्चाद्देवीं समर्चयेत्।। १०९
पञ्चशुद्धिञ्च कार्त्स्न्येन हेरेरिव समाचरेत्।
यद्रूपा वर्तते देवी तद्रूपां मनसा स्मरेत्।। ११०
आत्मानं तां स्पृशन् ध्यायेद्दक्षिणं पार्श्वमाश्रितः।
'भूः प्रपद्य' इति ध्यायन् देवीं तां सम्प्रणम्य च।। १११
'आयातु भगवती' देवी 'ध्वजिनी हंसवाहिनी।
सेनावरूधिनी दुर्गे' त्यावाहनमथाचरेत्। ११२
ततः पुष्पासनं 'दद्यादस्त्वासन' मिति ब्रुवन्।
'सुस्वागतं' समुच्चार्य स्वागतं समुपाचरेत्।। ११३

'अनुमन्यस्व' मन्त्रेण अनुमान्य सुरेश्वरीम्।
'विराज' इति मन्त्रेण दद्यात्पाद्यं शुभं जलम्।। ११४
'आपो हि ष्ठे' ति मन्त्रेण दद्याच्चाचमनीयकम्।
'इमास्सुमनस' इति पुष्पं दद्याद्यथोदितम्।। ११५
'इमे गन्धा' इति ब्रुवन् गन्धं दद्यान्मनः प्रियम्।
'बृहस्पति' रिति प्रोच्य धूपमादाय धूपयेत्।। ११६
'शुभ्राज्योति' रिति प्रोच्य दीपं सन्दर्शयेत्ततः।
'हिरण्यगर्भ' इत्युक्ता युक्तमर्घ्यं निवेदयेत्।। ११७
दद्यादाचमनीयञ्च पूर्वोक्तमनुना बुधः।
'अभित्वा शूर' इत्युक्त्वा स्नापयेच्छुद्धवारिणा।। ११८
'मित्रस्सुपर्ण' इत्युक्ता प्लोतेन विमृजेत्ततः।
'तेजो वत्स्याव' इति च दद्याद्वस्त्रं सुशोभनम्।। ११९
उत्तरीयं ततो दद्या त्सोमस्ये' त्यादि तु ब्रुवन्।
'भूतो भूतेषु' मन्त्रेण दद्यादाभरणं ततः।। १२०
पाद्यामाचमनं पुष्पं गन्धं दद्यादथाञ्जनम्।
'यदाञ्जन' मिति प्रोक्तो मन्त्र अञ्चनकर्मणि।। १२१
'देवस्य त्वे' ति मन्त्रेण आदर्शञ्चापि दर्शयेत्।
ततो दद्याद्धूपदीपौ हविरादाय पायसम्।। १२२
मौद्गिकं वा यथालाभं 'सुभूस्स्वय' मिति ब्रुवन्।
निवेदयेन्मूर्त्रिमन्त्रैर्नित्यहोमञ्च हावयेत्।। १२३
बलिं दद्यात्तोयपूर्वं सर्वेषां बलिकाङ्क्षिणाम्।
प्रातरर्घ्यबलिं वाथ गन्धपुष्पाक्षताम्बुभि।। १२४
हविर्बलिन्तु मध्याह्ने दधिमण्डसमायुतम्।
दद्यादपूपसुबलिं सायमेवं बलिक्रमः।। १२५
प्रक्षाल्य पादावाचम्य प्रविशेद्गर्भमन्दिरम्।

पानीयाचमने दत्वा ताम्बूलं दक्षिणां ददेत्।। १२६
उपचारप्रसङ्गे तु मन्त्रान्ते तु पृथक् पृथक्।
मूर्तिमन्त्रांश्च संयोज्य चतुर्थ्यन्तान् समर्चयेत्।। १२७
मीर्तिमन्त्रक्रमं वक्ष्ये दुर्गादेव्यर्चनाविधौ।
'दुर्गां कात्यायनीञ्चेति वैष्णवीं विन्ध्यवासिनीम्'।।१२८
इति त्वभ्यर्चयेद्देवीं परिवारांस्ततोऽर्चयेत्।
'रमां प्रीतिं पवित्रीञ्च तथा पद्मासना' मिति।। १२९
रमां दक्षिणतोऽभ्यर्च्य उमां वामे समर्चयेत्।
'उमाञ्च पार्वतीञ्चेति रुद्रपत्नीं सुखप्रदाम्'।। १३०
ततोऽर्चयेदाङ्गिरसं मृकण्डुञ्चेति पूजकौ।
'तपोनिधिञ्चाङ्गिरसमग्निवर्णं तपोमयम्'।। १३१
'मृकण्डुं मुनिमुख्यञ्च तापसञ्च पुरातनम्'।
नन्दगोपं यशोदाञ्च पार्श्वयोरर्चयेद्द्वयोः।। १३२
अभ्यन्तरद्वारदेशे देवीवीक्षणतत्परौ।
अर्चयेच्चित्ररूपौ तु तत्तद्वर्णाम्बरौ वरौ।। १३३
स्वनामसंयुतौ पूज्यौ देव्यास्तु पितरौ हि तौ।
'गङ्गाञ्च पावनीञ्चेति पुण्यां त्रिपथगामिनीम्'।। १३४
इति गङ्गां द्वारदेशे दक्षिणेऽभ्यर्च्य वामतः।
'युमनाञ्च नदीमुख्यां नीलवर्णां यशस्विनीम्'।। १३५
अर्चये 'ददितिं पुण्यां तथा दाक्षायणीमिति।
देवमातर' मित्युक्त्वा द्वितीयद्वारदक्षिणे।। १३६
अदितिं वामपार्श्वे तु 'दितिञ्चासुरमातरम्।
प्रजावतीमिति तथा कश्यपस्य प्रिया' मिति।। १३७

'मृगेन्द्रं मृगराजञ्च महानादं महाबलम्'।
इति सोपानमध्ये तु वाहनं सम्यगर्चयेत्।। १३८
शैषिकीञ्च जयत्सेनामर्चयेदुक्तमूर्तिभिः।
न्यक्षादिलोकपालांश्च स्वस्वमूर्तिभिरर्चयेत्।। १३९
'उग्रसेनं महावीर्यं शूलपाणिं सुरप्रियम्'।
'जयन्तं धर्मनिष्ठञ्च दण्डहस्तं तथैव च।। १४०
यक्षमुख्य' मिति द्वारे तृतीये द्वारपालकौ।
'कुम्भोदरं महाभूतं दुर्गाभक्तं बलोत्कटम्'।। १४१
इति कुम्भोदरञ्चैव पुष्पाद्यर्घ्यान्तमर्चयेत्।
अर्चनान्तेऽर्चको देवीं प्रणण्य सुसमाहितः।। १४२
यजमानर्द्धिमुद्दिश्य देव्यै तं विनिवेदयेत्।
यथाशक्ति स्तुतिपदैः स्तुत्वा नत्वा पुनः पुनः।। १४३
अनुज्ञां प्रार्थ्य गन्तुं वै रक्षां देव्या विधाय च।
गृहं गच्छेदर्चकश्च देवीं ध्यायन्निरामयम्।। १४४
मार्गमेनं समुल्लङ्घ्य यः कुर्यात्काममार्गतः।
नोक्तं स फलमाप्नोति विपरीतञ्च विन्दति।। १४५

## स्नपनम्

अथातस्स्नपनं वक्ष्ये दुर्गादिव्यास्समासतः।
अङ्कुरानर्पयित्वा तु सम्भारानुपकल्प्य च।। १४६
स्नानालयेऽष्टौ कलशान् विन्यसेत्सूत्रवेष्टितान्।
पद्मकिञ्जल्कसङ्घातवासितांम्बु न्यसेत् पुरः।। १४७
मधुमिश्रं घृतञ्चैव क्षीरञ्चैवाक्षतोदकम्।
बिल्वपल्लवतोयञ्च कुशोदकमतः परम्।। १४८

गन्धोदकञ्च कर्पूरोद्धततैलं परिष्कृतम्।
तैलालाभे तु कर्पूरभावितोदकमाहरेत्।। १४९
व्रीहिभिस्तण्डुलैर्वापि पङ्क्तिं कृत्वा च तत्र वै।
ऐन्द्राद्यैशान्यपर्यन्तं क्रमेण कलशान्न्यसेत्।। १५०
उपस्नानेषु तावत्सु गङ्गाञ्चैव समर्चयेत्।
दिक्पालकान् जयादींश्च यथास्थानं समर्चयेत्।। १५१
स्नापनात्पूर्वरात्रौ तु सन्न्यस्यैवं विधानतः।
कलशानामुत्तरस्यां दिशि शय्यां प्रकल्पयेत्।। १५२
रात्रिपूजासमाप्तौ तु देवीमादाय सादरम्।
आरोपयेच्च शयने कौतुकं बन्धयेत्तदा।। १५३
पूजयित्वा च पङ्क्तीशं शयने सोपधानके।
शाययेच्च ततो देवीं रात्रिशेषञ्च नाययेत्।। १५४
अलङ्कृते च द्वे कन्ये वीजनाय नियोजयेत्।
रात्रिं नयेन्नृत्यगीतवाद्याद्यैरुदयावधि।। १५५
पुनः प्रभाते त्वाचार्यः देवीमुत्थाप्य चादरात्।
उत्सवं परिकल्प्यैव ग्रामं कुर्यात्प्रदक्षिणम्।। १५६
निशाचूर्णैः कुङ्कुमेन देवीमभ्युक्ष्य वै जलैः।
निमज्ज्य विकिरेच्छेषं भक्तानां मूर्ध्नि पावनम्।। १५७
रथे वा शिबिकायां वा देवीमारोप्य वै गजे।
रथ्यास्संशोध्य सर्वत्र कुर्याद्ग्रामप्रदक्षिणम्।। १५८
समर्चयेच्च विधिना सर्वसम्पत्समृद्धये।
फलैर्मूलैस्तथा पुष्पैरपक्वान्नैः निवेदयेत।। १५९
एवं प्रदक्षिणं नीत्वा आलयं सम्प्रवेश्य च।
स्नानपीठे तु संस्थाप्य स्नपनं सम्यगाचरेत्।। १६०

सावित्रीमन्त्रमुच्चार्य कलशानुद्धरेत्तदा।
द्वर्गासूक्तोक्तमन्त्रैस्तु चतुर्भिः प्रोक्ष्य वै पृथक्।। १६१
पूर्वार्धैरुत्तरार्धैस्तु स्नपनञ्च समाचरेत्।
सर्वोपस्नानकलशैः पञ्चम्या स्नापयेदृचा।। १६२
प्रतिद्रव्यं तथाऽर्घ्यान्तं घण्टां सन्ताड्य चार्चयेत्।
स्नानपीठात्समादाय संस्थाप्य परमासने।। १६३
उष्णोदैः शुद्धतोयेन बिम्बशोधनमाचरेत्।
प्लोतेन च विमृज्यैव वस्त्राभरणधातुभिः।। १६४
अलङ्कृत्य यथाशक्ति सेवां देव्यास्समादिशेत्।
प्राणस्थाने प्रतिष्ठाप्य नित्यार्चामथचाचरेत्।। १६५
हीनकालहविर्भिश्च पार्थक्येन समाचितैः।
विशेषतस्सन्निवेद्य प्रणामान्तं समर्चयेत्।। १६६
देव्यास्स्नपनकालन्तु श्रृणुत द्विजसत्तमाः।
अयनान्ते तथाऽद्वान्ते ग्रहणे सोमसूर्ययोः।। १६७
यजमानस्य जन्मर्क्षे राजजन्मदिने तथा।
दुर्गापञ्चकवारेषु मासि मासि विशेषतः।। १६८
उत्पन्नेषु निमित्तेषु अनावृष्ट्यादिकेषु च।
विधिना स्नपनं देव्याः कारयेत्सर्वसिद्धये।। १६९
चतुर्दशी द्वे नवमी द्वे तारा कृत्तिका इति।
दुर्गापञ्चदिनं प्रोक्तमृषिभिस्तत्वदर्शिभिः।। १७०
स्नपनं कारयेत्तत्र यजमानस्समाहितः।
आचार्यमृत्विग्भिस्साकं वरयित्वाऽभिपूजयेत्।। १७१
शान्तिकं पौष्टिकञ्चेति तृतीयञ्चाभिचारिकम्।
त्रिविधं सर्वकर्म स्यात्स्नपनञ्च तथा भवेत्।। १७२

आचार्यः केवलं कुर्याच्छान्तिकञ्चैव पौष्टिकम्।
आभिचारस्नापनन्तु न कदापि समाचरेत्।। १७३
यदि शत्रुविनाशार्थं यजमानश्चिकीर्षति।
तन्नानुमन्येताऽऽचार्यः शान्तिकं पौष्टिकं विना।। १७४
सर्वेषामेव देवानां दुर्गापूजा हिताभवेत्।
दुर्गायाः पूजनात्पूर्वमसुरानजयन्त्सुराः।। १७५
अत्रानुक्तञ्च यत्सर्वं प्रायश्चित्तादिकं बुधः।
हरेरुक्तविधानेन यजमानस्समाचरेत्।। १७६

## उत्सवः

अतः परं प्रवक्ष्यामि दुर्गायाश्चोत्सवं क्रमात्।
प्रतिष्ठान्ते तथा कुर्याद्दुर्गापञ्चदिनेषु च।। १७७
नृपस्य जन्मदिवसे तथा शुभसमागमे।
उग्रे निमिते चोत्पन्ने यजमानस्य जन्मभे।। १७८
विषुवायनसङ्क्रान्तिकालेषूत्सवमाचरेत्।
नवाहमथ सप्ताहं पञ्चाहं त्रियहन्तु वा।। १७९
द्व्यहञ्चैव तथैकाहं सङ्कल्प्योत्सवमाचरेत्।
त्रिगुणीकृत्योत्सवाहस्सङ्ख्यमादौ समृद्धये।। १८०
ध्वजस्यारोहणं कुर्यान्मुहूर्ते मङ्गलप्रदे।
एकाहद्व्यहयोर्वै नोत्सवयोरङ्कुरध्वजौ।। १८१
(ध्वजार्थं चम्पकं वेणुं क्रमुकं वा समाहरेत्।
सलक्षणं तरुमृजुं तद्विमन्त्रसमायतम्।। १८२
पादाधिकं पादहीनं गृह्णीयादर्धमेव वा।
यथालाभपरीणाहं ध्वजदण्डं प्रशस्यते)।। १८३

ध्वजवस्त्रं यथालाभविस्तारायतमाहरेत्।
तन्मध्ये सिंहमालिख्य छत्रचामरसंयुतम्।। १८४
प्रतिष्ठोक्तप्रकारेण ध्वजसंस्कारमाचरेत्।
आलयात्प्रमुखे वाऽथ दक्षिणे वाऽथ मण्डपम्।। १८५
प्रपां का समलङ्कृत्य वितानाद्यैर्विशेषतः।
धूपदीपादिभिः पूर्णकुम्भाङ्कुरमुखैस्ततः।। १८६
तण्डुलैर्व्रीहिभिश्चापि पीठं तत्र प्रकल्प्य च।
तस्य मध्ये तु संस्थाप्य तत्र सिंहध्वजं क्रमात्।। १८७
सेनान्यञ्च जयत्सेनां वृषभं तत्र चार्चयेत्।
भेरीं न्यस्य समभ्यर्च्य पुण्याहमपि वाचयेत्।। १८८
उक्तैः परिवृतैस्सर्वैराचार्यः शिष्यसंयुतः।
सर्ववाद्यसमायुक्तः बलिनिर्वापणाय वै।। १८९
ग्रामप्रदक्षिणं नीत्वा सन्धौ सन्धौ समाहितः।
दिगीशेभ्यो बलिं दद्यात् घोषयेत्पटहादिभिः।। १९०
गद्यैः पद्यैस्समाघोष्य ध्वजस्थानं प्रवेशयेत्।
(गर्तं कृत्वा शनैर्विद्वान् चतुस्तालप्रमाणतः)।। १९१
धिष्ण्याधारे च दण्डाग्रे ध्वजयष्टिं निधाय च।
संस्थापयेद्ध्वजं तत्र दुर्गासूक्तं समुच्चरन्।। १९२
वेदिन्तु परितः कुर्याद्दाढ्यार्थं सुधया ततः।
हस्तमात्रसमुत्सेधां तावद्विस्तारसंयुताम्।। १९३
ध्वजदारौ समासोप्य सिंहध्वजपटं क्रमात्।
निवेदयेत्पायसान्नं यावत्स्यादवरोहणम्।। १९४
आलयाद्दक्षिणे पार्श्वे कूटमेकं प्रकल्पयेत्।
प्राक्पश्चिमायतञ्चार्धविस्तृतं दशहस्ततः।। १९५

चतुर्द्वारसमायुक्तं द्वादशस्तम्भसंयुतम्।
प्रपां तथाविधां वापि पार्श्वे कुर्यात्तु दक्षिणे।। १६६

वेदिकां कारयेत्तत्र चतुर्हस्तां चतुर्दिशम्।
तालमात्रसमुत्सेधां दर्पणोदरसन्निभाम्।। १६७

औपासनविधानेन प्राच्यामग्निं प्रकल्पयेत्।
द्वारेषु पूर्णकुम्भाद्यैः कदलीक्रमुकाङ्कुरैः।। १६८

अलङ्कुर्यात्पताकाभिः मुक्तादामभिरेव च।
दर्भमालाभिरन्तश्च भूषयेद्विविधैर्गृहम्।। १६६

वितानैरूर्ध्वमाच्छाद्य वस्त्रैः स्थूणाश्च वेष्टयेत्।
उत्सवादिदिने सायं मृदं गृह्याङ्कुरं चरेत्।। २००

अग्निमाधाय जुहुयान्मूर्तिमन्त्रसमन्वितम्।
दुर्गासूक्तेनर्चयित्वा देवीं भूतबलिं ददेत्।। २०१

राजधान्यामिन्द्रबलिं प्रमुखे राजवेश्मनः।
दद्यात्तथाऽऽयुधागारे श्रियै देव्यै बलिं क्षिपेत्।। २०२

वायव्ये चाश्वशालायां गजस्थाने विवस्वते।
उत्सवोक्तेन विधिना बलिं सर्वत्र निक्षिपेत्।। २०३

आस्थाने स्थापयेद्देवीं सर्वाभरणभूषिताम्।
चित्रकक्ष्यादिभिश्चैव अलङ्कुर्याद्यथोचितम्।। २०४

पञ्चायुधानि च न्यसेत्पार्श्वयोरुभयोरपि।
एलालवङ्गकर्पूरैर्मुखवासं निवेदयेत्।। २०५

अनुमान्य ततो देवीं नेयाद्ग्रामं प्रदक्षिणम्।
सर्ववाद्यसमायुक्तं नृत्तगीतसमन्वितम्।। २०६

रथं गजं हयं वाऽऽन्दोलिकां वा शिबिकां तथा।
आरोप्य देवीं गच्छेयुः पञ्चायुधपुरस्सरम्।। २०७

छत्रचामरपिञ्छैश्च पताकाभिर्ध्वजैस्तथा।
अलङ्कारैस्तथाऽन्यैश्च धूपदीपादिकैस्तथा।। २०८
नीत्वा प्रदक्षिणं ग्राममालयञ्च प्रवेशयेत्।
गन्धोदकैश्च संस्नाप्य पूजयेदष्टविग्रहैः।। २०९
जीवस्थाने प्रतिष्ठाप्य सन्ध्यापूजां समाचरेत्।
आस्थाने वेदिपार्श्वे तु स्थापयेदायुधानि तु।। २१०
प्रातः कालार्चनं कृत्वा प्रातरुत्सवमाचरेत्।
होमञ्चापि तथा कुर्यात्सायमुत्सवमाचरेत्।। २११
उत्सवाहस्सु सर्वेषु अयमेवोत्सवक्रमः।
तीर्थाहःपूर्वरात्रौ तु रात्रिपूजां समाप्य च।। २१२
बद्ध्वा प्रतिसरं देवीं शयने शाययेन्निशाम्।
नयेन्नृत्यैश्च गानैश्च वेदघोषादिभिस्तथा।। २१३
प्रातस्तीर्थदिने कुर्यात्पूर्वोक्तं बलिमेव च।
आस्थाने स्थापयेद्देवीं सर्वालङ्कारसंयुताम्।। २१४
ग्रामप्रदक्षिणं कृत्वा पुनरास्थानमाव्रजेत्।
हारिद्रेणैव चूर्णेन देवीं चक्रञ्च स्नापयेत्।। २१५
चूर्णशेषञ्च भक्तेभ्यो दद्यात्पापापनुत्तये।
ग्रामप्रदक्षिणं कृत्वा तीर्थस्थानं प्रवेशयेत्।। २१६
नद्यां वाऽथ तटाके वा तीरे कृत्वा प्रपां शुभाम्।
तन्मध्ये वेदिकां कृत्वा अलंङ्कृत्य विशेषतः।। २१७
देवीन्तु पश्चिमे तत्र स्थापयेद्वेदिकातटे।
व्रीहिभिस्तण्डुलैश्चापि संस्तीर्यात्र च विन्यसेत्।। २१८
कलशान् पञ्च मध्यादि प्रदक्षिणक्रमेण वै।
पद्मोदकं कुशोदञ्च गन्धोदञ्चाक्षतोदकम्।। २१९

फलोदकञ्च सम्पूर्य तन्मन्त्रैश्चाभिमन्त्रयेत्।
वस्त्रैरावेष्ट्य तांत्सर्वांस्तत्तद्द्रव्यैश्च पूरितान्।। २२०

द्रव्याधिपांत्समभ्यर्च्य पाद्याद्यर्घ्यान्तमेव च।
'आपो हिष्ठा' दिभिर्मन्त्रैरब्लिङ्गैः प्रोक्षणं चरेत्।। २२१

स्नापयेत्पञ्चतोयेन 'जातवेदस' ईरयन्।
चतुर्भिः शिष्टकलशैर्मन्त्राञ्छिष्टान्त्समीरयन्।। २२२

संस्नापयेत्क्रमेणैव तीर्थे चैव निमज्जयेत्।
चक्रञ्च स्नापयेत्पश्चादलङ्कुर्याद्यथोचितम्।। २२३

ततश्चालयमानाय्य स्नानपीठे निवेश्य च।
कलशैस्स्नापयेद्देवीं चतुर्विंशतिभिस्तदा।। २२४

स्नपनान्ते समभ्यर्च्य प्रभूतञ्च निवेदयेत्।
मुखवासं ततो दद्यात्कर्पूरैलादिसंयुतम्।। २२५

सन्ध्यापूजां ततः कुर्यान्नित्यपूजाविधानतः।
अत्रानुक्तञ्च यत्सर्वं हरेरिव समाचरेत्।। २२६

यस्माद्भगवती दुर्गा हरेरंशसमुद्भवा।
यजमानः प्रसन्नात्मा वस्त्रहेमाङ्गुलीयकैः।। २२७

शक्तितो दक्षिणां दद्यादाचार्याय नयान्वितः।
ऋत्विजामपि सर्वेषां भक्त्या निष्काधिकं पृथक्।। २२८

यज्ञेऽस्मिन् विधिवद्देव्या उपयुक्तं परिच्छदम्।
देयमाचार्याय सर्वं भक्त्या वै फलकांक्षिणा।। २२९

स्रुक्स्रुवादीनि सर्वाणि जले वै विसृजेत्पुनः।
ध्वजस्थानं समासाद्य ध्वजदेवं प्रणम्य च।। २३०

मुद्गान्नं विनिवेद्यैव बलिद्रव्यं प्रगृह्य च।
यत्र यत्र बलिस्थानं तत्र तत्र च घोषयेत्।। २३१

ग्रामरथ्यासु सर्वासु सन्धौ सन्धौ तथैव च।
शून्यालयेषु सर्वेषु चैत्यवृक्षेषु वै तथा।। २३२
वापीकूपतटाकादौ बलिं दद्याद्विधानतः।
स्नात्वाऽऽलयं सम्प्रविश्य ध्वजं तमवतारयेत्।। २३३
भक्त्या तु कुरुते यस्तु दुर्गायाश्च महोत्सवम्।
सर्वान् कामानवाप्नोति तथा शत्रून् जयिष्यति।। २३४
काले वर्षति पर्जन्यस्सस्यवृद्धिर्भविष्यति।
यानवाहनपश्वादिसमृद्धिश्च भविष्यति।
इति सङ्क्षेपतः प्रोक्तो दुर्गाया उत्सवक्रमः।। २३५

----------

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
खिलाधिकारे दुर्गाकल्पः

----------

